Vol. XVIII. 1935-36.

१८५७ शाकीय १८श-वर्षस्य

# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्




सम्पादकः—

श्रीक्षितीशचन्द्र-चट्टोपाध्यायः

सहकारिसम्पादकः—

श्रीउपेन्द्रमोहन-सांख्यतीर्थः

संस्कृत-साहित्य-परिषत्,
श्यामबाजार, कलिकाता।

वार्षिकमूल्यम्—३) रूप्यकत्रयम्
Foreign price—7s

# संस्कृतसाहित्यपरिषत्पत्रिकाया अष्टादशवर्षीया सूची

[ वर्णसमाम्नायानुसारिणी ]

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| May, 1935. | १८५७ शकीये वैशाखे<br>१८श-वर्षस्य १म-संख्या | Vol. XVIII No. 1 |


## महाकोसलप्रशस्तिकार-कविकदम्बकीर्तनम्

[ निबन्धकः—एलु पाण्डेयशर्मा ]

चित्रोत्पलाचुम्बितचारुदेशे श्रीकोसले स्वर्णपुरे च रम्ये।
ये कोविदाः सत्कविवृन्दयुक्ताः सन्ति स्म तेषामिह कीर्तिगानम् ॥

ईशानः ( चिन्तातुराङ्कः )

Circa 700 A. D.

**ईशानः**[1] कविराजपण्डितरविर्बालार्जुनख्यातिदः
श्रील-श्रीपुरगर्वगौरवशाशी चित्रोत्पला-चारणः।

---

ईशानः lived at Sripur—the capital of Mahakosala. He has immortalised महाशिव बालार्जुन son of queen Vāsatā, who was the daughter of श्रीसूर्यवर्म्मा.

"इति वः प्रशस्तिकारः कविः स चिन्तातुराङ्क ईशानः।
यत्पालकार्थमर्थयति पार्थिवास्तां स्थितिं श्यात ॥"

*Epi. Ind. Vol XI.* The Sripur stone inscription of Mahā-Śiva Gupta.

भट्टभास्करः

Circa 700 A. D.

भट्टाख्यः श्रुतिमान् मनीषितिलको धीभास्करो **भास्करो**[2]

यस्य श्रीभवदेवराजकमलं दिव्यैः करैः कान्तिमन ॥

श्रीकृष्णदण्डी

Circa 700 A. D-

वैद्य**श्रीकृष्णदण्डी**[3] कुशलकविवरः सज्जनः शम्भुभक्तः

काव्यानन्दप्रमत्तो हरचरितरसास्वादने दत्तचित्तः ।

कोसलेन्द्रः ययातिराजदेवः

Circa 800 A. D.

भूपालः कोसलेन्द्रो विधुकुलतिलकः **श्रीययातिः**[4] प्रसिद्धः ।

वाग्देवीपादसेवी बुधसुजनसखः श्रीकलिङ्गत्रयीशः ॥

महानदीमण्डितमञ्जुभूमौ

पुरे विनीताभिध आदिपीठे ।

ताम्रं प्रशस्तिं विशदां चकार

श्रीकोसलेन्द्रो नृपतिर्**ययातिः** ॥

---

2 *J. R. A. S.* 1905 p. 624.

सद्वर्णा जातिसुभगा विद्वन्मधुकरप्रिया

कृता भास्करभट्टेन प्रशस्तिः स्रगिवोज्ज्वला ॥

*Inscription of Bhavadeva Raṇakesarin.*

3 *The Indian Antiquary*—June 1889,

प्रशस्तिमतनोदेतां वैद्यश्रीदेवदण्डिनः ।

श्रीकृष्णादण्डी तनयो नयप्रणयकेतनम् ॥

*Sripur Inscription of Śiva Gupta* (Bālārjuna) giving his genealogy.

प्रणीतं कोसलेन्द्रेण प्रतिबोध्य महत्तमम् ।

श्रीदत्तपुण्डरीकाक्षः शासनं ताम्रनिर्मितम् ॥

चित्रोत्पलाचरणचुम्बितचारुभूमौ
पुर्य्यां कलिङ्गविषयेषु **ययाति**नाम्न्याम् ।
ताम्रे चकार रचनां नृपतिर्**ययातिः**
श्रीकोसलेन्द्र इति नामयुतः प्रसिद्धः ॥

श्रीसिंहदत्तः

Circa 800 A. D.

भूपो भीमरथो महाभवयुतो गुप्ताभिधान्तो नर
आस्तेऽत्यन्तसुखे ययातिनगरे चित्रोत्पलाचुम्बिते ।
यस्य क्ष्मापरिपालने नयगुणे सोऽयं महाकोसले
प्रख्यातो धृतसान्धिविग्रहपदः श्री**सिंहदत्तः**[5] कृती ॥

सुमङ्गलदत्तः

Circa 800 A. D.

वन्द्यो दत्त**सुमङ्गलः**[6] सुनिपुणः श्रीतारदत्तात्मजो
यस्मै कीर्तिमदात् सुमञ्जुलशिलालेखः शिवस्यालये ।

श्रीनारायणः

Circa 1200 A. D.

"श्रीरामाभ्युदयाभिधं रसमयं काव्यं" कृतं येन वै
[7] श्री**नारायण**सत्कविर्विजयते गोपालवीरप्रियः ॥

5 Katak Plates of the 3rd year of Mahābhava-Gupta II—Bhaimratha. *Epi. Ind.* III. p. 355.

गेनात्यन्तगुरावरात्रिपगुरुः प्रज्ञाभिमानैर्जितो
राज्ञा रोपितराज्यभारमतुलं यश्चावहल्लीलया ।
यस्यासीन्नयविक्रमद्वयमपि(?) श्रेयान् सखा सर्वदा
स श्रेयान् धृतसान्धिविग्रहपदः श्रीसिंहदत्तः कृती ॥
श्रीतारदत्ततनयः प्रथितः ( पृथिव्यां )
श्रीमान् सुमङ्गल इमामकरोत्प्रशस्तिम् ॥

Sripur Gandharveswar temple inscription No. 3. *C. P. Inscription* p. 98.

श्रीवत्सचरणाब्जपूजनमतिर्नारायणः सत्कविः
श्रीरामाभ्युदयाभिधं रसमयं काव्यं सतां व्यधात् ।

गन्धर्वेश्वरपादपद्मजसुधासक्तेन वै केनचिद्
दिव्ये धाम्नि सदाशिवस्य रुचिरे काव्यं कृतं प्रस्तरे ।
मालापुष्पसुगन्धचन्दनसमा शब्दावली निर्मला
स्वानन्दं वितनोति सत्कविकुले श्रीकोसले श्रीपुरे ॥
रेवातटे रत्नपुरे च रम्ये तुम्माणराज्ये तलहारिमण्डले ।
महानदी-वारिविधौतदेश एते पुरा सत्कवयो बभूवुः ॥

अल्हणकविः ( हैहय-काल )
Circa 1000 A. D.

गर्गेश्वरः सुकविरल्हण[8] ईशभक्तस्तु-
तुम्माणदेशपतिराजसभाप्रधानः ।
बङ्केश्वरस्य गुणकीर्त्तनपुण्यधामा
विद्यानिधिः सकलकोसलकाव्यचन्द्रः ॥

कीर्तिधर-वत्सराज-धर्मराज
मामे-रत्नसिंह-सुरगण-( देवगण )

विद्वान् श्रीवत्सराजो[9] नृपतिगुणकथागायकः कीर्तिसूनुस्
तत्पुत्रो धर्मराजो[9] निपुणकविवरश्चन्द्रचूडस्य भक्तः ।

---

स्मृत्यारूढयदीयवाक्यरचनाप्रादुर्भवन्निर्भर-
प्रेम्णोद्भासितचित्तवृत्तिरभवद् वाग्देवता बह्लकीम् ॥

Prijaripali inscription of Gopāla (vīra) Deva *C.P. inscription* p. 181.

8 Amoda Plates of the Haihaya King पृथ्वीदेव (प्र॰ ?) *Epi. Ind.* Vol XIX p. 81.

गग्गेश्वरः सुकविरल्हण ईशभक्तस्ताम्रे चकार रचनां × ×
*Epi. Ind.* Vol. XIX pp. 75-81.

9 वास्तव्यवंशकमलाकरचित्रभानुः
शत्रुप्रवीरविकलेन्धनचित्रभानुः ।
श्रीवत्सराजतनयः खलु धर्मराजो
जंबेरनाथ इह ताम्रमिदं लिलेख ॥

मामे[10] नाम्ना कवीशः सुरगणजनको रत्नसिंहोऽस्य पुत्रः
ख्यातो वास्तव्यवंशो नृपवरसदसि प्राप्तमानो मनीषी ॥

श्रीमान् सहस्राज्र्जुनवंशदीपः
[11]कुमारपालः सुकवि-प्रधानः ।
महानदीवारि-विलास-मुग्धो
महागुणज्ञो भवभूतिभक्तः ॥

विद्यानिधिर्ग्रामपतिर्मनीषी
चण्डीशपादाम्बुजचञ्चरीकः ।
प्रासादकारः शशिशेखरस्य
धन्योऽस्ति यः कोसल-काव्यरत्नम् ॥

Amoda Plates of Jajalladeva II *Epi. Ind.* Vol XIX.

तस्यामेवानर्घवल्ल्यां श्रीमत कीर्तिधरः सुधी-
जंदरग्रामनाथोऽयं लिलेखाक्षरशोभनम् ॥

ज्यायान् पण्डितपुण्डरीकतरणिर्मामेऽभिधानोऽभवत् ।
श्रीमामे तनयः समस्तजगती × × ×
शीलाचार्यविवेकपुण्यनिलयः श्रीरत्नसिंहः कविः ।
निःशेषागमशुद्धबोधविभवः काव्येषु यो भव्यधीः
सत्तर्काम्बुधिपारगा भृगुसुतो यो दण्डनीतौ मतः ।
छन्दोलङ्कृतिशब्दमन्मथकलाशास्त्राब्जषण्डद्युति-
श्चक्रे देवगणः प्रशस्तिममलां श्रीरत्नसिंहात्मजः ॥

*Epi. Ind.* Vol. I p. 45.

इयं सहस्रार्जुनवंशजेन
कुतूहलात् क्षत्रियपुङ्गवेन ।
कुमारपालेन गुणाभिरामा
रामेव रम्या रचिता प्रशस्तिः॥

*Cousen's Progress Report*, Chedi era 919. 1904.

दक्षो लक्षणनिर्णये कवियकला सर्वत्र विद्याप्रभु-
श्छन्दःछन्दरबुद्धिरत्न तमतिः साहित्यचाणक्ययोः

त्रिभुवनपालः

(Chedi era 915)

[12]**त्रिभुवनपालः** सुकविमरालः कीर्तिविशालः सुकविदले ।
सुकृतिरसालोऽर्चितशशिभालो जितभवजालो भूमितले ॥

देवपाणिः नृसिंह दामोदरमिश्र

1200 A.D.) (Saka 1114 = 1191 A.D.) (सं 1470 विक्रम = 1415 A.D)

[13]श्री**देवपाणि** र्बुधवृन्दवन्द्यः
श्रीमान् [14]**नृसिंहो** रचनाललामः ।
प्रशस्तिकारः कवितारसज्ञो
[15]**दामोदरा**ख्यो हरिभक्तिपूतः ॥

ख्यातो हैहयवंश-भूः कविवृषा यस्यानुजो जन्हुवां-
स्तेनाकारि कुमारपालकविना श्रेष्ठा प्रशस्तिर्मुदा ॥

*Indian Antiquary* Vol XXII, p. 82
Kharoda Inscription, chedi era 930.

12 घनरसमयीं गभीरां शुभ्रतरां विचाररमणीयाम् ।
सरसीमिव प्रशस्तिं त्रिभुवनपालो व्यधाद्विबुधः ॥

*Ratnapur Badal Mahal Inscription.*

13 श्रीमानिमां कमलिनीमिव देवपाणिः
सद्भृङ्गभोग्यसुभगां विबुधेकरम्याम् ।
वर्णोत्तमां कविकदम्बमनःप्रमोद-
विस्तारिणीं रसमयीमकरोत्प्रशस्तिम् ॥

*Causen's Progress RePort*

14 चतुर्दशोत्तरे सेयमेकादशशते शके
वर्द्धतां सत्वतो नित्यं नृसिंहकविना कृता ॥

*Epi. Ind.* Vol. X

15 हरिचरणसरोजध्यानपीयूषसिन्धुः
प्रसरदलघुवेला स्फारकेलीरसेन ।
सरसकविजनानां निर्मितेयं प्रशस्ति-
र्मनसि रसनिधात्री मिश्रदामोदरेण ॥

---

# भामिन्या मदनतापः

[ निबन्धकः—क० रा० शङ्करनारायणशास्त्री ]

हा हन्त ! मद्विधिरपि किमेवं स्यात्। मत्तातो माम् अतिवात्सल्येन पोषयामास। तथापि किं धनाशया मां पञ्चाशद्वर्षीयाय अस्मै वृद्धाय स दिदेश मत्पिता। नवीनविनयस्य (civilization) अज्ञानेन यद्यहं युवनिदशाम् आप्नुवाना भवेयम्, तर्हि मञ्जूषास्थसर्प इव निरुद्धगतिः स्याम्। पिताऽपि नवीनविनयानुरोधेन मां पुपोष। परिणीतोऽपि वृद्धो मां स्नेहेनैव वीक्षते अनुपालयति च। तथापि किं फलम्। समुचितां दशां प्रपन्नाया मे मदनावस्थां शमयितुं न स पारयति। अभीष्टं तु मेऽन्यत्सर्वं साधयति।, युवतेस्तु मादृश्याः पतिरेवानुरूप आवश्यकः, न धनम्। दरिद्रोऽपि स्वभार्यायां प्रियायाम् अतीव स्निह्यत्येव। तस्माद् यदा प्रियामदनतापशमनाय प्रभवति भर्ता, तदैव प्रियायाः सुखं नान्यथा। तमेव पुमांसं सा वाञ्छति। तद्विहीनं कमपि पुरुषं किल मां प्रापयामास मत्तातः। इति काचन योषित् मद्रपुर्यां सुवर्णशालावीथ्यां कस्मिंश्चिद् गृहे स्वगतमेव ब्रवीति ॥

इयं हि नारी अष्टादशवयस्का, पाश्चात्त्यदेशीयविनये मग्ना। सा एकैव पुत्री तत्पितुः। स्वदुहितरि प्रणयेन स कस्मैचिद् अधिकृताय पुरुषाय दित्सुः चतुश्चत्वारिंशद्वर्षीयाय वृद्धाय ददौ तां सुन्दरीं कन्याम्। स च गोपालो भामिनीमिमां परिणीय रूप्यकाणां पञ्चशतानि मासिकवेतनत्वेन गृह्णानः सुखम् अवात्सीत् सुवर्णशालावीथ्याम्। भामिनी च स्वस्य पत्या सह पञ्चषाणि संवत्सराणि वसन्त्यपि, तद्भर्त्रा सावधानं पोषिताऽपि, अभीष्टकार्यसंपादनेन भृशं तेन अनुरञ्जिताऽपि, गार्हस्थ्यसुलभं न सुखमनुबभूव। एवं सा विरहिणी सुखम् अलभमाना मदनतापावस्थां भूत्वा उन्मादावस्थासन्निहिता भवितुमारभत ॥

अथ सा एकस्मिन् दिने प्रातः स्वगृहे स्वाङ्गने स्वावस्थां प्रति चिन्तयन्ती दुःखिता। तदा यदृच्छया सा यावत् शिर उत्क्षिप्य पश्यति, तावत् पुरस्स्थितस्य गृहस्य कस्मिंश्चिदङ्गने कश्चित्पुरुष एकविंशतिवयस्कः पाश्चात्त्यविनयेषु कुशलः पश्यन्तीनां कन्यानां मन आवर्जयन् कस्मिंश्चित् आसने चतुष्पदि उपविशन् आत्मानं सम्यक् आपादकेशं पश्यन् दृष्टस्तया सुश्रोण्या। तस्य रूपमीक्षमाणा सा मुमोह। तथापि सा बाला किं कुर्यात्। कथं कथमपि स्वकार्याणि कर्तुम् अङ्गनान्तरं प्रविवेश। सैव तदङ्गनान्निश्चक्राम, न तस्या मनः। तत्तु तदङ्गनमेव जगाहे। एवं कियन्तंचन कालं तत्र स्वकार्याणि कुर्वती समाप्त। "पुनरपि तदङ्गनं प्राप्य स युवा अस्ति वा न वेति द्रष्टव्यमि"ति औत्सुक्याविष्टा सा स्वमनो नियन्तुमशक्ता उत्थाय तदङ्गनं प्राप्य यदा पश्यति, तदा स युवा तत्र नादृश्यत॥

हन्त! स हि अर्धघण्टापर्यन्तं तत्र एतां प्रतिपालयन् स्थितः। अत ऊर्ध्वं सा न आगमिष्यति इति अतीव मदनातुरः मन्मथः कार्यान्तरं द्रष्टुं गतः। तस्य च नाम कामपालः। स च विश्वकलाशालाविद्यापेक्षी तत्र आगतः। तद्गृहाङ्गनं भाटकार्थं सः अगृह्णात्। तत्पित्रा च तस्याऽऽवश्यकं धनं प्रतिमासं प्रेषितम्। तेन च सः अतिसुखानि अनुभवन् विद्याभ्यस्यन् आसीत्। अतिरूपलावण्यशाली स पुरोगृहस्थितभामिनीदशां जानन् "ध्रुवं स्वलावण्यमोहिता सा स्ववशम् आगत्य सुखं दद्यात्" इति चिन्तयन् आसीत्।

ततः परेद्यवि तस्मिन् कामपाले स्वाङ्गने आसने उपविश्य पुस्तकं पठति भामिनी स्वाङ्गनं प्राप्य तं पश्यन्त्येव गवाक्षद्वारा मन्दस्मितम् अकरोत्। उभयोरपि नेत्रे परस्परमभाषेताम्। एवं पञ्चषाणि दिनानि व्यतीतानि। एकस्मिन् दिने स्वाङ्गने पुस्तकं पठन् स कामपालः केनापि आहूत इव परावृत्य यावत्पश्यति, तावदेव भामिनीकिङ्करी तया प्रक्षिप्तां कागल-(paper) पत्रिकां च वीक्षते स्म। तस्यां च पत्रिकायां विवृत्य दृष्टायाम्

इदं लिखितम् अवर्तत। स्वस्ति। प्रिय ! सादरं विज्ञापयामि। कमपि वृद्धं परिणीय शोचामि। न हि जानातु न मम दशां भवान्। मदर्थमेव दैवेन भवान् इहानीतः इति च मन्ये। तत् मदभीष्टम् आशु निर्वर्तय। मा निराकरोः मत्प्रार्थनाम्। यथाप्रार्थनम् अस्यामेव रात्रौ एकादशघण्टात ऊर्ध्वम् आरामं मे यद्यागच्छसि, तर्हि त्वां प्रतिपालयन्त्या मे सुखं वितीर्य भवानपि अतिसुखं लभेत इति ॥

प्रथमं स किंचिदिव बिभाय। "मातृवत्परदारेषु मतिः कार्ये"ति हि शास्त्रज्ञाः। तथापि यदि सा स्वयमेव मदनातुरा माम् इच्छति, तदा तन्निराकृतिः पापायैव न श्रेयसे इति मन्वानः तस्यामेव रात्रौ एकादशघण्टासमये कामपाल आत्मानम् अनुकूलवेषेण अलङ्कृत्य पुरस्स्थितोपवनसकाशं प्राप्तः। तत्र यथासंकेतं कवाटम् अपिनद्धम् अवर्तत। अन्तश्च गत्वा तत्र कस्यांचित् मञ्चशय्यायाम् आसीनां तं प्रतिपालयन्तीमेकाकिनीं भामिनीं प्राप्य, तेन च प्रत्युद्गता क्षणं तत्र मञ्चे उभावपि उपविविशतुः। तं निशाम्य दरिद्रो निधिं प्राप्येव सा तुतोष। तुष्टश्च स यावत् तां समाश्लिष्यत्, तावदेव स वृद्धः स्वभार्यां शय्यायां स्वसमीपे अपश्यन् अनपगतनिद्र एव उद्यानसमीपमागतः। कामपालेनालिङ्गितां तां भामिनीमीक्षमाणः स स्थविरः कामपालं बहुभिः कटुभिर्वाग्भिर्निन्दित्वा तां प्रत्यपश्यत्। कामपालश्च तत्क्षणमेव पलायामास। वृद्धश्च स्वभार्यां तदा न अनिन्दत्। प्रत्युत ततः प्रभृति तस्याम् अतिस्नेहं बबन्ध।

"मत्कृतेऽयं किं किं न साधयति। यद्येवम्, मया किमिति अल्पं मदनसुखं न परित्याज्यम्" इति मन्वाना ततः प्रभृति शुद्धा पतिव्रता परस्मिन् जन्मनि तमेव नायकं युवानं लब्ध्वा सुखमन्वभूत्। अत एतत्सिद्धं—"वृद्धस्य अतियवीयसी कन्या न देया" इति ॥

# मालतीमाधवे नायकचरितम्

[ निबन्धकः—श्रीशिवशङ्करशास्त्री ]

## पूर्वरागः

( पूर्वतोऽनुवृत्तिः )

### कामन्दकीनीतिः

नगरोपकण्ठे संस्थापितशिवमन्दिरे मालतीमाधवयोर्मेलनं कारयिष्यति, विवाहार्थिनो नन्दनस्य च कथञ्चिदाशापूरणाय मकरन्दं मालतीवेशेन नन्दनसमीपे प्रेषयिष्यतीति मालतीशुभार्थिन्याः कामन्दक्याः सङ्कल्पः।

गूढरहस्यमिदं साधयितुं कामन्दकी नन्दनेन सह मालत्याः परिणयात् प्राग् मालत्या नगरदेवतायाः पूजाविधानार्थं मङ्गलालंकृतां विवाहश्रीसमुज्ज्वलां तामादाय लवङ्गिकाद्वितीयोपस्थिता। भगवत्याः सङ्केतक्रमेण माधवमकरन्दौ पूर्वमेव मन्दिरमागतौ। न कोऽपि भगवत्या गूढरहस्यं भेत्तुं समर्थः। प्रणयिनोरवस्थाऽतीव मर्मस्पर्शिनी, उभावेव भगवत्या नीतिमधिकृत्य प्राप्तसंशयौ।

माधवो वयस्यमवादीत्—सखे !

मालत्याः प्रथमावलोकनदिनादारभ्य विस्तारिणो
भूयः स्नेहविचेष्टितैर्मृगदृशो नीतस्य कोटिं पराम्।
अद्यान्तः खलु सर्वथाऽस्य मदनायासप्रबन्धस्य मे
कल्याणं विदधातु वा भगवती नीतिर्विपर्येतु वा॥

मकरन्दस्तमाश्वास्याभणत्—वयस्य ! कथं हि भगवत्याः सुमेधसो नीतिर्विपर्ययमेष्यति। इयं हि माधवस्य मनोऽवस्था।

मालती तु स्वमनसि चिन्तयाम्बभूव—

केन उण उवाएण सम्पदं मरणनिव्वाणस्स अन्तरं सम्भावइस्सं ? मरणंपि मन्दभाअहेआणं अहिमदंत्ति सुदुल्लहं होदि ।'

* * *

'किं दाणिं दारुणसमारम्भदेव्वदुव्विलासपरिणामदुःखणिद्दद्धमानसं पुणो पुणोवि मम्मच्छेअदूसहं मन्दभाइणिं दुणोसि ।'

उभयोरेव हृदयं परस्परप्राप्तिविषये मोघाशं बभूव। नाटकान्तरे दृश्यते यत्, यदा नायिका नायकप्राप्तिविषये भग्नाशा भवति तदा सा उद्बन्धनेनोपायान्तरेण वा प्राणान् हातुमिच्छति। अत्र गत्यन्तरस्यासद्भावाद् मालती माधवश्च द्वावेव स्वस्वप्राणान् त्यक्तुं कृतसङ्कल्पौ जातौ। अनयोर्मिलनपथे बहवो विघ्ना विघ्नन्ते, इति कविना दर्शितम्।

यस्तु दुःखेन लभ्यते तस्यादरोऽपि महान्।

अत्रान्तरे पेटकहस्ता प्रतीहारी प्रविश्य कामन्दकीमवादीत् "अमच्चो भअवदिं विण्णवेदि एदिणा णालन्दानुप्पेसिदेण विवाहणेवच्छेण देवदापुरदो अलङ्करिदव्वा मालदित्ति"।

काम। युक्तमाह अमात्यः मांगलिकमेतत् स्थानम्, अतो दर्शय।

प्रती। इदं दाव धवलपट्टंसुअजुअलं इदं च उत्तरीअं रत्तवणासुअं इमे अ सव्वंगिआ आहरणसंओआ, अअं च मोत्तिअहारो एदं चन्दणं कुसुमावीडो अ।

काम। [ अपवार्य ] रमणीयं हि वत्समकरन्दम् अवलोकयिष्यति जनः। [ प्रकाशम्। गृहीत्वा ] भवतु ओम् इति उच्यताममात्यः।

अत्र पुरा किम्भूतो विवाहपरिच्छद आसीत्तन्महाकविर्मालत्या विवाहवेशवर्णनप्रसंगेन दर्शितवान्।

सम्प्रदानम्

विविक्ते अलङ्करणरत्नानां शास्त्रतः प्राशस्त्यपरीक्षणाय कामन्दकी प्रस्थिता। गतायाञ्च तस्यां मालती लवंगिकासहचरी मन्दिरं प्रविवेश।

माधवमकरन्दौ तु स्तम्भापवारितशरीरावतिष्ठताम्। अत्र महाकवि-

नायिकाविलापं नायकं श्रावयति स्म । स्वप्रणयिन्या विलापं शृण्वतो माधवस्य प्रावर्त्तताश्रुधारा। पूर्वतोऽपि बबन्ध चाधिकां प्रीतिं मालतीसंगप्राप्तौ। तस्या रोदनं श्रुत्वा पस्पर्श तत्क्षणादेव दुःखासिका माधवस्य हृदयम्। स मकरन्दमुवाच—सखे !

म्लानस्य जीवकुसुमस्य विकासनानि
सन्तर्पणानि सकलेन्द्रियमोहनानि ।
आनन्दनानि हृदयैकरसायनानि
दिष्ट्या मयाऽप्यधिगतानि वचोऽमृतानि ॥

यद्यपि स प्रियाविलापश्रवणेन नितरां दुःखायमानोऽवर्त्तत तथापि तद्दुःखमानन्दमिश्रितं नाभवदिति न ।

तथाहि माधवः—

नैराश्यकातरधियो हरिणेक्षणायाः
श्रुत्वा निकामकरुणाश्च मनोहराश्च ।
वात्सल्यमोहपरिदेवितमुद्रहामि
चिन्ताविषादविपदश्च महोत्सवश्च ॥

अधुना तु महाकविना भवभूतिनोपायविशेषावलम्बनेनानयोर्मेलनं संघटितम्। उपायं तावत् पश्यन्तु भवन्तः ।

लव। अइ ! पडिहदं दाणिं दे अमंगलं न अदोवि अप्पिअदरं सुणिस्सं।

माल। सहि, पिअं क्खु तुम्हाणं मालदीजीविदं न उण मालदी ।

लव। किं एव्वं भणिदं होदि ।

माल। [ आत्मानं निर्दिश्य ] जेण अणजणपच्चासणिबन्धणेहिं वअणसंविहाणेहिं जीआविअ इमं जेव्व महाबीभच्छारम्भं अनुभाविदम्हि । सम्पदं उण मम मणोरहो एसो ज्जेव्व जं तस्स देवस्स परोक्खगुणकित्तणेण अत्तवरद्धं अत्ताणं परिच्चइस्संत्ति, ता, इमस्सिं पओअणे पिअसही मे अपरिपन्थिणी होदु (इति पादयोः पतति )।

लव । [ माधवं संज्ञया समाह्वयति ]

मक । वयस्य ! उपसृत्य लवंगिकायाः स्थाने तिष्ठ ।

माध । वयस्य ! परवानस्मि साध्वसेन ।

मक । इयमेव नेदीयसी प्रकृतिरभ्युदयानाम् ।

माध । [ स्वैरं लवंगिकास्थाने तिष्ठति ]

माल । सहि ! करेहि अणुऊलदाए पसादं ।

माध । सरले, साहसरागं परिहर, रम्भोरु ! मुञ्च संरम्भम् ।
विरसं विरहायासं सोढुं तव चित्तमसहं मे ॥

माल । सहि ! अलंघणीओ जेव्व दे मालदीप्पणामो ।

माध । ( सहर्षं ) किं वा भणामि विच्छेददारुणायासकारिणि ।
कामं कुरु वरारोहे ! देहि मे परिरम्भणम् ।

माल । [ सहर्षम् ] कधं अणुग्गहीदम्हि । [ उत्थाय ] इअमालिंगामि । दंसणं उण पिअसहीए वाप्फोपीडेन निरुद्धं पच्छिमं न लम्भीअदि । [ आलिंग्य सानन्दम् ] सहि ! कठोरकमलगब्भपह्मलो अण्णारिसो जेव्व दे अज्ज निव्वावेदि मं सन्तप्पमाणं प्रियसहीए सरीरप्फस्सो ।

*　*　*　*　*

तुएवि पिअसहीए सव्वदा सुमरिदव्वम्हि । एसा अ सिरिमाहवसहत्थनिम्माणमणुहरा वउलमाला मालदीजीविदनिव्विसेसं पिअसहीए दट्ठव्वा सव्वधा हिअए धारणीए त्ति ।

[ स्वकण्ठादपनीय माधवस्य हृदि विन्यस्यन्ती सहसा अपसृत्य साध्वसोत्कम्पं नाटयति ] तदा—

माध [ अपवार्य ] हन्त !

एकीकृतस्त्वचि निषिक्त इवावपीड्य
निर्भुग्नपीनकुचकुड्मलयाऽनया मे ।
कर्पूरहारहरिचन्दनचन्द्रकान्त-
निष्यन्दशैवलमृणालहिमादिवर्गः ॥

माल [ स्वगतम् ] अहो ! लवंगिआए मालती विप्पलद्धा !

भवभूतिनाऽवलम्बितोऽयमुपायोऽतीव रमणीयः। स्थानश्चात्यन्तं पुण्यम्। सरसरमणीयं च संविधानम्।

मालत्या गाढालिंगनप्राप्तिसुखं यन्माधवोऽनुभूतवांस्तत् खलु सर्वथाऽनिर्वचनीयम्।

इदमेव सुखं सीतासंस्पर्शाद्रामस्याप्यभूत्। तथाचोत्तरचरिते—

विनिश्चेतुं शक्यो न सुखमिति वा दुःखमिति वा
प्रमोहो निद्रा वा किमु विषविसर्पः किमु मदः।
तव स्पर्शे स्पर्शे मम हि परिमूढेन्द्रियगणो
विकारश्चैतन्यं भ्रमयति समुन्मीलयति च ॥

अपि च—

प्रश्च्योतनं नु हरिचन्दनपल्लवानां
निष्पीडितेन्दुकरकन्दलजो नु सेकः।
आतप्तजीवनमनःपरितर्पणो मे
सञ्जीवनौषधिरसो नु हृदि प्रसिक्तः ॥

अपि च—

स्पर्शः पुरा परिचितो नियतं स एष
सञ्जीवनश्च मनसः परिमोहनश्च।
सन्तापजां सपदि यः प्रतिहत्य मूर्च्छा-
मानन्दनेन जडतां पुनरातनोति ॥

मालतीजीवनरक्षाकाले यत् तस्या आलिङ्गनदानं तत्तु भयात्, अधुना प्रतारिता साऽलवङ्गिकाबुद्ध्या उपगुह्यातीव लज्जिताऽभवत्। स्वगतञ्चावादीत्—

'हा हद्धी हद्धी हदम्हि, कण्णआअणविरुद्ध' किम्पि एसा ववण्णसदि।'

इदानीं तु पाणिग्रहणमवशिष्यते। लवङ्गिकयोक्तम्—'महाणुहाव ! हिअए वि अप्पडिहदसअ'गाहसाहसो अअं' जणो, किं वाणि कर'गगहणं विआरेदि ?' तदा कामन्दकी प्रविश्य—'पुत्रि ! कातरे किमेतत्'?

उपस्थितोऽयं युवा माधवोऽत्र। मुञ्च जडताम्, अमात्यभूरिवसोरेकमपत्यरत्नं मालती भगवता सदृशसंयोगरसिकेन वेधसा, मन्मथेन मया च तुभ्यं प्रदीयते इत्युक्त्वा प्रदत्ता मालती।

अस्मिन् प्रकरणे प्रणयचित्रं विविधभावेन चित्रितमपि न कुत्रापि संस्पृशत्यशुद्धभावम्। स्वयं प्रबुद्धप्रणयो यया दिशा वर्ण्यते तया दिशैव वर्णितं महाकविना। प्रणय एवास्य प्रकरणस्य वर्णनीयविषयतामवगाहते। स्वकपोलकल्पितोऽस्य कवेर्वर्णनीयो विषयः। यत् प्रणयिन्याः कृते स्वदेहमांसदानं तत्तु नितरामलौकिकवृत्तम्।

उन्मादः

माधवो यथा प्रणयस्य तथा करुणाया अप्यर्णवः। स चादर्शः सर्वशास्त्राणाम्, उत्पत्तिः कलानाम्, कुलभवनं गुणानाम्, आगमः काव्यामृतरसानाम्, उदयशैलो मित्रमण्डलस्य, उत्पातकेतुरहितजनस्य, प्रवर्त्तयिता गोष्ठीबन्धानाम्, धौरेयः साहसिकानाम्, अग्रणीर्विदग्धानाञ्च। एतद्गुणजातं तस्मिन् सर्वथा विलसत्येव। स चाप्रतिम आधारो विनयस्य।

'परिचयककरुणायां सर्वथा मा विरंसीः' इत्यनेन भगवत्या कामन्दक्या सनिर्बन्धमनुरुद्ध्यमानेन तेनोक्तम्—

'श्लाघ्यान्वयेति नयनोत्सवकारिणीति
निर्व्यूढसौहृदभरेति गुणोज्ज्वलेति।
एकैकमेव हि वशीकरणं गरीयो
युष्माकमेवमियमित्यथ किं ब्रवीमि।'

माधव आश्रयो रसिकानाम्। स मालतीवेशधारिणं मकरन्दमालिङ्ग्योवाच कामन्दकीम्—'भगवति! कृतपुण्य एव नन्दनो यः प्रियामीदृशीं मनसा मुहूर्त्तमपि कामयिष्यते' इति।

वधूवरस्य परस्परसम्बन्धमधिकृत्य कामन्दक्या कथितम्—

'प्रेयो मित्रं बन्धुता वा समग्रा
सर्वे कामाः शेवधिर्जीवितञ्च।

स्त्रीणां भर्त्ता धर्मदाराश्च पुंसाम्
इत्यन्योन्यं वत्सयोर्ज्ञातमस्तु ॥

मालतीवेशधारिणा मकरन्देन स्वाभिलाषपूरणे निष्ठुरं प्रतिहतो विप्रलब्धश्च नन्दनोऽधिकवैलक्ष्यस्खलदक्षरः सरोषनिर्भरदुःखितो मदस्फुरन्नयनो वासभवनान्निर्गतः। अतो वामशीलां मालतीं तिरस्कर्त्तुकामया-गतया मदयन्तिकया सार्द्धं विवाहे सम्पन्ने कृत्रिमनिन्दितस्य मकरन्दस्य, मालतीमाधवयोर्विलासकुञ्जमागच्छता मकरन्देन समं पथि नन्दनप्रेषित-नगरपालैर्महान् कलहः समजनि। तत्सन्देशं श्रुत्वा तत् स्थानं द्रुतं गत्वा मकरन्देनाऽऽहतशरीरेण साकं पुनः कुञ्जं प्रत्यावृत्य मालतीविहीनं तदपश्यत्। तेषामागमनात् प्राक् प्रतिहिंसापरायणया कपालकुण्डलया बलाद्धृता मालती। तदा कुवलयाक्षीं प्रत्यनिष्टैकबुद्धे र्माधवस्यान्तरात्माऽविरतमनुबद्धोत्कम्प एवाभवत्। वामेतरचक्षुरस्फुरत्। स करुणं विललाप। तस्यायं विलापो विक्रमोर्वश्यां पुरूरवसो विलाप इवातीव करुणः।

स च माधवः प्रियाविरहोन्मत्तः पुरूरवा इव कदाचित् काननपशून् पक्षिणश्च, कदाचिच्च जलदान् प्रियामधिकृत्य जिज्ञासते स्म। एवं विलपन् स कदाचिद् दुःखितः कदाचिच्च मूर्च्छितोऽभवत्।

अस्मिन् विरहवर्णने कालिदास इव भवभूतिः स्वकृतित्वं न सम्यक् दर्शितवान्। परन्तु कालिदासादृते न कश्चिदपरः कविरीदृशविरहवर्णनं कर्त्तुमलमभूत्।

'भवभूतिः करुणरसे अतिरिच्यते' इति यदुक्तं वैदेशिकैस्तत्तु सर्वथा समीचीनमेव। महाकवेरिदं करुणार्थग्रथितपदं विरहवर्णनं वाचकवर्गमपि चिरं रोदयति। दुःखितमपि जनमतितरां दुःखयति। परन्तु अयं दुःखानुभवः सुखायैव कल्पते। यदुक्तं विश्वनाथेन—

'करुणादावपि रसे जायते यत् परं सुखम्।
सचेतसामनुभवः प्रमाणं तत्र केवलम् ॥'

भवभूतिः खल्वाश्रयः करुणरसात्मकभावानाम्, प्रस्रवणं शमस्य, कर्णधारश्च कल्पनार्णवस्य। श्रुतं प्रियावियोगविधुरस्याजस्य परिदेवनम्, आकर्णितं सीतावियुक्तस्य रामस्य करुणरोदनम्, निशमितश्चोर्वशीविरह-कातरस्य विक्रमस्य अरुन्तुदं वचनजालम्, परन्तु माधवस्य प्रियाविनाकृतस्य रोदनं प्रागुक्तविलापादपि हृदयग्राहि शक्नोति वज्रस्यापि हृदयं द्रवीकर्त्तुम्।

इत्थं विलपतो माधवस्य कालः कश्चिदतिचक्राम। मालतीप्राप्तौ धृत-द्वैधीभावकातरं तस्य मनः। कथं जीवितं स धारयिष्यति। क्रमेण तस्य धैर्यमहीयत। केन वाऽन्येन विना मकरन्देन स साधारणीकरिष्यति दुःखम्। 'केनोपायेन प्रियतमा प्राप्तव्या' इति तस्य मनसि सततं विपरिवर्त्तमान-मासीत्। अयं माधवस्य दैवदुर्नियोगः कोऽपि। स महति जीवित-संशये अवर्त्तत। न कथमपि जातो विशङ्कस्तस्य प्रकाममन्तरात्मा। मालतीविरहेण स हाहानिनादेन दिशो बधिरयन् स्थितः। तस्य दुःखं खलु वचनानामविषयो जातम्। दैवानुग्रहात् सौदामिन्या कौशलेन कपाल-कुण्डलाहस्तादुद्धृता मालती समर्पिता च माधवाय।

पुनर्मिलनम्

मालतीमाधवावन्योन्यं समवलोक्य स्वाच्छन्द्यमानन्दपरम्पराणां किमप्यवापतुः। परन्तु सन्देशोऽयं कामन्दकी-मदयन्तिका-लवङ्गिकाभ्यश्च न विज्ञापितः। ताः सर्वा मालत्याः कृते प्राणान् हातुं मनो दधिरे। अत्रान्तरे ( नेपथ्ये ) आश्चर्यमाश्चर्यम्।

व्यतिकर इव भीमस्तामसो वैद्युतश्च
क्षणमुपहतचक्षुर्वृत्तिरुद्भूय शान्तः।

काम। [ विलोक्य साकुलहर्षम् ]।
कथमिह मम वत्सस्तत् किमेतत्—
[ प्रविश्य मकरन्दः ] किमन्यत्।
प्रभवति हि महिम्ना स्वेन योगेश्वरीयम्।
( नेपथ्ये ). कथमतिदारुणो जनसंमर्दो वर्त्तते ?

मालत्यपायमधिगम्य विरक्तचेताः
सांसारिकेषु विषयेषु च जीवितेषु ।
निश्चित्य वह्निपतनाय सुवर्णबिन्दु-
मभ्येति भूरिवसुरित्यधुना हताः स्मः ॥

मदयन्तिकालवङ्गिके। झत्ति मालतीमाहवाणं संदंसणमहूसवो झत्ति अच्चाहिदं च ।

कामन्दकीमकरन्दौ। [ सहर्षम् ] हा धिक् कष्टम् । आश्चर्यमाश्चर्यम् ।

किमयमसिपत्रचन्दनरसच्छटासारयुगपदवपातः ।
अनलस्फुलिंगकलितः किमयमनभ्रः सुधावर्षः ॥
सञ्जीवनौषधिविषव्यतिकरमालोकतिमिरसम्भेदम् ।
अद्य विधिरशनिशशधरमयूखसंवलनमनुकुरुते ॥

तदा [ नेपथ्ये ] हा ताद ! विरम दंसनूसुअम्हि दे वअणकमलस्स, पसीद, सम्भावेहि मं । कहं मम कारणादो समत्थलोआलोअन्तराल-विकुखम्भनिम्मलकुलेक्कमंगलपदीवभूदं अत्ताणअं परिच्चअसि, मए उण अलज्जाए निरणुक्कोसा तुम्हं त्ति सम्भाविदं आसि । ※ ※

माधवमकरन्दौ । [ ऊर्ध्वमवलोक्य सविस्मयम् ] भगवति, दिष्ट्या वर्द्धसे ।

सा योगिन्यम्बरतो विघटितजलदाऽभ्युपैत्ययं यस्याः ।
वागमृतजलासारो जलदजलासारमतिशेते ॥

इयं हि मालतीप्राप्तिप्रवृत्तिः ।

केनोपायेन कपालकुण्डलाहस्तात् सौदामिन्या उद्धरणं कृतं मालत्या-स्तत्तु तस्या एव मुखाच्छ्रुतमस्माभिः ।

माल । वाढं इमाए क्खु भअवदीसम्बन्धपक्खवादिणीए गिव्भन्किअ कवालकुण्डलं अत्तणो आवसधं उवणीअ मं भअवदीणिव्विसेसं समासा-सिदम्हि, किञ्च केसरावली साहिण्णाणहत्थाए इह आगन्तूण, सव्वं तुम्हे सन्धारिदा मरणादो, सा एसा जीविदप्पदाइणी सोदामिणी ।

महाराजो मालतीमाधवपरिणयमधिकृत्याऽऽमूलं श्रुत्वा मुदा परमया युतोऽभवत् । स तु तयोर्विवाहमभिनन्दितवान् ।

उपसंहारः

भवभूतिर्मालतीमाधवे यन्नायकचरितमङ्कितवांस्तत्त्वतुलनीयम् । ईदृशं निष्कलङ्कचरितं प्रायेण संस्कृतनाटकेषु न विद्यते इति मे मतिः । सर्वे एव स्पृहणीया नायकगुणा अस्मिन् धीरप्रशान्ते नायके विलसन्ति । स च—

त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही ।
दक्षोऽनुरक्तलोकस्तेजोविदग्धशीलवान्नेता ॥

माधवः खलु आदर्शप्रेमिकः । प्रेम्णः कृते स प्राणानपि हातुमैच्छत् । हृदयंगमे सुहृदि तस्य स्नेहो महान् । यदा स मकरन्दं व्याघ्रेणाऽऽहतं विलोकयाम्बभूव तदा तस्य दारुणोऽभूदकथनीयः सन्तापः । मालती-प्रथमदर्शनजनितप्रीतेरस्य कन्दर्पदाहदीपितस्य हृदयस्य कामन्दक्या आश्वासनवाक्यजातमेव विनोदनतामिवागात् । महत्यां विपदि धीरत्वमेव तस्य प्राणसन्धानहेतुरभवत् । कामन्दकीसदृशीनां नारीणामप्राकृता-कृतीनामवितथगिरां गिरः कथमपि वैतथ्यास्पदं न भवन्तीति मालतीप्राप्तौ सन्देहदोलारूढस्य माधवस्याश्वासपदमभूत् ।

मालती न केवलमन्तर्बहिरपि सा सर्वाशानिबन्धनमासीन्माधवस्य । अपहृतायाञ्च मालत्यां न कथमपि तस्य मनो धृतिमलभत । आशीविषवेग-विषमाणां कुसुमसायकानां पतितो गोचरे माधवो मकरन्देन सनिर्बन्धं स्वमनो-ऽवस्थामधिकृत्य जिज्ञास्यमानो वक्तुकामोऽपि न शक्नोति स्म किञ्चिदपि लज्जाकलितगद्गदो गदितुम् । तस्य सन्देहदोलामवलम्ब्य संवित् कामन्दक्यै किं वक्ष्यतीति नाज्ञासीत् । परन्तु भक्तिप्रवणेन चेतसा तत्कथायामतिशय-दर्शितादरस्तत्प्रसङ्गे तेनैव परिचालितोऽभूत् । बहुमन्तगुरुणादरेण प्राणानिव कामन्दक्या आश्वासवाक्यानि तस्थौ । अन्ततश्चेदमेव वक्तव्यम्—

'ममापि साधुः प्रतिभात्ययं क्रमः ।
चकास्ति योग्येन हि योग्यसंगमः ॥

चरित्रोत्कर्षः

शाकुन्तलस्य नायको दुष्मन्तश्चेदस्य प्रकरणस्य नायकस्य तुलामारोप्यते तर्हि, दृश्यते—दुष्मन्तस्य शकुन्तलागतप्रणये माधवस्येवोन्मत्तता नास्ति। दुष्मन्तः शकुन्तलामयोऽपि नालमभूत् स्वकर्त्तव्यमवधारयितुमिति न। परन्तु तत् कर्त्तव्यसम्पादनं स्ववयस्यविदूषकप्रेषणेन। तथाहि—

"सखे माधव्य ! त्वमप्यम्बाभिः पुत्र इव गृहीतः ।"

स्वयञ्च शकुन्तलया प्रेमसम्भाषणार्थं प्रचलितः। दुष्मन्तः शकुन्तलारूपं दृष्ट्वोन्मत्तः। माधवो मालत्या गुणमुग्धः। शकुन्तला अमानुषीसम्भवा मालती तु मानुषीसम्भवा। दुष्मन्तः सम्राट्। माधवस्त्वमात्यपुत्रः। नाटकद्वयमेव नायकस्य प्रणयमधिकृत्य रचितम्। नायकयोः सादृश्यापेक्षया वैषम्यमधिकतरं विद्यते। दुष्मन्तो धीरोदात्तो दक्षिणो नायकः। तस्य मनो लालसादीप्तम्। स कामुकोऽपि न विवेकहीनः। स बहुपत्नीकः। शकुन्तलायाः प्रत्याख्यानं तस्य भ्रान्तिजनितम्। शकुन्तलायामनुरक्तोऽपि तां विस्मृतवान्। तस्य चरित्रे न लभ्यते सत्यवादितायाः परिचयः। स धर्मभीरुश्चित्रकरः संगीतज्ञश्च। स स्वयं राजकार्यं पर्यालोचयति स्म। स पुत्रवत्सलः कर्त्तव्यपरायणश्च अभिज्ञानशकुन्तलानाटकस्य तेषु तेषु स्थानेषु तस्य प्रागुक्तगुणानामेव परिचयः प्रदत्तः कविना।

"गच्छति पुरः शरीरं धावति पश्चादसंस्थितं चेतः ।
चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य ॥"

"मानुषीषु कथं वा स्यादस्य रूपस्य सम्भवः ।
न प्रभातरलं ज्योतिरुदेति वसुधातलात् ॥"

"भोस्तपस्विनः ! चिन्तयन्नपि न खलु स्वीकरणमत्रभवत्याः स्मरामि, तत् कथमिमामभिव्यक्तसत्त्वलक्षणामात्मानमक्षत्रियं मन्यमानः प्रतिपत्स्ये ॥"

"क्व वयं क्व परोक्षमन्मथो मृगशावैः सह वर्द्धितो जनः ।
परिहासविजल्पितं सखे परमार्थेन न गृह्यतां वचः ॥"

'अस्यास्तुङ्गमिव स्तनद्वयमिदं निम्नेव नाभिः स्थिता' इत्यादि ।

'रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्' इत्यादि ।

'व्यपदेशमाविलयितुं समीहसे माञ्च नाम पातयितुम्' इत्यादि ।

'सुतनु हृदयात् प्रत्यादेशव्यलीकमपैतु ते' इत्यादि ।

'आलक्ष्यदन्तमुकुलाननिमित्तहासैः' इत्यादि ।

'अनेन कस्यापि कुलाङ्कुरेण' इत्यादि ।

अतो दृश्यते दुष्मन्तस्य चरित्रं दोषादोषसंमिश्रितम् । परन्तु माधवोऽप्रतिमाश्रयः सद्गुणानाम्, माधवस्य चरित्रं दुष्मन्तस्य तथा मालविकाग्निमित्रस्य चरित्रापेक्षया समधिकमुन्नतम् । अग्निमित्रोऽपि दुष्मन्तवत् कामुकः । माधवस्य प्रणयोन्मादे भोगाकाङ्क्षा मेघदूतस्य यक्षवत्, तथा कातरता अग्निमित्रवन्नासीत् । सुपवित्रभावसम्भावित उन्मादो माधवस्यासीत् ।

अन्ततश्च सुधीवर्गस्य सविधे इदमेव वक्तव्यम्—

शास्त्रे प्रयुक्तं यदयुक्तमस्मिन्
भ्रान्त्या प्रमादेन च तत् सुधीभिः ।
संशोधनीयं विपुलानुकम्पै-
र्मया निबद्धोऽञ्जलिरेष तेषाम् ॥

---

# मेघनादवधम्

## एकादशः सर्गः

[ निबन्धकः—श्रीनित्यगोपालविद्याविनोदः ]

संलक्ष्य मित्रं समुवाच राम आश्चर्य्यमाश्चर्य्यमहो वयस्य ।
न जातु दृष्टं न मया श्रुतं वा स्वप्नो नु दृष्टोऽहनि जाग्रता किम् ॥१॥
भो मित्ररत्नोत्तरमात्थ सत्यं बोद्धुं न शक्तोऽस्मि निरीक्ष्य मायाम् ।
भवामि सन्देहतमोऽन्धचित्तो द्रष्टुं न शक्नोमि हि कृत्यमार्गम् ॥२॥
वार्त्ता श्रुता चित्ररथाद्रथीन्द्रानमाया नियोक्ष्यस्य सहायभूता ।
आयास्यतीहेति (?)छलेन किं सा लङ्कां प्रविष्टा वद कस्य माया ॥३॥
विभीषणः प्राह धरासुतेश स्वप्नो न नैशः शृणु मित्र वच्मि ।
दैत्यः स नाम्नाऽस्ति ह कालनेमिस्तस्यात्मजेयं प्रथिता प्रमीला ॥४॥
जातेयमंशात् परशक्तिदेव्याः समा हि तस्याः परया च शक्त्या ।
जनं न पश्यामि तथाविधं यः स्पर्द्धेत युद्धे दनुजां प्रमीलाम् ॥५॥
यो वीरसिंहोऽजयदिन्द्रमाजौ तं रक्षईशं पतिसेवकं या ।
करोति काष्ठावसना यथेशं दिगम्बरं दृष्टिविमूढसंज्ञम् ॥६॥
विश्वस्य रक्षार्थमियं विधात्रा सृष्टा वरत्रा स तया च तेन ।
बद्धो महावीर महेन्द्रजेता यथा मदच्युद्द्विरदोऽतिमत्तः ॥७॥
धारा यथाऽपां शमयेद्दवाग्निं शत्रुं वनानां सततं प्रमीला ।
निवारयेदेनमनन्यवार्य्यं तथा मधुप्रेमवचःसुधाभिः ॥८॥
फणी दुरन्तो यमुनाजलान्तस्तिष्ठत्यतो लोक इहास्ति सुस्थः ।
देवाश्च नाके फणिनो भुवोऽधो भूमौ नरा हृष्टहृदो वसन्ति ॥९॥
प्रत्याह रामः सकलं हि सत्यं यदात्थ बन्धो स हि मेघनादः ।
महारथिश्रेष्ठ इहान्य आस्ते को वा समस्तस्य सुशिक्षितस्य ॥१०॥

दृष्टः स वीरो भृगुवंश्यरामो युद्धेऽचलः शैल इवातितुंगः ।
शुभे मुहूर्त्ते तव(?) भ्रातृपुत्रो जग्राह चापं किमहं करोमि ॥११॥
वयस्य सिंही विपिने पशूनां राज्ञा समेता त्रिजगद्विजेत्रा ।
कस्मास्यते वा भयलुप्तसंज्ञं दीनं समग्रं मृगयूथमेतत् ॥१२॥
प्रेक्षस्व बन्धो परितः समुद्रः स कालकूटो रसति प्रभीमम् ।
संरक्ष सैन्यं त्वदधीनमेतं यथा भवं पीतविषो भवेशः ॥१३॥
भो वीरवर्य्य प्रविचिन्तय त्वं तवाग्रजः कालभुजङ्ग उग्रः ।
वीर्य्येण तस्यातुलवीर्य्य एष जितेन्द्रवीर्य्यो विपदन्तदेश्यः ॥१४॥
भङ्क्तुं समर्थो यदि तं भवेयं मनोरथो मे सफलस्तदा स्यात् ।
मित्रान्यथा बद्धचलोर्म्मिसिन्धुर्लङ्कां वृथागां कथयामि सत्यम् ॥१५॥
विनम्य शीर्षं समुवाच शूरः सौमित्रिरङ्घ्रौ रघुवंशकेतोः ।
बिभेषि कस्माद्रघुनाथ युद्धे रक्षोभिराप्तेन्द्रमहासहायः ॥१६॥
नूनं श्व इन्द्रस्य रिपुः क्षपाटो विनाशमायास्यति मे भुजार्त्तः ।
जयं न प्राप्नोति कदाप्यधर्म्मी रक्षोनृपो नित्यमधर्म्मभक्तः ॥१७॥
अमुष्य पापेन सुतो हतात्मशक्तिर्गतासुर्भविता जितेन्द्रः ।
तातस्य पापेन युतो मृतः स्याद् दूतः सुराणां प्रबभाष एवम् ॥१८॥
विभीषणः प्राह यथार्थमुक्तं धर्म्मेण लोको जयतीति तथ्यम् ।
भो वीरमानङ्क निशाचरेशः स्वपापपाकेन विनाशमेति ॥१९॥
तवैव बाणेन सुरेन्द्रजेता नूनं मृतिं प्राप्स्यति मेघनादः ।
प्रयत्नमाधेहि तथापि वीरा रणप्रिया वीर्यवती प्रमीला ॥२०॥
यत्रास्ति सिंही भयदा वने तत् प्रयत्नचित्तेन जनेन भोग्यम् ।
को वेत्ति भीमा प्रहरिष्यते कं धृतो निशीमां दिवसे निहन्याम् ॥२१॥
प्रोवाच रामोऽङ्क विभीषणाद्य द्वारेषु सैन्यैः सह लक्ष्मणेन ।
प्रेक्षस्व के कुत्र विनिद्रनेत्रास्तिष्ठन्ति युद्धे हतशक्तिसाराः ॥२२॥
विलोक्यतां सर्वत एव मित्र कुत्राङ्गदो नील इहास्ति वान्यः ।
वीरो मदीयः सशरासनोऽहं द्वारि प्रतीच्यां स्वयमस्मि जाग्रत् ॥२३॥

ओमित्युदित्वा सह-लक्ष्मणोऽसौ विभीषणो निर्गत एव सद्यः ।
रराजतुर्द्वौ सहतारकेन्द्रो यद्वा त्रिपुर्व्योममणिः प्रदीप्तः ॥२४॥
द्वारं प्रमीला कनकस्य याता विचित्रवाद्यं ध्वनितं समन्तात् ।
रक्षांसि घोरं रसितानि मेघाः कल्पान्तदृष्टा इव वा गजेन्द्राः ॥२५॥
हेषोत्थिता वाजिगणादिभेभ्यः समुत्थितं बृंहितमप्यजस्रम् ।
रथाङ्गनेमीमुखरा च कुन्ता देध्मीयमानाः परितो बभूवुः ॥२६॥
उत्पत्य नाराचसमूह इन्दुमाच्छादयद्व्योम कृशानुदीप्रम् ।
कोलाहलैः पूर्णमभूद् यथा भू-कम्पे गिरिर्वह्निमिवोज्जगार ॥२७॥
भयेन लङ्का चकिता निशीथे क्षणे क्षणे कम्पमगादभद्रम् ।
नृमुण्डकण्ठ्याह सुचण्डघोष-मन्त्राणि कस्मै विनियोजयामि ॥२८॥
वयं न रक्षोरिपवः प्रपश्य नेत्रं समुन्मील्य कुलाङ्गना नः ।
द्वारेषु मुक्तेषु तदैव लङ्कां सर्वाः प्रविष्टा जयघोषमत्ताः ॥२९॥
अग्न्यर्चिरालोक्य यथा पतङ्गा धावन्ति हर्षेण तथैव पौराः ।
प्रसूनवृष्टिं विदधुः समन्ताद् हुलुध्वनिं माङ्गलिकञ्च बभ्रुः ॥३०॥
तूर्यध्वनिं चक्रुरशेषवन्द्यास्तथाऽङ्गना जग्मुररण्यमध्यम् ।
तरङ्ग आग्नेय इव प्रदृप्तो विद्याधरीणां गण इन्द्रवाणाम् ॥३१॥
गवाक्षमुद्घाट्य निशाचराणां रामा निरीक्ष्यातिसुखाब्धिमग्नाः ।
शशंसुरुक्त्या पुनरुक्तयेव वीराग्रगण्याऽस्ति भुवि प्रमीला ॥३२॥
सा वीरवामा समगात् क्षणेश्च सानन्दचेताः पतिमन्दिरं स्वम् ।
अवाप्य नाथं मुदिता बभूव नष्टं मणिं प्राप्य यथा भुजङ्गी ॥३३॥
उवाच हर्षात् स हि मेघनादो निहत्य चन्द्रानन एषि किं त्वम् ।
तं रक्तबीजं युधि भीमवीर्यं कैलासमद्रीन्द्रसुतेव भीमा ॥३४॥
पदोस्तले ते पतितो भवामि यथादिशेस्त्वं चिरकिङ्करोऽस्मि ।
स्मेराह रामा तव पादपद्मप्रसादलेशेन जगज्जयामि ॥३५॥
शक्नोमि जेतुं मदनं न भीता भवामि तीव्राद् विरहानलाद् वा ।
उपैत्यतस्तं सततं मनो मे यमिच्छति प्रेमसिता स्रवन्ती ॥३६॥

उक्त्वा सनीयत् प्रविवेश सद्म मुमोच वीराभरणञ्च कृत्स्नम् ।
क्षौमं वसित्वा निचुलञ्च बद्ध्वा पीनस्तनी मेखलया विरेजे ॥३७॥
वक्षस्य हारः समुदक्षिपच्च वक्षस्यभान्मौक्तिकमाल्यरत्नम् ।
ललाटिकाकान्तमतीव भालं कर्णौ तथा कुण्डलकान्तिकान्तौ ॥३८॥
विचित्ररत्नाभरणेन रामा स्वलङ्कृता सातिशयं विरेजे ।
रक्षोऽन्वयापीड उदग्रवीर्यस्तया सहाध्यास्त सुवर्णपीठम् ॥३९॥
जगुः सुगातृप्रवराः सरागं नर्त्तक्य आसन् नटनप्रसक्ताः ।
विद्याधरस्तस्य वधूश्च यादृक् स्वर्गे विहङ्गा मधुरं चुकूजुः ॥४०॥
उत्सर्पिता उत्सगणा बभूवुः स्पर्शाद् यथाब्धी रजनीशभानोः ।
वसन्तवायुर्मधुरं ववौ च मधौ वसन्ते विपिनश्रियेव ॥४१॥
इतः ससौमित्रिविभीषणोऽगाद् द्वारं कुबेरस्य दिशि प्रहृष्टः ।
जागर्ति सुग्रीव इतो मघोनः काष्ठां समारुध्य विनिद्रनीलः ॥४२॥
आशां कृतान्तस्य रुणद्धि वीरः स चांगदः सिंह इव क्षुधार्त्तः ।
कैलासशृंगे धृतभीमशूलो नन्दी प्रभुद्वारपतिर्यथा वा ॥४३॥
इन्धे समन्ताज्ज्वलनोऽतितीव्रो धूमेन शून्यो नगरी च लङ्का ।
मध्ये हि तस्य द्विजराज एवं तारावृतो निर्म्मलदेवमार्गे ॥४४॥
त्रातुं स्वशस्यं कृततुंगमञ्चास्तिष्ठन्त्यनिद्राः कृषिका निशायाम् ।
तथा प्रवीरा रघुनाथगृह्या रक्षन्ति लङ्कां चिरजागरूकाः ॥४५॥
विभीषणः प्रीतिमधात् सुमित्रासुतेन सार्द्धं चलितश्च तत्र ।
यत्रास्त धीरः कटके प्रवीरो गुणार्णवो दाशरथिर्वयस्यः ॥४६॥
सहासमाभाष्य जगाद गौरी प्रेक्षस्व लङ्कां विजये वयस्ये ।
वीरोचितं वेशमदृष्टपूर्वं कृत्वा प्रमीला नगरीं विवेश ॥४७॥
एनां निरीक्ष्यैष नरेन्द्ररामः सौमित्रिरन्ये च बलिष्ठवीराः ।
चमत्कृता विस्मयविह्वलाश्च वदन्ति रूपं नहि दृष्टमीदृक् ॥४८॥
मूर्त्यैष वेशो विधृतः कृतेऽङ्क हन्तुं दुरन्तान् दनुजान् समीके ।
शृणु ध्वनिं भैरवमालि वामा करोति हुङ्कारमतीव भीमम् ॥४९॥

कम्पन्न उग्रा रघुनाथसैन्या बन्धे कथयाञ्चतुला च चूडा ।
आस्कन्दितेऽश्वस्य विभूतगात्री चकास्ति गौरी नलिनीव हैमी ॥५०॥
नैनादृशं रूपमिहास्ति लोके न वाऽभवज्जातु भविष्यतीत्थम् ।
सर्वं त्वदुक्तं सखि सत्यमेव प्रत्यब्रवीत् सा विजयेति गौरीम् ॥५१॥
जानाम्यहं वीर्यवती प्रमीला दासी त्वदीयेति तथापि चिन्ता ।
चित्ते मदीये कथमात्मवाक्यं रक्षिष्यसि त्वं शिवसुन्दरीशे ॥५२॥
एकोऽपि जेता स हि मेघनादो विश्वस्य वीर्येण सहान्न तेन ।
सुसंगता शौर्यमयी प्रमीला ज्वाला यथाग्नेर्मिलिताऽनिलेन ॥५३॥
कथं नु रामं सह तेन देवि रक्षिष्यसि त्वं समरे ममात्थ ।
कथं नु वा लक्ष्मण आजिमूर्ध्नि हनिष्यतीमं हतशक्रराज्यम् ॥५४॥
क्षणं विचिन्त्याथ जगाद दुर्गा सखि प्रमीला मम शक्तिभूता ।
तेजो मयाऽस्या विहनिष्यते श्वः सायं यथा सौरकरैर्मणीनाम् ॥५५॥
सौमित्रिरव्यर्थशरव्य एनं नूनं समानेष्यति घोरयुद्धे ।
कीनाशगेहं मम शक्तिनष्ट-स्वदारसामर्थ्यमलं भुजङ्गम् ॥५६॥
पत्या समं सा पुरमेष्यतीदं शिवश्च संविघ्नन इन्द्रजेता ।
सन्तोषयिष्याम इमां विषण्णां कृत्वा सखीं तुल्यहृदं प्रमीलाम् ॥५७॥

उक्त्वा तावद् गिरिशदयिता मन्दिरं स्वं प्रविष्टा
देवी निद्रा मृदु मृदु पदं धाम कैलासमागात् ।
प्रीतास्तस्मिन् जनसमुदयाः पुष्पतल्पेषु सुप्ताः
शम्भोर्भाले नवशशिकला भासयामास धाम ॥५८॥

इति श्रीमेघनादवधे महाकाव्ये प्रमीलारामसाक्षात्कारो नाम
एकादशः सर्गः ।

---

# सरल-चित्सुखीसारम्

· ( पूर्वतोऽनुवृत्तिः )

[ निबन्धकः—स्वर्गत-रमेशचन्द्र-वेदान्ततीर्थः ]

तार्किकः ॥—ननु इदं ममापरोक्षव्यवहारयोग्यत्वे सति अवेद्यं न भवति ( वेद्यं भवतीति फलितम् ) ममापरोक्षव्यवहारयोग्यत्वात् इत्यत्र साध्यव्यतिरेकानुमाने इदं ममापरोक्षव्यवहारयोग्यत्वे सति वेद्यं न भवति ज्ञानत्वादिति भवदभिमतसाध्यसाधनाभावयोर्व्याप्तौ यत्र ज्ञानत्वं हेतुः तदभावस्य यथा ज्ञानेतरत्वस्य भवता उपाधित्वमुच्यते, तथा मयापि इदम् अपरोक्षव्यवहारयोग्यत्वे सति वेद्यं न भवति ज्ञानत्वादित्यत्र साध्यव्यतिरेकानुमाने ममापरोक्षव्यवहारायोग्यत्वाद् इत्यस्य हेतोः व्यतिरेकस्य ममापरोक्षव्यवहारायोग्यत्वस्य सुवचमुपाधित्वमुच्यमानं कथं न सहसे ? एवञ्च भवत्प्रदर्शितोपाधेरपि अनुपाधित्वादेतत् सर्वं षण्ढमैथुनायितमिति अव्याहतं मया प्रदर्शितस्य उपाधेरुपाधित्वम् । अपि च भवतो रीतौ चक्रकापत्तिश्च दुर्वारा । ज्ञानेतरत्वव्यतिरेकस्य ज्ञानत्वस्य मदीयसाध्यव्यतिरेकरूपत्वदीयसाध्योन्नायकत्वे सिद्धे ज्ञानेतरत्वस्य उपाधित्वम्, तस्य उपाधित्वे व्यतिरेकानुन्नायकत्वात् ममापरोक्षव्यवहारायोग्यत्वस्य अनुपाधित्वम् , तस्यानुपाधित्वे च ज्ञानत्वस्य प्रथमसाध्यं प्रति हेतुत्वमिति । तस्मान्नेयं रीतिः चतुरचेतसां मतिसरणिमधिरोहति ।

वेदान्ती ॥—भो विद्वन्, आकर्ण्यतां तावत् अवहितहृदा मदीयोऽभिप्रायः । स्वप्रकाशपरमात्मप्रद्वेषात् सूक्ष्मेक्षिकावतामग्रेसरः कुशाग्रीयधीरपि न प्रवेष्टुमर्हति भवान् मदीयतर्कान्तसूक्ष्मवर्त्मनि । ममापरोक्षव्यवहारायोग्यत्वस्य प्रथमसाध्यव्यतिरेकोन्नायकत्वं तावदसङ्गतम् । वेद्यत्वं हि अनेन साधनीयम्, न च तदप्रसिद्धं येन ममापरोक्षेति विशेषणान्तं सार्थकं भवेत्, तस्मात् मद्वेद्यमिदं मद्-

व्यवहारयोग्यत्वाद् इत्येवालमिति व्यर्थविशेषणत्वादहेतुरयम्। अत एव न तद्व्यतिरेकस्य उपाधितेति।

तार्किकः ॥—एवमपि एतदेव दूषणमभिधीयताम्, [illegible] रेण?

वेदान्ती ॥—इयमपि काचन रीतिस्तार्किकैरङ्गीकृतेति प्रदर्शनार्थमियम् अनुसृता मया, अस्याः कस्मिंश्चिद् दूषणे उद्भाविते भवदीयगुरव एव तिरस्कृता भवेयुरिति मे हृदयम्, ध्यायन्तां तावदिदानीम् आत्मनो गुरूणां वाक्यानि।

तार्किकः ॥—किं सन्त्यत्र प्रमाणान्तराणि, यैः शुद्धीभवेत् स्वप्रकाशताऽनुभूतेः।

वेदान्ती ॥—उक्तं प्रागेव मया स्वसंवेद्यस्य स्वप्रकाशात्मनः प्रत्यक्षरूपतया नास्त्यत्र प्रमाणापेक्षा, तथापि भवतो विमतितिरस्काराय अनुमानमपि प्रदर्शितम्, व्यतिरेकिणा अनुमानेन अर्थापत्तिरपि अनुगृहीता, आगमस्तु राजमार्ग एव, नास्त्यत्र अन्धस्यापि अनुसन्धानापेक्षा, अनुभूतौ परप्रकाश्यताया अनुपलब्धेरस्याः स्वप्रकाशता सिध्यतीति अनुपलब्धिरपि प्रभवतितराम्, प्रदीपादिदृष्टान्तेन अस्या अनुमानानुसरणमपि सुकरम्। अपिच विवादपदानि ज्ञानानि घटज्ञानान्यत्वे सति वेद्यत्वानधिकरणानि ज्ञानत्वाद् घटज्ञानवत् इत्यादीनि अनुमानान्तराण्यपि अप्रतिहतबलानि अगणितप्रतिवादिबलं प्रसहन्तेतराम्। ज्ञानमात्रपक्षत्वे घटज्ञानांशे सिद्धसाधनता तदर्थं विवादपदानीति पदोपादानम्, तेन घटज्ञानान्यज्ञानस्य पक्षता वेदितव्या, ततश्च न सिद्धसाधनता। वेद्यत्वानधिकरणमित्युक्ते अप्रसिद्धविशेषणता स्यात्, तन्निवृत्त्यर्थं घटज्ञानान्यत्वे सतीति विशेषणम्, वेद्यत्वानधिकरणस्य अप्रसिद्धत्वेऽपि घटज्ञानान्यत्वे सति वेद्यत्वानधिकरणत्वं घटज्ञाने प्रसिद्धम्, घटज्ञानस्य घटज्ञानान्यत्वानधिकरणत्वादेव, अन्यत्वमात्रत्वानधिकरणत्वम्, घटज्ञानान्यत्वानधिकरणानि इत्युक्ते व्याहतिः, तेषां घटज्ञानान्यत्वादेव, तस्माद् वेद्यत्वग्रहणम्। घटज्ञानान्यज्ञानानां घटज्ञानान्यत्वे सति वेद्यत्वानधिकरणत्वं घटज्ञानान्यत्वानधिकरणत्वाच्च सम्भवति व्याघातात्, नहि घटज्ञानभिन्ने ज्ञाने घटज्ञानान्यत्वानधिकरणत्वमस्ति, तस्य घटज्ञानान्य-

त्वाधिकरणत्वात्, तस्मात् वेद्यत्वानधिकरणत्वमादायैव घटज्ञानान्यत्वविशिष्ट-वेद्यत्वानधिकरणत्वस्य सिद्धिः, ततश्च शिष्टं ज्ञाने अवेद्यत्वम् ।

तार्किकः ॥—अत्रापि अनुमाने घटज्ञानत्वमुपाधिः विराजत एव, घटाज्ञाना-न्यत्वविशिष्टवेद्यत्वानधिकरणत्वरूपसाध्यस्य व्यापकत्वात् ज्ञानत्वहेतोरव्यापकत्वाच्च ।

वेदान्ती ॥—न च एवं दत्तोत्तरेऽर्थे शङ्कितुमर्हति अर्हतामग्रणीर्भवान् । विवादपदं सकर्तृकं कार्य्यत्वात् कुम्भवदिति श्रीमतां परमगुरुभिरुदयनाचार्य्य-पादैः प्रोक्ते ईश्वरानुमाने शरीरजन्यत्वोपाधाविव व्यर्थविशेषणत्वात् । यथा उक्तानुमाने शरीरजन्यत्वं व्यर्थविशेषणत्वादनुपाधिः, जन्यत्वमात्रेण साध्य-व्याप्तिसिद्धेरितरस्य पक्षमात्रव्यावर्त्तकत्वात्, एवं ज्ञानत्वमित्यनेनैव ज्ञानव्यति-रिक्तव्यावृत्तौ सिद्धायां घटपदस्य पक्षीकृतघटज्ञानव्यतिरिक्तज्ञानव्यवच्छेदकत्वात् पक्षेतरतया अनुपाधिः । तस्मात् विगलितसकलकलङ्कमनुभूतेः स्वप्रकाश-त्वानुमानं सिद्धम् । एवमन्येऽपि महाविद्याप्रयोगाः स्वप्रकाशत्वसाधनाय अलंतरां वरीवर्त्तन्ति । वेलातिरेकाद् अस्मत्साध्यस्य सिद्धत्वाच्च नावश्यो-दाहार्यास्तइति मन्ये । किमत्राभिमतम् सकलविद्यापारावारपारीणस्य वेदान्त-महावाक्यमननविशुद्धमनसो निर्लेपस्य साक्षिणो महाराजाधिराजवर्य्यस्येति ज्ञातुं सभाजनाः सविनयं प्रार्थयन्ते ।

राजा ॥ –भो बुधगणमुकुटमणयो विद्वद्वर्य्याः, भोः सभाजनभाजन-सभाजनाः, श्रुतमेतद् भवद्भिर्यत्—

सिद्धा विचारादधुना बुधानां
नित्या त्रिलोकस्य विभासिकेयम् ।
संवित् स्वयंभा तमसां निहन्त्री
ज्योतींषि सर्वाण्यपि भान्ति यस्याः ॥

कश्चित् सभासत् ॥—राजन्, सत्यं सिद्धा संविदः स्वयंप्रकाशता, संदेहो-ऽस्मिन् विगलितोऽस्माकम्, किन्तु श्रुतमस्माभिरात्मा स्वयंज्योतिरिति भगवत्याः श्रुतेरुद्घोषः, नच अनुभूतेः स्वयंप्रकाशतासिद्धावेव आत्मनः तत्सिद्धिः, ज्ञानात्मनोरभेदादिति युज्यते, तयोरभेदे एव सन्देहावतारात् ।

राजा ॥—तिष्ठतु तावदेतदद्य, आगामिन्याममावस्यायां, महामायामन्दिरे देव्याः पूजोत्सवावसरे अस्यार्थस्य निर्णयो भविष्यति। अम्बरमध्यमधितिष्ठति सम्प्रति अम्बरमणिः, तत् माध्याह्निकक्रियासु प्रवर्त्तन्तां भवन्तः। परश्वः प्रातरेव महामायामन्दिराङ्गने समवेतैर्भवितव्यं भवद्भिः। विद्वांसश्च तत्र [illegible] आहूता भविष्यन्ति।

( सर्वे प्रस्थिताः। )

---

तृतीयदृश्यम्

स्थानम्,—महामायामन्दिरम्

[ प्राङ्गणे महती सभा, सभासदश्च यथास्थानमुपविष्टाः ]

राजा ॥—( महामायां प्रणमन् मुक्तकण्ठः स्तौति,—)

त्वं भूमिस्त्वं जलौघस्त्वमसि हुतवहस्त्वं जगद्वायुरूपा।
त्वञ्चाकाशो मनश्च प्रकृतिरपि महत्पूर्विकाऽहंकृतिश्च।
आत्मा चैवासि मातः परमिह भवती त्वत्परं नैव किञ्चित्
क्षन्तव्यो मेऽपराधः प्रकटितरदने कामरूपे कराले॥

कश्चित् सन्न्यासी ॥—( हस्तामलकं पठति )

निमित्तं मनश्चक्षुरादिप्रवृत्तौ।
निरस्ताखिलोपाधिराकाशकल्पः।
रविर्लोकचेष्टानिमित्तं यथा यः
स नित्योपलब्धिस्वरूपोऽहमात्मा॥

अपरः सन्न्यासी ॥—( निर्वाणमञ्जरीं पठति )

अहं नामरो नैव मर्त्त्यो न दैत्यो न गन्धर्वयक्षःपिशाचप्रभेदः।
पुमान् नैव योषित्तथा नैव षण्ढः प्रकृष्टप्रकाशस्वरूपः शिवोऽहम्॥

वेदान्ती—( प्रविश्य देवीं प्रणमति )

या तिर्य्यङ्नरदेवताभिरहमित्यन्तःस्फुटा गृह्यते
यद्भासा हृदयाक्षदेहविषया भान्ति स्वतोऽचेतनाः।

तां भास्यैः पिहितार्कमण्डलनिभां शक्तिं शिवाधिष्ठितां
ध्यात्वा निर्गतमानगर्भचितिमहं वन्दे स्वभासां मुहुः ॥
अचैत्यचित्स्वरूपत्वादचेतन इव स्थिते ।
चैतन्ये चेतनहेतुं तां वन्दे शक्तिमद्भुताम् ॥
भक्ते भक्तिमयीं पशौ पशुमयीं विद्वत्सु विद्यामयीं
स्रष्टौ ब्रह्ममयीं स्थितौ हरिमयीं कल्पात् पुरश्चिन्मयीम् ।
जीवे वृत्तिमयीं जडे जडमयीं शक्तिं शिवस्याद्भुतां
तां ध्यायामि पदे परात् परतरे स्वानन्दलीलामयीम् ॥

विदूषकः ॥—अयि शिलामयि शैलसुते शिवे, त्रिलोकीमुदरसात् कृत्वापि ते उदरं ममतद् दग्धोदरमिव न पूर्णतामासादयति, लड्डुकानीव मे कति कति एते बाह्मणभागा वा गण्डूषमपि ते न भवन्ति, मन्ये मादृशी ते दुरवस्था, यथाऽहमस्य उदरस्य चिन्तया शिलामयोऽस्मि संवृत्तः, किं त्वमपि तथा शिलामयीतामधिगता ? अथवा किमन्यथा कल्पनेन, अनेन हतभाग्येन शिलादत्तेन भास्करेण शैलाद् उत्कृत्य निर्मितासीति शैलसुतेति कथ्यसे, शिलामयीता तु प्रत्यक्षत एव दृश्यते, इत्येतत् तत्त्वबोधविकलैः वराकैः कथमन्यथान्यथा स्तूयसे कल्प्यसे चेति नाहं बुद्धिसागरोऽपि बोद्धुमर्हामि, मत्तोऽयं मे वयस्यश्चाटुकार इव राज्ञः, त्वं जलं त्वं स्थलं त्वमात्मा इत्यादि किं किं न प्रालपत्, वराकां एतां तावद् भिक्षुकीं पुनः उपलब्धः आत्मा, अहमित्याद्युक्तिभिः आत्मनः परमबोधमुज्जगार, परन्तु पण्डितम्मन्योऽयं भण्डो वेदान्ती तावत् "स्वभास्यैर्मेघाद्यैः पिहितसूर्यमण्डलनिभाम्" अथच "स्वभासां चितिमि"ति त्वां बहुधा विरुद्धवाचा सविशेषं स्तुत्वा आत्मनः पाण्डित्यं प्राचीकशत् । अहो मूर्खता, भवतु एतत्, त्वं तु यारि सारि, मोदकादिप्रसादैर्मा मां ब्राह्मणं वञ्चयेति सभक्ति निवेदयामि ।

कश्चित् सभागत ॥—उदरसर्वस्वोऽपि सत्यमाह अयं ब्राह्मणः, प्रत्यक्षतो विरुद्धानि अन्योन्यव्याहतानि च वाक्यान्येतानि श्रुत्वा सन्दिग्धं नो हृदयम्, पूर्वेद्युर्वदतोऽव्यक्तम् अनुभूतिरेव स्वप्रकाशेति, अहंशब्दाभिधेय आत्मा, परमे-

श्वरश्च स्वप्रकाशः परप्रकाशो वा निर्णयो न जातः । मन्ये महत्यामस्यां परिषदि अस्यार्थस्य विनिर्णयो भविष्यति ।

राजा ॥—भो भो विपश्चिद्वर्याः अनेकसंशयच्छेत्तारः, आत्मा स्वप्रकाशो न वेति संशयस्य निर्णयं ज्ञातुमुत्कण्ठितेयं परिषत्, कृपया तन्निर्णयेन कृतार्थतां गमयितुमर्हन्ति सन्तो नः ।

प्राभाकरः ॥—घटमहं जानामीत्यादिप्रतीतेः आत्मनोऽपि प्रकाश्यतानुभवात् घटादिज्ञानप्रकाश्य एव भवितुमर्हति सः, सर्वप्रत्यक्षेऽस्मिन् कथं संशयावकाशः ।

वेदान्ती ॥—क एवमाह भोः !

चिद्रूपत्वादकर्म्मत्वात् स्वयंज्योतिरिति श्रुतेः ।
आत्मनः स्वप्रकाशत्वं को निवारयितुं क्षमः ॥

आत्मा संविद्रूपः संवित्कर्म्मतामन्तरेण अपरोक्षत्वात् संविद्वदिति प्राभाकरं भवन्तं प्रत्यनुमानात् आत्मनः संविद्रूपता सिध्यति, संविदश्च स्वप्रकाशता प्रागेव सिद्धा ।

प्राभाकरः ॥—किं नामात्रापरोक्षत्वं भवतोऽभिप्रेतम् ? यदि अपरोक्षज्ञानरूपं तदा आत्मनि उभयवादिसिद्धं तन्नास्तीति असिद्धिः ।

वेदान्ती ॥—अपरोक्षव्यवहारविषयत्वमत्रापरोक्षत्वमभिप्रेतम्, नापरोक्षज्ञानविषयत्वम् अपरोक्षज्ञानत्वं वेति न साधनवैकल्यासिद्धी दोषौ अवतरतः ।

प्राभाकरः ॥—व्यर्थमत्र ते हेतौ संवित्कर्म्मतामन्तरेणेति विशेषणम् । अथवा संवित्कर्म्मतारहितत्वादित्येवमुच्यतां किं विशेषणद्वयोपादानेन, अतो व्यर्थविशेषणतादोषदुष्टमिदमनुमानं न साध्यसाधनायालम् ।

वेदान्ती ॥ नैवम् ,—घटादौ अपरोक्षव्यवहारयोग्यत्वं वर्त्तते, अतः तद्व्यावर्त्तनाय संवित्कर्म्मतामन्तरेणेति विशेषणम्, अतीतादौ च संवित्कर्म्मताभावो वर्त्तते अतः तद्व्यावृत्तये अपरोक्षत्वादिति विशेषणं प्रयुक्तमिति न व्यर्थविशेषणतादोषः ।

( क्रमशः )

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

June, 1935. | १८५७ शकीये ज्यैष्ठे १८श-वर्षस्य २य-संख्या | Vol. XVIII No. 2

## रसमयी

### षष्ठः परिच्छेदः

( षोडशखण्डस्य १६४ पृष्ठतोऽनुवर्तते )

तस्मिन्नेवाहनि सायं क्षेत्रमोहनस्य शयनागारे खुल्लतातभ्रातुष्पुत्रौ संलपन्तावास्ताम्। दिवा तावत् खुल्लतातमहोदयेन कपाटस्य बहिर्देशे गृह-भित्तिषु च सर्वत्र रामनामानि विलिखितानि। अद्य द्वावेवैकस्यां शय्यायां शयिष्येते, उपाधानस्य चाधस्तात् कृत्तिवासविरचितं रामायणं रक्षिष्यते, गृहे च सर्वरात्रं प्रदीपः प्रज्वलिष्यति— एतत् सर्वं स्थिरीकृतम्।

क्षेत्रमोहनेनोक्तम्, तर्हि किं मया कर्तव्यं तात? अपि विवाहस्य रोध एव विधेयः?

खुल्लतातेनोक्तम्, न खलु तत्र किमपि प्रयोजनं पश्यामि।

"अथ किमपि पीडनोपद्रवादिकं सङ्घटेत?"

तातमहोदयेन क्षणं विचिन्त्योक्तम् भयकारणं किमपि नावलोकयामीति।

यत् त्वयोक्तम्—उदेति मे मानसेऽभिलापः कण्ठं ते पिनह्मीति ।

नहि । न खलु प्रभविष्यत्यसौ तथा विधातुम् । यथा तथा वा भवतु सर्वथा पतिरेवासीति ।

अन्यदपि यदुक्तम्—मा कुरु विवाहम् करोपि चेत् अशेषा ते दुर्गतिर्भविष्यतीति ।

'अशेषा दुर्गतिर्भविष्यति' इत्यतः अहमेवाशेषां ते दुर्गतिं विधास्यामि इत्यर्थः कदाचिन्न स्यात् । तस्यार्थ एवमेव प्रतिभाति—समधिकवयसि विनिवृत्ते विवाहे यास्तावत् सांसारिक्योऽशान्तयः समुपनमन्ति ता एव नवापि सङ्कटिष्यन्ते इति ।

क्षेत्रमोहनमहोदयस्तूष्णीं स्थितः । एकतस्तावज्जागर्ति भीतिर्मनसि, अपरतश्च नैव प्रभवत्यसौ निरोद्धुं विवाहवासनाम् ।

निर्वृत्तः परेद्यवि वाग्दानविधिः । परं क्षेत्रमोहनस्य भौतिकपत्राधिगमवृत्तान्तोऽप्यचिरादेव बहुलीभूतः । क्रमेण च मन्त्रिणो रजनीमहोदयस्यापि श्रवणसरणिमापतितोऽयमुदन्तः, स खलु आङ्गलभाषाभिज्ञ इति पूर्वमेवोक्तम् । एतच्च श्रुत्वासौ सशब्दमुच्चैर्जहास, उवाच च, भूतम् इति ! विंशतितमेऽस्मिञ्छतके भूतस्यास्तित्वे प्रत्यय आधेयः ?

विवाहवासरोऽपि निरूपितः फाल्गुनमासस्याष्टमदिवसः । केवलं दिनपञ्चकमेवावशिष्यते । उभाभ्यामेव पक्षाभ्यां सम्यक् सम्भारादिकं सञ्चियते । अपराह्णे बहिर्द्वारप्रकोष्ठे क्षेत्रमोहनमहोदयः कतिभिश्चित् सुहृज्जनैः परिवृतः स्थितः । एषु चैको राजकीयव्यवहाराजीवः, तस्य च समाख्या—मनोहरमहोदयः । पारेचत्वारिंशमस्य वयः । नेत्रयुगले च, सुवर्णमयमुपनेत्रम् । शिरस्तावदस्य सज्जारुरोमसदृशैः केशसमूहैर्निचितम् । मुखमण्डलं प्रभूतश्मश्रुगुम्फसमावृतम्, पाणौ दीर्घाः कररुहाः, किं बहुना जनोऽयं थियसफिष्ट एव । क्षेत्रमहोदयस्य भौतिकपत्रप्राप्तिवृत्तान्ताधिगमानन्तरमेव मनोहरमहोदयेन संस्थापितं तेन साकं मित्रत्वम् । तत्र चासीदपरः कश्चन नव्यतरुणः सुरेन्द्रनाथाभिधानः । अयम् एल ए परीक्षाम् उत्तीर्णः शिक्षितः

मोक्कारपदवाच्यो व्यवहाराजीवः। सुबहून्याङ्गलभाषामयाण्याख्यायिका-पुस्तकानि वाचितान्यनेन।

सुरेन्द्रनाथेनोक्तम्, क्षेत्रमहाशय, अत्र मे किञ्चिद् वक्तव्यं वर्तते। बहुशः खलु पठितमाख्यायिकाग्रन्थेषु यद् बाष्पीयशकटादीनां सङ्घर्षे वा पोतभङ्गे वा अन्यस्मिन् वा तथाविधे व्यतिकरे सर्वैरेव प्रतीयते अमुकस्ता-वन्मृतः, मृत्योः साक्षिणोऽप्युपलभ्यन्ते, परं ग्रन्थस्यान्तिमे भागे सन्दृश्यते जीवत्येवासाविति। अत एव जीवत्येव वा भवतः पत्नी, कूटपत्रं वेदं भवताऽधिगतम् इति मे प्रत्ययः। पत्रमिदं तदीयमेव हस्ताक्षरं विस्पष्टं प्रकाशयतीति भवतां द्रढीयान् विश्वासः, अतो जीवत्येव भवतां पत्नी इत्यवश्यमेव प्रत्येतव्यम्। अस्यां हि विंशतितम्यां शताब्द्यां कथमपि वेतालानामस्तित्वं न शक्यते प्रत्येतुम्।

तच्छ्रुत्वा थियसफिष्ट-व्यवहाराजीवमहोदयेनोक्तम्, किमिति भद्रमहोदय! किमिति विंशशताब्द्यां वेतालानामस्तित्वं प्रत्येतुं न प्रभवति भवान्?

तरुणेन मोक्कारमहोदयेनोक्तम्, मया कदापि न वीक्षितमिति।

तदाकर्ण्य मनोहरमहोदयेन विज्ञेनेव विहस्योक्तम्, अपि कदापि प्रत्यक्षी-कृतो भवता सम्राट् सप्तमेडवार्डमहाभागः।

न हि, नैव प्रत्यक्षीकृतः।

अपि प्रत्येति भवान् सोऽस्तीति।

अथ किम्। तत्र बीजमेतदेव यद्यपि मया न प्रत्यक्षीकृतस्तथापि परः-सहस्रैः पुरुषैः प्रत्यक्षीकृतोऽसौ, चित्राणि च बहूनि सन्दृष्टानि, परं "मया प्रत्यक्षीकृतो वेतालः" इत्यद्यापि कोऽपि वदन्न वीक्षितः। सर्वैरेवोच्यते, श्रुतमस्माभिरतिश्रद्धेयपुरुषमुखात् तैः किल दृष्टो वेताल इति।

मनोहरमहोदयः सुनिबिडश्मश्रुजालाभ्यन्तरे दीर्घनखराजि सञ्चालयन्न-वोचत्, भवतोक्तम्—परःसहस्रैः सन्दृष्टो जनैः सम्राट् इति। एवमेव परःसहस्रैः प्रत्यक्षीकृतोऽशरीरी जीवात्मा। भवतोक्तम्, सम्राजोऽदृर-विंशानि चित्राणि सन्दृष्टानि भवता। एवं वेतालानामप्यदृरविंशानि

चित्राणि प्रभवामि भवते प्रदर्शयितुम्। अथ द्रष्टुमिच्छति भवान्, आगच्छतां सद्यो मदीयं भवनम्। मदीये कचन पुस्तके केटिकिङ्गित्यस्याश्चित्रं वर्त्तते। प्रथमचार्लससमाख्यस्याऽऽङ्गलनरपतेः शासनसमये समवर्त्तत केटिकिङ्गभिधाना कन्यका। षोडशे वर्षे पदमर्पयन्त्येवासौ व्ययुज्यत प्राणैः। व्यतीतशतकस्य मध्यभागे आमेरिकाया युरोपस्य च तेषु तेषु प्रदेशेषु, 'सुबहुषु सेयाँ-सेष्वाविर्बभूव स्थूलशरीरं परिगृह्य केटिकिङ्। तस्या हस्तनाडी परीक्षिता, देहाभ्यन्तरे चासिधेनुकां सम्प्रवेश्य दृष्टम् मनुष्याणामिव तस्या अपि शरीराद् विनिर्गच्छन्ति रुधिरबिन्दव इति। तस्याश्छायाचित्रमपि गृहीतम्, ततश्च विनिर्मितमालेख्यं मदीये पुस्तके सन्निविष्टं वर्त्तते, मम गृहे आगन्तव्यम्, अहं प्रदर्शयिष्यामि।

सुरेन्द्रमहोदयेन विहस्य प्रोक्तम्, अहो भवतामार्जवं यदीदृशेष्वप्यनु-भावचेषु प्रलपितेष्वाधीयते प्रत्ययः। भूतास्तित्ववादिनां कति वा विप्रलम्भनचेष्टितानि न समुद्घाटितानि! केटिकिङ्गः शरीरे छुरिकाप्रवेशनेन रुधिरपातः समजनि इत्येव समुपन्यस्तं भवता प्रमाणत्वेन विश्रम्भणीयत्वे। मया पुनरेतद्विपरीतमेव मन्यते। यदि छुरिकया वेधनेनापि नास्रोष्यद् रुधिरधारा, अथ च शरीरी कश्चन प्राणी दण्डायमानः प्रत्यक्षयकरिष्यत, तदैव मे प्रत्ययोऽभविष्यत्, नेदं परमार्थतो मनुज इति। प्रकृतमिदानीं पर्यालोच्यताम्। भूतं तावद् गृहस्य पुरस्ताद् वटवृक्षे निवसति। यदा तावत् प्रभवति पत्रं विलेखितुं तदा विनैवायासं प्राभविष्यदत्रागत्य वक्तव्यमात्मीयं विवरीतुम्। परं तथाऽकृत्वा पत्र-पत्रावरणलेखनीमसीप्रभृतीनां संग्रहक्लेशस्य पदमुपनीत आत्मा। अतिसन्निधाने एव वर्त्तत इत्यत्रागत्य काष्ठमयाधारे पत्रस्य संरक्षणमेव सुकरमासीत्, तथापि स्वीकृत्य श्रमातिशयं क्रोशार्धं गतं पत्रप्रापणाधिकरणे स्थापयितुं पत्रम्। ततश्च ताम्रमुद्राद्वितयं व्ययीकृत्य 'टिकिट्'पत्रस्यापि क्रय आवश्यकीभूतः। महोदय, भौतिकजगति मुद्राश्चेत् परमार्थत एवं सुलभास्तर्हि वरं तत्रैव गत्वा व्यवहाराजीववृत्तिमुपक्रंस्ये।

मनोहरमहोदयः किञ्चिदिवापरक्तोऽवदत्, भद्रमुख, नेदं नर्मोचितं वस्तु। इमे तावद् गभीरा विषयाः। हिमालयात् तावन्महात्मानोऽप्यन्त-रान्तरा पत्रप्रापणाधिकरणेन प्रपयन्ति पत्राणि। न खलु प्रगाढं परिशीलनं गरीयसीं च चर्चामन्तरेण विषयेऽस्मिन् युज्यते स्वाभिमतं प्रकटयितुम्। कुटुम्बिलालाभिधानः कश्चन महात्मा सुबहून्येवंविधानि पत्राणि प्रेषितवान-स्मदीयाय मादाम् ब्लाभातूस्कये। तैरपि इच्छामात्रेणैव साक्षात् प्रादुर्भूय वक्तव्यं वक्तुं सुकरमासीत्, अथवा पत्राणि समुत्पाद्य काष्ठासनोपरि निक्षेपण-मपि सुकरमासीत्। तथापि पत्रप्रापणाधिकरणद्वारेणैव प्रेषितानि तैः पत्राणि।

एतदाकर्ण्य शिक्षितेन मोक्तारमहोदयेन मृदु विहस्योक्तम्, अहो! कः कालः कुटुम्बिलालस्य पत्राणां कूटत्वेन प्रतिपादितस्य। डाक्तारहञ्ज-सनसमाख्यः कश्चन विज्ञानविन् स्वयं समागत्य भारतवर्षं विषयमिमं समनु-सन्धाय विस्पष्टमेव प्रतिपादितवान् मादाम् ब्लाभातूस्क्या दामोदरसमाख्येन चापरेण केनचन विनिर्मितानि कूटपत्राणि।

निशम्यैतत् थियजफिष्टमहोदयेन सभ्रूभङ्गमुक्तम्—मा तावदधिगीष्ठाः ईर्ष्यालूनां जनानां तानि पुस्तकानि। मम समीपमागन्तव्यम्, समीचीनानि पुस्तकानि मया दास्यन्ते। तेषां वाचनेनाखिलोऽविश्वासो विलीयेत। मादाम्ब्लाभातूस्क्या महत्त्वं तस्या आइसिस् आनूभेल्ड् पुस्तकपठनेनैव प्रत्येष्यति भवान्।

सुरेन्द्रमहोदयेन सस्मितमुक्तम्, न खलु तत्पुस्तकमधीतं मया, परम्, आइसिस् मेरी माच् आनभेल्ड् अर् दि ष्टोरि अव् दि ग्रेट् महात्मा होक्स पुस्तकं पठितमेव। अत्रैव पुस्तकालये वर्तते। द्रष्टुमिच्छसि चेत् प्रभ-वाम्यानीय प्रदर्शयितुम्।

वचनेनानेन मनोहरमहोदयः क्रोधेनाग्निकल्पः सञ्जातः। उक्तवांश्च, अद्य एवैकं वचनं शिक्षितं भवद्भिः। न खलु विद्यते तथाविधं महद् वस्तु यत् खलु न शक्यते विषयीकर्तुं गालीनाम्। खलैः शठैश्च दुरात्मभिर्मिथ्यैव प्रचारितो मादाम्ब्लाभातूस्क्या अपराधवृत्तान्तः।

अवसरे चास्मिन् समुत्थितो वहिः शब्दः, आर्य, वर्तते पत्रम् इति। परस्मिन्नेव मुहूर्ते प्रविश्य पत्रवाहकेण समर्पितं क्षेत्रमोहनमहोदयस्य पाणौ पत्रमेकम्। गृहीतमात्रे एव पाणौ पत्रे शून्याः सञ्जाता दश दिशः क्षेत्र-मोहनमहोदयस्य। उक्तञ्च तेन, पुनश्च भोस्तदेव।

उन्मोच्य पत्रस्य बहिरावरणं वाचयित्वा च सर्वेषां पुरतो निक्षिप्तं पत्रम्। थियजफिष्टमहोदयेन महताभिनिवेशेन गृहीत्वा पत्रमनुवाच्य च मोक्तारमहोदयस्य हस्ते संन्यस्तम्।

पत्रं तावदीदृशमेव—

श्रीश्री दुर्गा

स्वहायः।

प्रणामपूर्वकनीवेदनञ्च विसेसः,

अहो ते साहसम्! वागुदानमपि संवृत्तम्। त्वं मोन्नसे अहं यत् पत्रं त्वां लिखिता तत् वृथा भीतिप्रदर्शकम्। न खलु रसीब्राह्मणी तादृशी स्त्री। मया निषिद्धोऽपि विवाहं करिस्ससि। इदानीमप्यवहितो भव। इमां दुर्मीतिं परित्यज। नो चेत् कदाचिन्निशीथे यदा त्वं निद्रितः स्थास्यसि तदा घटवृक्षात् अवतिर्य तव वक्षसि दशमनमेकं प्रस्तरं संस्थापयिस्यामि। निद्रा ते कदापि न प्रबोधमेष्यति।

रसमइ।

क्रमेण सर्वै रेव वाचितं पत्रम्। वाचयित्वा च स्तब्धा अतिष्ठन्नखिलाः सभासदः। शिक्षितस्य मोक्तारमहोदयस्यापि परिम्लानं वदनकमलम्। तथापि तेन दूरं निक्षिप्य संशयपिशाचिकामुक्तम्—अङ्ग क्षेत्रमहोदय, पुनरपि तावत् सम्यक् परीक्ष्यतां लेखनम्। अप्येतत् परमार्थत एव भवतः पत्न्या हस्ता-क्षरम्। आहोस्वित् कापि संशयोन्मेषको विशेषो वर्तते।

क्षेत्रमहोदयेनोक्तम्, नास्ति लेशतोऽपि संशयः। केवलं हस्ताक्षरसंवाद-श्चेत्, तर्ह्यपि कदाचित् समदेक्ष्यम्। तस्या यत्र यत्र या या वर्णाशुद्धयः

सर्वदैवाभवन्, पत्रेऽप्यस्मिंस्ता एव सन्दृश्यन्ते। सा हि सर्वदैव श्रीद्वितय-मेकत्र विलिख्य किञ्चिद्दूरे दुर्गाशब्दं लिखति स्म—पत्रद्वितयेऽपि तथैव वर्तते। किञ्च, पत्रे तथाविधा वाचोयुक्तिर्वर्तते या किल जीवन्त्या तया सदैव प्रयुक्तासीत्।

सर्व एव तूष्णीं स्थिताः। व्यतीते च कियतिचित् काले सुरेन्द्रमहोदयः कण्ठं संशोध्यापृच्छत्, अपि समुपस्थित आसीद् भवांस्तस्या मरणा-वसरे ?

क्षेत्रमहोदयेनोक्तम्, वाढम।

शवमनुसृत्य श्मशानभूमिं गतो भवान् ?

अथ किम्।

चितायां उपरि देहस्य विन्यासादूर्ध्वं कदापि प्रत्यक्षीकृतं तस्या मुखम् ?

न प्रत्यक्षीकृतम्! मयैव तावत् स्वयं मुखाग्निर्विहितः। न खलु यत् त्वया मन्यते तत्तथा। कोऽपि प्रमादो न समजनि।

तरुणमोक्तारस्तदानीमधोवदनः स्थितः। तत्रैकेनोक्तम्—

There are more things in heaven and earth, Horatio, than are dreamt of in your philosophy.

(भो होरेशिओ, विद्यन्ते खलु स्वर्गे मर्त्ये च तथाविधानि बहूनि वस्तूनि येषां सत्ता स्वप्नेऽपि न सम्भाव्यते दर्शनशास्त्रेषु।)

अपरेण केनचनोक्तम्, अथ किम्। दृश्यतां तावदस्मद्देशे अथवा कथ-मस्मद्देश एव केवलम्—सर्वेष्वेव देशेषु आदिमकालादारभ्य प्रवृत्तो यः प्रत्ययप्रवाहः अस्ति भूतमिति कश्चन पदार्थः स किं सर्वथा निर्मूल एव ?

राजकीयव्यवहाराजीवमहोदयेनोक्तम्—न खलु केवलमन्धविश्वास एवायम्। विगतपञ्चाशद्वत्सरेषु युरोपे आमेरिकायां च निःसंशयमेव प्रति-पादितं प्रेतानामस्तित्वम्। आसीत् स समयो यदा वैज्ञानिकप्रवरेण टिण्डा-लेनाप्युपहासपुरःसरं प्रत्याख्यातं भूतानामस्तित्वम्। सुप्रथितपत्रिकासम्पाद-केन ष्टेड्महोदयेन तस्य कस्मिंश्चित् पुस्तके विलिखितम्—Of all the vul-

gar superstitions of the half-educated, none dies harder than the absurd delusion that there are no such things as ghosts ( अर्धशिक्षितानां जनानां मानसेषु ये तावद् विलसन्ति व्यामोहास्तेषु नास्ति भूतमित्येव संस्कारो दुष्करतमः समुच्छेत्तुम् । ) एवमुक्त्वा लब्धविजय इव वीरोऽपातयत् कटाक्षं सुरेन्द्रमहोदये ।

सन्ध्या समागता । अतस्तस्मिन् दिने सभाभङ्गः समजनि । तस्य वटवृक्षस्य अधस्ताद् गच्छतः सुरेन्द्रमहोदयस्यापि गात्राणि छमछममायन्ते स्म ।

( क्रमशः )

---

# देवभाषा-देवनागराक्षरयोरुत्पत्तिः

[ निबन्धकः—श्रीद्विजेन्द्रनाथगुहचतुर्धुरीणः । ]

"चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आविवेश ॥"

ऋग्वेद ४।५८।३

अत्र व्याकरणमहाभाष्यभाषको गोनर्दीयो गोणिकातनयो नानादर्शननिष्णातो भगवान् पतञ्जलिः प्राह—"चत्वारि शृङ्गाणि चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च । त्रयो अस्य पादाः । त्रयः कालाः भूतभविष्यद्वर्त्तमानाः । द्वे शीर्षे । द्वौ शब्दात्मानौ, नित्यः कार्यश्च । सप्त हस्तासो अस्य । सप्त विभक्तयः । त्रिधा बद्धः । त्रिषु स्थानेषु बद्धः । उरसि कण्ठे शिरसीति । वृषभो वर्षणात् । रोरवीति शब्दं करोति । कुत एतत् । रौतिः शब्दकर्मा । महो देवो मर्त्याँ आविवेशेति । महान् देवः शब्दो मर्त्याँ मरणधर्माणो मनुष्याः तानाविवेश । महता देवेन नः साम्यं यथा स्यादित्यध्येयं व्याकरणम् ।" ( इति महाभाष्ये पस्पशाह्निकम् ) ।

तत्रैव भगवान् यास्कः—“चत्वारि शृङ्गेति वेदा वा एत उक्ताः। त्रयो अस्य पादा इति सवनानि त्रीणि। द्वे शीर्षे प्रायणीयोदयनीये। सप्त हस्तासः सप्त च्छन्दांसि। त्रिधा बद्धस्त्रेधा बद्धो मन्त्रब्राह्मणकल्पैः। वृषभो रोरवीति रोरवणमस्य सवनक्रमेण ऋग्भिर्यजुर्भिः सामभिर्यदेनमृग्भिः शंसन्ति यजुर्भिर्यजन्ति सामभिः स्तुवन्ति महो देव इत्येष हि महान् देवो यद्यज्ञो मर्त्यां आविवेशेत्येष हि मनुष्यानाविशति यजनाय”। ( इति नैरुक्ते परिशिष्टे—१३।१।७ )।

यद्वा—

चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति॥

ऋग्वेदे १।१६४।४५, अथर्ववेदेऽपि ९।२५।२७।२९।१

अत्रापि च यास्काचार्यपादाः—“चत्वारि वाचः परिमितानि पदानि तानि विदुर्ब्राह्मणा ये मेधाविनो गुहायां त्रीणि निहितानि नार्थं वेदयन्ते। गुहा गूहतेस्तुरीयं त्वरतेः। कतमानि तानि चत्वारि पदान्योङ्कारो महाव्याहृतयश्चेत्यार्षम्। नामाख्याते चोपसर्गनिपाताश्चेति वैयाकरणाः। मन्त्रः कल्पो ब्राह्मणं चतुर्थी व्यावहारिकीति याज्ञिकाः। ऋचो यजूंषि सामानि चतुर्थी व्यावहारिकीति नैरुक्ताः। सर्पाणां वाग्वयसां क्षुद्रस्य सरीसृपस्य चतुर्थी व्यावहारिकीत्येके। पशुषु तूणवेषु मृगेष्वात्मनि चेत्यात्मप्रवादाः। अथापि ब्राह्मणं भवति सा वै वाक् सृष्टा चतुर्धा व्यभवदेष्वेव लोकेषु त्रीणि पशुषु तुरीयम्। या पृथिव्यां साऽग्नौ सा रथन्तरे यान्तरिक्षे सा वायौ सा वामदेव्ये। या दिवि सादित्ये सा बृहति सा स्तनयित्नौ। अथ पशुषु ततो या वागत्यरिच्यत तां ब्राह्मणेष्वदधुस्तस्माद् ब्राह्मणा उभयीं वाचं वदन्ति या च देवानां या च मनुष्याणामिति।” ( इति नैरुक्ते परिशिष्टे—१३।१।९ )। अथैषाक्षरस्य स्तुतिः तावत् ऋग्वेदे १।१६४।३९, अथर्ववेदे ९।२८।८, तैत्तिरीय आरण्यके १०।१३, पुनः

ऋग्वेदे १०।७१।८, नैरुक्ते परिशिष्टे च १३।१।१०-१३ वर्तते। अत्रत्य दुर्गाचार्य्यव्याख्यानमपि द्रष्टव्यम् )।

भूयश्च नैरुक्ते उपोद्घातप्रकरणे पदचतुष्टयोद्देशे उक्तम्—"तद्यान्येतानि चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्च तानीमानि भवन्ति"। अनन्तरं सप्तचत्वारिंशदक्षराण्युद्भूतानीति श्रूयते। यथा—"सर्वे स्वरा इन्द्रस्यात्मानः। सर्वे ऊष्माणः प्रजापतेरात्मानः। सर्वे स्पर्शा मृत्योरात्मानः।"[१] ( सामवेदीयछान्दोग्योपनिषद् २।२२।३ )। अत्र स्वराणाम् इन्द्रः एव कर्त्ता ( अर्थात् सर्वे अकारादयश्चतुर्दश स्वरा देवराजेन इन्द्रेण उद्भाविताः )। शषसहाः—प्रजापतिना चन्द्रेण च। कादयो मपर्यन्तानि समुदयाक्षराणि महादेवेन च वर्णितानि ( ककारादयः स्पर्शवर्णा यरलवाश्च )। अत्रैव शाङ्करभाष्यम्—"सर्वे स्वरा अकारादयः :इन्द्रस्य बलकर्मणः प्राणस्याऽत्मानो देहावयवस्थानीयाः। सर्वे ऊष्माणः शषसहादयः प्रजापतेर्विराजः कश्यपस्यैवाऽत्मानः। सर्वे स्पर्शाः कादयो व्यञ्जनानि मृत्योरात्मानः * * * *

* * * * *"

इन्द्रादयो वेदे देवताः प्रख्याताः। तेषाम् आवासात् (त्रिदशालयात् देव-नगराद् वा) सप्तचत्वारिंशदक्षराण्याविर्भूतानि। तन्निमित्तमेव "देवनागरः वर्णः" इति कथ्यते, तदन्विता भाषा "देवभाषा" इति व्यपदिश्यते। तथाहि —"एते वै देवाः प्रत्यक्षं यद् ब्राह्मणाः।" ऋक्संहितायामपि नेम ऋषिः (८।१००।११)—"देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति।"

अत्र सायणभाष्यम्—"एषा माध्यमिका वाक् सर्वप्राण्यन्तर्गता धर्माभिवादिनी भवतीति विभूतिमुपदर्शयति यां देवीं द्योतमानां माध्यमिकां वाचं देवा माध्यमिका अजनयन्त जनयन्ति तां वाचं विश्वरूपाः सर्वरूपाः व्यक्तवाचः अव्यक्तवाचश्च पशवो वदन्ति तत्पूर्वकत्वात् वाक्य-प्रवृत्तेः

दीर्घतमा औचथ्यः पुनरेव—"मन्त्रयन्ते दिवो अमुष्य पृष्ठे विश्वविदं वाचमविश्वमिन्वाम्" ( ऋग्वेद १।१६४।१० )। सायणभाष्यम् तत्रैव—

"* * * * *

दिवः पृष्ठे द्युलोकस्योपरि अन्तरिक्षे मन्त्रयन्ते गुप्तं परस्परं भाषन्ते देवाः किं • विश्वविदं विश्ववेदनसमर्थां विश्वैर्वेदनीयां वा अविश्वमिन्वाम् असर्वव्यापिनीं वाचं गर्जितलक्षणाम् अमुष्य आदित्यस्य संबन्धिनीं मन्त्रयन्ते इत्यर्थः।" तस्मिन् काले भाषा अव्याकृता अभूत्। यथा—"वाग् वै पराची अव्याकृता अवदत्।" देवसृष्टा भाषा 'देवभाषा" सर्वजनमान्या सर्वविदिता च। ततश्च, चतुर्मुखस्य आदेशात् इन्द्र-चन्द्र-महेशाः "व्याकरणं" नाम शब्दशास्त्रं विरचयाम्बभूवुः ।

तत्र माहेश-व्याकरणविषये किंवदन्ती-

"यान्युज्जहार माहेशाद् व्यासो व्याकरणार्णवात्।
किन्तानि पदरत्नानि सन्ति पाणिनिगोष्पदे ॥" इति ।

पश्चान्तरे यमस्य शब्दशास्त्रं न विद्यते इत्येव प्रसिद्धिः। तथाहि पाणिनीयशिक्षाग्रन्थे, (३)—"त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शम्भुमते स्थिताः"। अत एव अत्र जगति त्रेतायुगस्य इन्द्र-चन्द्र-भूतेशाः आदितोऽक्षरोत्पादन-कर्त्तार एवेति सम्यग् बोध्यम्।

प्रत्याहारसूत्राण्यखिलानि माहेश्वराण्येव विराजन्ते। गार्ग्य-गालव-शाकटायन-आपिशलि-काश्यप-चाक्रवर्म्मण-भारद्वाज-शाकल्य-सेनक- स्फोटायनाः इति दश वैयाकरणाः पाणिनिमुनेः पूर्वाचार्याः आसन्। बहुशः सूत्राणि इतस्ततः प्राक् अकारिषुः। पश्चात् शालातुरीयो दाक्षीपुत्रो वैयाकरणकेशरी पाणिनिः सर्वेषां शिक्षार्थिनां सौकर्याय "अष्टाध्यायी-सूत्रपाठम्" ( अष्टकं पाणिनीयं वा ) व्यरीरचत्।

पूर्वस्मिन् कालेऽपि षट्सु वेदाङ्गेषु व्याकरणं नाम शब्दशास्त्रं प्राधान्येन परिगण्यते स्म। तथाचोक्तं—"प्रधानं च षडङ्गेषु व्याकरणम्। * * दुष्टाञ्छब्दान् मा प्रयुक्ष्महीत्यध्येयं व्याकरणम्।" (महाभाष्ये) पस्पशः।

अपिच—"सर्ववेदपारिषदं हीदं शास्त्रम्।" पाणिनि सूत्रभाष्यकारकः पातञ्जलिः (पाः ६।३।१४, अधस्तात्।) वैदिकलौकिकसंस्कृतपठनविषये व्याकरणस्य नितरां प्रयोजनमस्ति। तत्र वाक्यपदीये भर्त्तृहरिणा वर्णितम्— "पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते। तथैव लोके विद्यानामेषा विद्या परायणम्"। (१।१४) अन्यच्च—"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते। अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥" (१।१२४)। तत्रैव पुण्यराज-टीकायाम्—"सा हि वाग्रूपता प्रत्यवमर्शः सविकल्पकज्ञानं तन्सम्पादिकेत्यर्थः" (१।१२५)।

शार्मण्यदेशोत्पन्नेनैलंडदेशनिवासिना मोक्षमूलरमहोदयेन महर्षेः पाणिनेर्विषये कीर्त्तितम्—

"In grammar, I challenge any scholar to produce from any language a more comprehensive collection and classification of all the facts of a language than what we find in Pāṇini's Sūtras."

पाणिनीय शब्दशास्त्रप्रवीणेनः अध्यापकेन Goldstücker महाभागेन अभिव्यक्तं—

"Pāṇini's work is indeed a kind of natural history of the Sanskṛt language."

अन्यच्च अध्यापकः Monier Williams अपि आह—"The grammar of Pāṇini is one of the most remarkable literary works that the world has ever seen, and no other country can produce any grammatical system at all comparable to it, either for originality of plan or analytical subtlety. * * His Śāstras are a perfect miracle of condensation." (*Indian Wisdom*, p. 172).

सूरिपुङ्गव-डाक्तार डि, आर, भाण्डारकरेणाप्युक्तम्—

"Pāṇini occupies a unique position in the history of Sanskṛt literature. His system of Grammar is a marvel of technical perfection, a monument of encyclopædic research and originator of the philosopy of linguistics. All the speculations of his predecessors were superseded by his thorough, original and far-reaching work, and he at once

became the founder of a School of Grammar which has taken such a complete possession of the field that it seems destined never to escape it. It is thus no wonder that Pāṇini was held in such high esteem that he was elevated to the rank of a Ṛṣi or Seer. And this estimation of his countrymen has been upheld even by the European scholars who freely acknowledge that the modern Science of Comparative Philology is much indebted to the exposition of Grammar by Pāṇini and his school." (A Historical investigation on Pāṇini together with a brief account of Kātyāyana and Patañjali. By R. K. Gupta. With an introduction by Dr. D. R. Bhāṇḍārkar.)

व्याकरणं विना पदपदार्थानां सम्यग् ज्ञानं न लभ्यते स्म। उक्तञ्च —

"निघण्टुना विना वेद्यो विद्वान् व्याकरणं विना।
अनभ्यासेन धानुष्कस्त्रयो यान्तीह हास्यताम्॥"

बहवो वैयाकरणा अस्मिन् भारतवर्षे प्रादुर्भूता आसन्। जैनहेमचन्द्रस्य प्राकृतव्याकरणम् अद्यापि विद्यमानमस्ति। वररुचिकृतः प्राकृतप्रकाशोऽपिबहुजनमान्यः सर्वैश्च विद्यते। वार्त्तिकमहाभाष्यवाक्यपदीयभाषावृत्तिकाशिकान्याससिद्धान्तकौमुदीचान्द्रजैनेन्द्राभिनवशाकटायन (न तु उणादिसूत्रकारः शाकटायनः)-हैम (यद्वा, सिद्धहेमचन्द्राभिधस्वोपज्ञशब्दानुशासन) सारस्वतसुपद्मसंक्षिप्तसारमुग्धबोधलघुकौमुदीप्रयोगरत्नमालाकारिकावलीत्येवमादीनि बहूनि व्याकरणानि बहवश्च वैयाकरणाः श्रूयन्ते। वेदतत्त्वार्थप्रकटनाय प्रातिशाख्यानि प्रणीतानि। इह तु वेदस्य व्याकरणविशेषो ज्ञेयः। ऋग्वेदस्य ऋक्प्रातिशाख्यं (महर्षिशौनककृतम्), सामवेदस्य पुष्पसूत्रम् (सामप्रातिशाख्यं वा, महर्षिपुष्पप्रणीतम्), कृष्णयजुर्वेदस्य तैत्तिरीयप्रातिशाख्यं, शुक्लयजुर्वेदस्य वाजसनेयिप्रातिशाख्यं (महर्षिकात्यायनविरचितम्), अथर्ववेदस्य अथर्वप्रातिशाख्यं (महर्षिशौनककृतम्) इति। ततश्च वेदषडङ्गानि शास्त्राणि रचितानि। तथाहि—

"शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसां चयः। ज्योतिषामयनं चैव

षडङ्गो वेद उच्यते ॥" तत्र पाणिनीययाज्ञवल्क्यनारदीया इत्यादयः शिक्षाग्रन्थाः। यज्ञरीतिर्यत्र विद्यते स एव कल्पः। त्रिप्रकारास्ते श्रौतगृह्यसामयाचारिकाः। वेदार्थावबोधनाय आग्रायणआचार्यएकेऐतिहासिकाऔदुम्बरायण औपमन्यव औणभावामःकात्थक्यकौत्सक्रौष्टुकिगार्ग्यगालवचर्मशिरातैटिकिनैदानानैरुक्तापूर्वयाज्ञिकाब्राह्मणमूयाज्ञिकावार्ष्यायणिर्वैयाकरणाशतवलाक्षशाकटायनशाकपूणिशाकल्यस्थौलाष्ठीविकाठकद्वारिद्रतिकब्राह्मण इत्यादयो महामुनयो निरुक्तानि (वैदिककोषाणि) व्यरचयन्। भगवता पिङ्गलाचार्येण छन्दोग्रन्थो रचितः। पश्चात्, वृत्तरत्नाकरछन्दोमञ्जरीश्रुतबोधप्रभृतयो छन्दोग्रन्थाः प्रवृत्ताः। लगधनामा कश्चित् मुनिविशेषः सर्वादौ ज्योतिषशास्त्रं रचयामास। परतो भृगुनारदादयः बहून् ज्योतिषग्रन्थान् अलिखन्। वैदिकयुगे तु लगधेन 'पञ्जिका' च उद्भाविता इति संभवति स्मैव। शेषमुनेः यजुर्वेदीयवेदाङ्गज्योतिषं प्रचलितमासीत्। तथाचोक्तं—"वेदा हि यज्ञार्थमभिप्रवृत्ताः कालानुपूर्वा विहिताश्च यज्ञाः। तस्मादिदं कालविधानशास्त्रं यो ज्योतिषं वेद स वेद यज्ञम् ॥" (वेदाङ्गज्योतिष, ३)।

अव्याकृता देवभाषा काले व्याकृतिमभजत्। तदानीं "संस्कृतं" अभिहितम्। दण्डिना तु "संस्कृतं नाम दैवी वागन्वाख्याता महर्षिभिः" (काव्यादर्शे १।३३), इत्युक्त्वा दैवी वागेव प्रकृतिप्रत्ययविभागाख्यसंस्काररूपेण संस्कृतभाषेति व्याख्यातम्। वाग्भटालङ्कारे च (२।२) स्पष्टतः ध्वनितम्,—

"संस्कृतं स्वर्गिणां भाषा शब्दशास्त्रेषु निश्चिता।" उक्ता संस्कृतभाषा भूमण्डले सर्वैरेव सर्वत्र प्रज्ञाता। तथाच, ऋग्वेदीयकौषीतकिब्राह्मणे ७।६,—"पथ्या स्वस्तिः तस्माद् उदीच्यां दिशि प्रज्ञाततरा वाग् उद्यते। यो वा तत आगच्छति तस्य वा शुश्रूषन्त इति ह स्माह एषा हि वाचो दिक् प्रज्ञाता।" (Ed. by B. Lindner, Jena, 1887, p. 31). इति।

# मेघनादवधम्

## द्वादशः सर्गः

[ निबन्धकः—श्रीनित्यगोपालविद्याविनोदः ]

कवीनामादिमं वन्दे वाल्मीकिं कविकुञ्जरम् ।
राज्ञो दासो यथा तीर्थं त्वत्पादमनुयाम्यहम् ॥१॥
ध्यात्वा तव पदाम्भोजमहोरात्रमसंख्यकाः ।
कवयोऽमरभावाप्ता यशोमन्दिरपूजिताः ॥२॥
श्रीकण्ठपदभाक् सूरिर्भवभूतिस्तथाऽमरः ।
कालिदासः सरस्वत्या वरपुत्र इति श्रुतः ॥३॥
श्रील-भर्त्तृहरिः श्लाघ्यो मुरारेर्मुरलीध्वनि- ।
प्रीतं जगत् कीर्त्तिवासः कृत्तिवासो जगन्मणिः ॥४॥
क्रीडाम्यहं कथं तात त्वत्प्रसादं विना गुरो ।
कवितासरसि प्रीतैः राजहंसकुलैः समम् ॥५॥
काव्योद्यानात्तवाऽऽचार्य्यं सञ्चित्य कुसुमावलीम् ।
माल्यं ग्रन्थितुमिच्छामि मातृभाषाविभूषणम् ॥६॥
दीनोऽहं कुत्र प्राप्नोमि रत्नालीं त्वत्कृपां विना ।
रत्नाकर कुरु कृपां शिष्ये निष्किञ्चने प्रभो ॥७॥
हिरण्मयी पुरी लङ्का सुवर्णदीपमालिनी ।
राजेन्द्राणी यथा रत्नहारा राजति हर्षिता ॥८॥
तूर्य्यं ध्वनति गेहेषु नर्त्तक्यो नृत्यविह्वलाः ।
गायन्ति गायकाश्चारु क्रीडन्ति नायिकागणाः ॥९॥
अट्टहासपराः काश्चिदन्या निधुवनोन्मदाः ।
अपराः शीधुपानेन मत्ता धावन्ति सर्वतः ॥१०॥
द्वार्षु नृत्यन्ति माल्यानि फलपुष्पयुतानि च ।
उत्पतन्ति केतनानि क्षौमाणि गृहशीर्षके ॥११॥

वातायनेषु दीप्यन्त मणिदीपाः सहस्रशः ।
यान्ति लोकास्तथायान्ति सन्ततं राजवर्त्मनि ॥१२॥
ध्वनिप्नुनि च सर्वत्र जन-कोलाहलो महान् ।
महोत्सवदिने यादृक् माद्यन्ति पुरवासिनः ॥१३॥
वृष्यन्ते कुसुमासाराः परितो नगरीं शुभाम् ।
गन्धभारं वहन् स्निग्धो मन्दं वाति समीरणः ॥१४॥
जागर्त्तीव निशीथेऽद्य लङ्का कृतस्नेति धावति ।
निद्रा द्वारेषु लोकानां विरामवरदायिनी ॥१५॥
रामं सलक्ष्मणं युद्धे श्वो हनिष्यति रावणिः ।
निराकर्त्ता च शत्रून् स फेरून् सिंहो यथा नदन् ॥१६॥
वद्धमानेष्यति तथा ज्ञातिवैरिविभीषणम् ।
वीक्ष्य नाम्ना तमोमुक्तं विश्वं प्रीतिमवाप्स्यति ॥१७॥
आशाकुहकिनी गीतमेतद् गायति सर्वतः ।
पथि तीर्थे गृहे द्वारे श्रुत्वा हृष्टाः क्षपाचराः ॥१८॥(विशेषकम्) ।
अशोकवनिकामध्ये सीता राघववल्लभा ।
शोकार्त्तिका तमश्छन्ने कुटीरेऽश्रूणि मुञ्चति ॥१९॥
भीमाश्चेट्यः सतीं हित्वोत्सवकौतुकनिर्भराः ।
हीनप्राणां मृगीं त्यक्त्वा व्याघ्रीवाटन्ति दूरतः ॥२०॥
तत्र म्लानानना देवी सूर्यकान्तमणिर्यथा ।
आकरे तमसाच्छन्ने यद्वान्द्रिरोदधेस्तले ॥२१॥
स्वनति श्वसनो दूराद् विलापीव क्षणे क्षणे ।
पत्राणि मर्मरायन्ते यान्ति मूकाश्च पक्षिणः ॥२२॥
महीरुहैर्मनस्तापादुन्मुक्तकेशवत् क्षितौ ।
पतितानि तले तेषां कुसुमानि समासते ॥२३॥
रुदत्य इव धावन्ति तटिन्य ऊर्मिनिस्वनैः ।
वक्तुं प्रियतमं सिन्धुं सीताया दैन्यदुर्दशाम् ॥२४॥

सुधांशुकिरणास्पृष्टमभवत्तद् महद् वनम् ।
अस्वच्छसलिले कच्चिद् विकाशं याति पङ्कजम् ॥२५॥
तथाप्युज्ज्वलमासीत्तद् वनं तद्रूपकान्तिभिः ।
यत्रासीद्धाम्नि सा ह्येका देवी दिव्यप्रभामयी ॥२६॥
तदा तत्रायथौ रामा रुदती सरमा सती ।
वधूवेशेन तत्पादं राजश्रीरिव रक्षसाम् ॥२७॥
क्षणेन कियता साध्वी विमृज्याश्रु सुलोचना ।
प्रोवाच जानकीं वाचं मधुरं प्रीतिकोमलम् ॥२८॥
निश्चय्य भीषणाश्चेट्यो देवि त्वां कौतुकोन्मदाः ।
हित्वा याताः पुरमिति श्रुत्वागां त्वत्पदाम्बुजम् ॥२९॥
आनयं सम्पुटं पूर्णं सिन्दूरेण त्वदाज्ञया ।
तिलकं दातुमिच्छामि ललाटे तेऽतिसुन्दरे ॥३०॥
आयुष्मतीशिरोरत्न नैतं वेशं त्वमर्हसि ।
हन्त दुष्टो नृशंसश्च राक्षसाधिपतिर्भृशम् ॥३१॥
कश्छिन्द्यान् मृदुलं पर्णं कमलस्य तथा कथम् ।
सोऽहरन्मण्डनं दिव्याद् देहात्ते बोद्धुमक्षमा ॥३२॥
उन्मुच्य सम्पुटं साध्वी सीताया भालपट्टके ।
विदधे चित्रकं यत्नादग्रहीच्च रजः पदोः ॥३३॥
ललाटफलके तस्याः सिन्दूरबिन्दुरुद्बभौ ।
तारारत्नं यथा चारु सायं गोधूलिभालके ॥३४॥
देवाराध्या तनुः स्पृष्टा क्षम्यतां देवि ते मया ।
ज्ञात्वा मां त्वत्पदाम्भोजसेवाकार्य्यैकमानसाम् ॥३५॥
उक्त्वेयत्तरुणी भूय आसाञ्चक्रे पदोरधः ।
जज्वाल तुलसीमूले हैमदीप इवोज्ज्वलः ॥३६॥
शनैरुवाच वैदेही वृथा निन्दसि रावणम् ।
चन्द्राननेऽमुचं सर्वं मण्डनं स्वयमाश्रमे ॥३७॥

धृताहं तेन तत्र सर्वं पापिष्ठेन वनाश्रमे ।
अक्षिपं तत समालक्ष्य लङ्कां वल्लभ आगतः ॥३८॥
रत्नानि मणयः किंवा मौक्तिकानि भवन्तीह ।
यानि तानि समस्तानि हन्मि पद्भ्यां प्रियाप्तये ॥३९॥
प्रत्याह सरमा देवि श्रुत्वा तव सुधानिधेः ।
मुखात् स्वयंवरकथां शुश्रूषेऽहमिदं वद ॥४०॥
कस्माद्रघुशिरोरत्नमाजगाम वनं शुभे ।
कथं वा राक्षसेन्द्रस्त्वां जहार विजनस्थिताम् ॥४१॥ (युग्मम्) ।
शमय त्वं सुधावृष्ट्या दास्यास्तृष्णां मृगेक्षणे ।
अस्मिंश्चेत्यः स्थिता दूरे विस्तरेण शृणोम्यहम् ॥४२॥
व्याजेन केन स चोरोऽववञ्चत सलक्ष्मणम् ।
राघवं छद्मना केन रत्नं वैतदपाहरत् ॥४३॥
मधुमञ्जुवचाः साध्वी जानकी प्राह सादरम् ।
पवित्रा वारिधारेव पतन्त्यद्रेर्गुहामुखात् ॥४४॥
सीताकल्याणपरमे सरमे सखि ते स्पृहा ।
श्रोतुं यदि तदा वच्मि श्रूयतामवधानतः ॥४५॥
तीरे गोदावरीनद्याः सुनेत्रेऽभूव निर्वृतौ ।
कपोतदम्पतीवैकनीडे प्रीतिरसाप्लुतौ ॥४६॥
भूमौ नन्दनकल्पायां पञ्चवट्यां महावने ।
आस्व तत्र सिषेवे नौ सुमतिर्लक्ष्मणः सदा ॥४७॥
कोऽभावस्तस्य यस्यासीद् भाण्डारी दण्डकः स्वयम् ।
तत्रालि लक्ष्मणो नित्यमाहरत् फलमूलकम् ॥४८॥
चकार मृगयां स्वामी क्वचित्तु जीवहिंसकः ।
नासीत् स करुणासिन्धुर्वैलिप्त इति विश्रुतः ॥४९॥
नास्मरं पूर्वसौख्यं मे सती राजेन्द्रनन्दिनी ।
रघुकुलवधूर्भूत्वा वनेऽपि सुखितावसम् ॥५०॥

अस्फुटन् कति पुष्पाणि नित्यं तत्र समन्ततः ।
वक्तुं तान्यक्षमा शश्वद् वसन्तस्तत्र राजते ॥५१॥
प्रातर्मधु-कुहु-ध्वानैः प्रत्यहं मां पिकेश्वरः ।
विनिद्रामकरोद्दृष्टा सुखिनी मत्समा क्वचित् ॥५२॥
काक्षि निमीलयेद्राज्ञी कल्ये वैतालिकस्तुता ।
अन्वहं मादृशी प्रीता सुधांशुवदने वद ॥५३॥
अनृत्यच्छिखिनी सार्द्धं शिखिना सुखिनी सुखम् ।
मम द्वारि न वै तुल्यं नर्त्तकद्वन्द्वमीक्ष्यते ॥५४॥
प्रत्यहं विविधाः सत्त्वाः नानावर्णा विहङ्गमाः ।
करभा मृगपोताश्च ममायन्नतिथिव्रजाः ॥५५॥
असेवेऽहिंसकान्न् जीवान् सादरं तटिनी यथा ।
मरौ शीतजलैः पूर्णा तृषार्त्तान् प्राणिसञ्चयान् ॥५६॥
दर्पणो मे सरस्यासीत् केशान् प्रासाधयन्तथा ।
कुवलयैस्तथा पुष्पैर्विचित्रैर्भूषिताभवम् ॥५७॥
सस्मितं वीक्ष्य मां नाथो वनदेवीति संलपन् ।
तोषयामास परमं भूयः किं लप्स्यते मया ॥५८॥
दग्धे नेत्रे यदं किं तद् द्रक्ष्यतोऽस्मिन् कुजन्मनि ।
आशासरसि राजीवं यन्मे नेत्रमणिश्चिरम् ॥५६॥
इत्युक्त्वा सारुदत्तूर्णीं देवी रामैकजीविता ।
रुरोद सरमा चास्याः सिक्तं वस्त्रमभूज्जलैः ॥६०॥
क्षणेन कियता नेत्रे विमृज्य सरमा सती ।
अब्रवीद् विनीता सीतापदाम्भोजं प्रणम्य च ॥६१॥
पूर्ववार्त्ताप्रसङ्गेन चित्तं ते व्यथते यदि ।
अलं स्मृत्वा निरीक्ष्याश्रु हृदयं मे विदीर्यते ॥६२॥
मधुस्वरेव कादम्बा प्रत्याह जानकी शुभे ।
विनेमां दुर्भगां कान्या रुद्याद् भुवि निरन्तरम् ॥६३॥

पूर्वोदन्तं प्रभाषे त्वां वयस्येऽवहिता शृणु ।
दीनाय दैन्यविज्ञप्तिः पयोवाह इवाम्भसाम् ॥६४॥
अतस्त्वां कथयिष्यामि शृणवालि सरमे प्रिये ।
त्वदृतेऽरिपुरेऽस्मिन् मे कान्यास्ति हितकाङ्क्षिणी ॥६५॥
गोदावरीतटे रम्ये पञ्चवट्यां सुखं वयम् ।
आस्म कान्ति कथं वक्ष्ये तस्या लोकोत्तरां वराम् ॥६६॥
स्वप्ने नित्यमशृणवं वीणां वनश्रियाहताम् ।
आसीना सरसीतीरेऽपश्यं सोरकरच्छटाम् ॥६७॥
देवबालामिवासक्तां केलौ कमलकानने ।
कदा मुनिवधूरागाद्वसन्ती पर्णमन्दिरम् ॥६८॥
वितत्य विटपिमूले कदा वा रञ्जिताजिनम् ।
उपाविशं सखीमिव छायां सम्बोध्य सुन्दरीम् ॥६९॥
अन्यदानन्तिषं रङ्कान् कुरङ्गया सह कानने ।
पिकध्वनिं समाकर्ण्य व्यधां गीतं मधुस्वरम् ॥७०॥
नवमालिकया बध्वा चूतोद्वाहमसाधयम् ।
दम्पत्योर्मञ्जरीं नव्यां सम्बोध्य सुखमाप्नवम् ॥७१॥
गुञ्जितेऽलौ सुमधुरं नव्यो-जामातृसंज्ञया ।
सकौतुकं समाहूय तमानन्दमलं गता ॥७२॥
कदा वा प्रभुणा साद्धमभ्राम्यं तटिनीतटे ।
अपश्यं श्यामलाम्बुपुसु सर्वेन्दुनूतनाम्बरम् ॥७३॥
अन्यदारुह्य तुङ्गाद्रिमासीनाहं पदोस्तले ।
नाथस्य व्रतती-कल्पा मूले चूतस्य शाखिनः ॥७४॥
बहुभिरादरैः प्रेष्ठोऽतोषयन्मां सुधामयैः ।
वचोभिस्तन्नु कं वक्ष्ये केनोपायेन वा पुनः ॥७५॥
कैलासाद्रौ यथा शम्भुः पञ्चभिर्वदनैरुमाम् ।
वेदानशिक्षयत्ताहगात्रीर्थं भर्त्तृ वक्त्रतः ॥७६॥

विषण्णा जोषमासिष्ट कर्णान्तायतलोचना ।
ततोऽब्रवीद् वरारोहा सरमा समदुःखिता ॥७७॥
वाणीं ते शृण्वती भद्रे जुगुप्से राजसम्पदः ।
ईदृशो वनवासो मे रोचते नृपवैभवात् ॥७८॥
मनो मे भयमाधत्ते चिन्तयन्त्या इमां कथाम् ।
यतः सौरकरस्पर्शात् तमोऽरण्यं विगाहते ॥७९॥
एवं निशः समासत्तौ देशे यस्मिन्नपि क्वचित् ।
भवन्ति म्लानवदनाः सर्वे तद्वासिनो जनाः ॥८०॥
कथं लोका न हृष्यन्ति तत्रत्या यत्र ते गतिः ।
मधुमयि सुधामूर्त्ते भवेद् भुवनमोहिनि ॥८१॥
कृपया ब्रूहि मे देवि कथं राक्षसभूपतिः ।
जहार त्वां पतियुक्तां केन वा कौशलेन सः ॥८२॥
अशृणोद् मधुरां वाणीं दासी तव मधोर्दिने ।
मत्तकोकिलगीतञ्च न त्वीदृश-सुधावचः ॥८३॥
पश्य नीलाम्बरे चन्द्रस्त्वद्रूपद्युतिनिष्प्रभः ।
हसन् पिबति त्वद्वाक्यसुधां सुधानिधिः स्वयम् ॥८४॥
खगाः सर्वे मूकाः परभृतमुखाः पुष्पितवने
त्वदीयं पीयूषं सुललितवचः श्रोतुमनसः ।
अतो याचेऽहं त्वाममृतवचनैः शान्तय तृषां
शशाङ्कास्ये तेषां तव सहचराणां प्रणयिनाम् ॥८५॥

इति श्रीमेघनादवधे महाकाव्ये प्रमीलारामसाक्षात्कारो नाम
द्वादशः सर्गः ।

# सरल-चित्सुखीसारम्

( पूर्वतोऽनुवृत्तम् )

[ निबन्धकः—स्वर्गत-रमेशचन्द्र-वेदान्ततीर्थः ]

तार्किकः ॥—आत्मानं जानामीति प्रत्यक्षमपलपन् जरन्मीमांसककरालम्बो भवादृशः आत्मनि संवित्कर्म्मता नास्तीति प्रजल्पितुं न शक्नुते कणभक्षाक्षपाद-मतानुसारिषु जीवत्सु अस्मादृशेषु, अतः आत्मनः ज्ञानकर्म्मतायाः प्रत्यक्षसिद्ध-त्वेन असिद्धोऽयं संवित्कर्म्मताराहित्यविशिष्टोऽयं हेतुः ।

वेदान्ती ॥—विरमतु तावद् भवान्, श्रीमतां मुखप्रावरणमुपाह्रियते मया, घटतज्ज्ञानयोः सम्बन्धः आत्मनिष्ठः ज्ञाननिष्ठत्वात् घटविषयत्वादिवदिति भवतः नैयायिकादीन् प्रति अनुमानात् आत्मनश्चिद्रूपत्वसिद्धिः । यद्यपि भवतां मते ज्ञानज्ञेययोः विषयविषयिभावः नाम न भावरूपः कश्चित् सम्बन्धः, तथापि अभावरूपत्वात् अस्त्येव आश्रितत्वम्, वेदान्तराद्धान्ते तु आध्यासिकः सम्बन्धोऽत्र अस्त्येव । सम्बन्धस्य सम्बन्धिमात्रनिष्ठत्वात्, सम्बन्धिभूतयोः ज्ञानघटयो-रन्यतरस्य आत्मत्वमादाय आत्मनिष्ठत्वं पर्यवस्यति, अत्रापि घटस्य आत्मत्व-मुभयवाद्यनभिमतमिति विप्रतिपन्नज्ञानस्य आत्मतामापादयति ।

तार्किकः ॥—विपक्षे बाधकतर्काभावेन कथमनेन तेऽभिमतस्य साध्यस्य सिद्धिर्भवितुमर्हति ।

वेदान्ती ॥—विपक्षे चात्मनः संशयविपर्यासगोचरत्वापत्तिर्बाधिका, यदि आत्मा चिद्रूपो न स्यात् तर्हि संशयविपर्यासगोचरः स्यात्, यतश्च आत्मा संशयविपर्यासगोचरो न भवति अतो नात्मा अचिद्रूपः, नहि आत्मनि अहमन्नहं वेति कश्चित् सन्दिग्धे, नैवाहमिति वा विपर्यस्यति । न चैतत् स्वप्रकाश-ज्ञानरूपतामन्तरेण अवकल्पते । अतो विपक्षबाधकतर्कसत्त्वात् आत्मन-

तार्किकः ॥—अन्तरेणापि ज्ञानरूपतां दुःखादिवदेतद् उपपद्यते इति शङ्कनीयम् अस्ति, यथा दुःखादि चिद्रूपं न भवति एवं संशयादिगोचरोऽपि न भवति, नहि कश्चिद् अहं दुःखो न वेति सन्दिग्धे, दुःखे सति नैवाहं दुःखीति वा विपर्यस्यति, अतः अचिद्रूपस्य दुःखादेः संशयविपर्ययाभाववत् अचिद्रूपस्यापि आत्मनः संशयविपर्ययाभावो भविष्यतीति अङ्गीकारे का हानिर्भवतः।

वेदान्ती ॥—न च एवं विवक्तुमर्हति भवान्, तेषां दुःखादीनां स्वसत्तायां ज्ञानाव्यभिचारात् तदुपपत्तेः, नहि दुःखादीनां ज्ञानव्यतिरेकेण स्थितिर्विद्यते, ततः सदा ज्ञानप्रकाश्यत्वात् ज्ञानस्य च स्वप्रकाशत्वात् तत्सहचारिणामपि दुःखादीनां संशयाद्यभावः, अहो माहात्म्यं स्वप्रकाशज्ञानसम्राजः।

तार्किकः ॥—आत्मनि अपि एवं ज्ञानाव्यभिचारः अभ्युपगम्यते।

वेदान्ती ॥—न च एतत् स्वीकर्तुं युज्यते, सुषुप्त्यभावप्रसङ्गात्, एतन्निष्ठजन्यज्ञानेन एतस्य प्रकाशाव्यभिचारेऽस्य सुषुप्तिर्न स्यात्, एतन्निष्ठकार्यज्ञानोपरमस्यैव एतत्सुषुप्तित्वात्।

तार्किकः ॥—ज्ञानात्मनोः सम्बन्धः अनात्मवृत्तिः ज्ञानवृत्तित्वात् सत्तावत् इत्यस्मिन् सत्प्रतिपक्षे जाग्रति कथमुक्तानुमानात् प्रबलविपक्षक्षीणस्येव अभिमतसाध्यस्य सिद्धिः?

वेदान्ती ॥—न च इत्थं शङ्कनीयम्, ज्ञानमेव आत्मा इत्यभ्युपगच्छतां नः ज्ञानात्मनोः सम्बन्धस्यैव अभावात् आश्रयासिद्धेः प्रतिपक्षस्यैवानुत्थानात्। न हि शवीभूतविपक्षमध्यगतविजयिनः जिगीषोर्विजयासिद्धेराशङ्का समुदेतितरां कस्यापि चेतसि।

तार्किकः ॥—ननु परमप्रमाणभूताभ्यः भवद्भिः कथमपि शङ्कितुमनर्हाभ्यः श्रुतिभ्य एव "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" इतिद्रष्टृदृष्ट्योः सम्बन्धः अधिगत इति अस्मदाचार्य-मानमनोहरकारः प्रातिष्ठिपत्, तत् कथं प्रतिपक्षस्य आश्रयासिद्धेरनुत्थानमिति साटोपमभिधातुं शक्यते भवता?

वेदान्ती ॥—मैवम्, श्रुतेः लोकप्रसिद्धसम्बन्धानुवादेन दृष्टे विनाशित्वा-

भावमात्रप्रतिपादनपरत्वात्, अप्राप्ते हि शास्त्रमर्थवदिति न्यायात्, मुख्यार्थेऽद्वैतश्रुतिविरोधात्, राहोः शिरः इतिवदुपचारेणापि सम्बन्धश्रुतेरुपपत्तेश्च ।

तार्किकः ॥—अहो महती स्वपक्षाग्रहग्रहिलता भवतः, शिरश्छेदेऽपि काकिणीमपि न ददामीति न्यायापातः, अनयोस्तुल्यबलतया भेदप्रतिपादिकया द्रष्टुर्दृष्टेरित्यादिश्रुत्या अद्वैतश्रुतेः स्वार्थत्यागरूपः संकोचात्मको वा विपर्ययः कथं न भवति ?

वेदान्ती ॥—न च एवम्, तत्परत्वातत्परत्वविशेषोपपत्तेः । अस्ति हि श्रुत्यर्थावधारणे तात्पर्यज्ञानस्यापि कारणता, श्रुतेरस्याः अद्वैते एव तात्पर्यं वर्त्तते, तत् कथमतः सम्बन्धसिद्धिर्भवितुमर्हति ?

तार्किकः ॥—सम्बन्धप्रतिपादनेऽस्याः श्रुतेस्तात्पर्यं नास्तीति कथमवगतं भवता ? तदेतत् निरपेक्षया बुद्ध्या निरूप्यताम् ।

वेदान्ती ॥—अद्वैतश्रुतिरुपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गोपेता इति सर्वत्र उपनिषत्सु उपलभ्यते, सम्बन्धसमर्पकत्वेनाभिमतां तावदिमामेव श्रुतिं परीक्षस्व । श्रुतेस्तात्पर्यनिर्णयाय तावत् "उपक्रमोपसंहारावभ्यासोऽपूर्वता-फलम् । अर्थवादोपपत्तिश्च लिङ्गं तात्पर्यनिर्णये ॥" इत्युक्तानि षड्विधानि लिङ्गानि वर्त्तन्ते । अत्र च श्रुतौ अद्वैतविषये एतानि सर्वाणि लिङ्गानि सन्ति । तथाहि,—"आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेन इदं सर्वं विदितम्"इति मैत्रेयीब्राह्मणोपक्रमे एकविज्ञानेन सर्वविज्ञानप्रतिज्ञया अद्वैतेन उपक्रम्य, तथा "यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं विजानीयात्, केन कं पश्येत्" इत्या-दिना अद्वैते एव उपसंहृतः । अतः उपक्रमोपसंहारयोरैक्यात्, अद्वैते तात्पर्य-मवसीयते, एवं,—"एतावदरे खल्वमृतमि"ति फलश्रवणम्, "अस्य महतो भूतस्य निःश्वसितमेतदृग्वेद" इत्यादौ सृष्ट्यादिप्रतिपादनम् अर्थवादः । "स यथा दुन्दुभेर्हन्यमानस्य न बाह्यान् शब्दान्" इत्याद्युपपत्तिः दुन्दुभ्यादिदृष्टान्तैरुप-पादिता, अतः उक्तषड्विधलिङ्गैरद्वैते निर्णीततात्पर्या अतिबलवती अद्वैतबोधिका श्रुतिः लोकप्रवादोपजीविनीं प्राप्तार्थबोधकतया अनुवादरूपां सम्बन्धश्रुतिं कथं न बाधते ?

तार्किकः ॥—ननु तथापि श्रुतस्य षष्ठ्यर्थसम्बन्धस्य परित्यागो नोचितः, अश्रुतकल्पनाप्रसङ्गात्।

वेदान्ती ॥—अत्र चेदद्दष्टदोषात् अश्रद्दधानस्य अपरितोषः, तदा अन्यथा व्याख्यायते मया, यथा सम्बन्धकल्पनासम्भावना न भवेदिति श्रूयताम्,—

देवदत्तस्य भ्रान्तुरितिवत् "द्रष्टुर्दृष्टेरिति" द्रष्टृरूपायाः दृष्टेः दृष्टि-लक्षणो वा यो द्रष्टा तस्य विपरिलोपो नास्तीति सामानाधिकरण्येन षष्ठ्योः सम्बन्धसम्भवे वैयधिकरण्यस्य कल्पनाऽयोगात् अभेदकल्पना एव ज्यायसीति सन्तोष्टव्यम् श्रीमता। ततश्च दृष्टिरूप एव द्रष्टा आत्मा सिद्धः।

तार्किकः ॥—ननु भवतां परमप्रमाणभूतश्रुतावेव "न दृष्टेः द्रष्टारं पश्येः" इत्यादौ वैयधिकरण्येन प्रयोगदर्शनात् दृष्टिद्रष्ट्रोर्भेदः प्रमीयते, तद्वत् अत्रापि वैयधिकरण्येन भेदसम्बन्धः कथं न भवेत्।

वेदान्ती ॥—"न दृष्टेर्द्रष्टारं पश्येरि"त्यादाविव वैयधिकरण्येऽपि अन्तःकरणपरिणामरूपायाः दृष्टेः यो द्रष्टा इति वा परिणामिनोऽन्तःकरणस्य द्रष्टुः साक्षिभूता या दृष्टिः तस्या विपरिलोपो नास्तीति वा अद्वैतश्रुत्यनुगुणे सम्भवति सम्बन्धे गुणिगुणभावेन सम्बन्धकल्पना अविदितमीमांसावृत्तान्त-स्यैव परं शोभते॥

तार्किकः ॥—न ह्येवं व्याख्यानं युक्तं श्रीमतः, "नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" इत्यनेन आत्मनो नित्या दृष्टिरभिधीयते इति नित्यदृष्टिसम्बन्धः स्वरस-प्रतीतिसिद्धः श्रुतेः, तत् कथमन्यथा व्याख्यानं युक्तं भवेत् भवतः?

वेदान्ती ॥—किञ्च एतत् श्रूयताम्, जीवेश्वरयोर्भेदमभ्युपगच्छता भवता नित्यदृष्टिसम्बन्धः कस्य उच्यते इति विवेचनीयम्। न तावत् जीवस्य तस्य अनित्यज्ञानाभ्युपगमात्। नापि ईश्वरस्य, मैत्रेयीब्राह्मणे "न वा अरे पत्युः कामाय पतिः प्रियो भवती"त्यादिना पतिजायादिप्रियसंसूचितं जीवमुपक्रम्य तस्यैव "चैतेभ्यः भूतेभ्यः समुत्थाय तान्येव अनुविनश्यति न प्रेत्य संज्ञास्ती"ति अवस्थान्तरप्रतिपादनावसरे विनाशमाशंक्य "अविनाशी वा अरे अयमात्मा अनुच्छित्तिधर्मा मात्रासंसर्गस्त्वस्य भवति। यद्वै तन्न

पश्यति, पश्यन् वै तन्न पश्यति, नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते अविनाशित्वादित्यविनाशितोपपादनात्। ज्योतिर्ब्राह्मणे च जागराद्यवस्थोपन्यासपुरःसरं "अथ यत्र सुप्तो न कञ्चन कामं कामयते न कंचन स्वप्नं पश्यती"ति सम्प्रसादावस्थानमवतार्य "यद्वै तन्न पश्यति पश्यन् वै तन्न पश्यति नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" इति विशेषविज्ञानाभावेऽपि स्वरूपविज्ञानस्य नित्यत्वप्रतिपादनात्। ईश्वरपक्षे च विशेषविज्ञानाभावस्य वक्तुमयुक्तत्वात् तस्य सर्वदा सर्वज्ञत्वात् सुषुप्त्याद्यवस्थाऽभावाच्च। तस्मात् ज्ञानात्मनोः सम्बन्धः अनात्मनिष्ठः इत्यनुमानम् आश्रयासिद्धमिति सिद्धम्।

तार्किकः॥—ननु ज्ञानम् आत्मा न भवति गुणत्वात् रूपवत्, तथा ज्ञानम् आत्मा न भवति अनित्यत्वाद् इत्याद्यनुमानप्रयोगविरोधात् कथम् आत्मनः ज्ञानात्मकत्वम्?

वेदान्ती॥—भोः प्रेक्षावन्, कथमेवं प्रलपति भवान्, यस्य मते हि नित्यात्मस्वरूपता अभिमता विज्ञानस्य तस्य वेदान्तिनः कथं गुणत्वम् अनित्यत्वं वा ज्ञानस्य स्यात्? अतः—यत् गुणत्वादनित्यत्वाद् ज्ञानमात्मा न भवति रूपादिवदिति अनुमानं तत् सर्वम् अन्यतरासिद्धतया स्वरूपासिद्धत्वेन अपास्तम्।

तार्किकः॥—ननु कथं ज्ञानस्य अगुणत्वं प्रतिपद्यसे, घटज्ञानयोः सम्बन्धः गुणनिष्ठः ज्ञाननिष्ठत्वात् सत्तावत् इत्यनुमानात् ज्ञानस्य गुणत्वं सिद्धम्, सम्बन्धिमात्रनिष्ठस्य सम्बन्धस्य गुणनिष्ठत्वम् अन्यतरसम्बन्धिनो गुणत्वमन्तरेण न घटते, घटस्य तु गुणत्वमुभयानभिमतम् इति ज्ञानस्य गुणत्वसिद्धिः।

वेदान्ती॥ विपक्षे बाधकाभावात् नानेन अभिमतसाध्यसिद्धिर्भवितुमर्हति।

तार्किकः॥—विपक्षे च जानामीति प्रत्ययस्य निरालम्बनत्वप्रसङ्गो बाधकः। यदि च ज्ञानस्य गुणत्वं न स्यात् तदा जानामीति ज्ञानाश्रयं विषयीकुर्वतः प्रत्ययस्य निर्विषयतापत्तिः स्यात्। ज्ञानस्य आत्मस्वरूपत्वे आत्मनः ज्ञानं प्रति आधारत्वायोगात् उक्तप्रतीतिः सर्वथा बाधिता भवेत्।

वेदान्ती॥—मैवं ब्रूहि, रूपतज्ज्ञानयोः सम्बन्धः द्रव्यनिष्ठः ज्ञाननिष्ठत्वात् सत्तावत् इति प्रतिप्रयोगसम्भवात्।

तार्किकः ॥—ज्ञानस्य द्रव्यत्वे जानामीति प्रतीतेर्निराश्रयतापत्तिः स्यादित्युक्तो बाधकस्तर्कः ।

वेदान्ती ॥—जानामीति चानुभवस्य अन्तःकरणवृत्त्याश्रयप्रमातृविषयतयाऽपि उपपत्तेः न प्रत्ययाधारत्वानुपपत्तिः । तथाहि विषयसंयोगे अन्तःकरणस्य यो वृत्तिरूपः परिणाम उदेति, चैतन्योद्भासिता सा वृत्तिः ज्ञानत्वेन व्यवह्रियते, तस्यास्तु वृत्तेराश्रयः अन्तःकरणावच्छिन्नचैतन्यात्मकप्रमातृचैतन्यम्, अतः प्रमातृचैतन्यस्य वृत्त्यवच्छिन्नचैतन्यं प्रति आधारत्वात् जानामीतिज्ञानाधारत्वं प्रमातुरुपपद्यते ।

तार्किकः ॥—तादृशवृत्तेरङ्गीकारः नास्मत्सम्मतः गौरवात् ।

वेदान्ती ॥—मैवं वादीः, श्रुत्यनुग्रहाय नित्यज्ञानमेकं तावत् भवताम् अनेकात्मस्थानीयम् अस्माभिः कल्प्यते, भवतां प्रतिक्षणोत्पत्तिविनाशशालिज्ञानस्थानीयाऽस्माभिः वृत्तिरङ्गीक्रियते, कुतोऽत्र लाघवस्थाने गौरवभयं भवतां, प्रत्युत श्रुत्यनुग्रहात् श्रेयसीयं प्रणालीति सिद्धा आत्मनश्चिद्रूपता ।

तार्किकः ॥—का नाम श्रुतिरनुगृह्यतेऽनया कल्पनया ?

वेदान्ती ॥—"विज्ञानमानन्दं ब्रह्म" "प्रज्ञानं ब्रह्म" "ज्ञानघन एव" इत्यादिश्रुतिभ्यश्च आत्मनः चिद्रूपत्वसिद्धिः, कल्पनया चानया सा एव अनुस्रियते ।

तार्किकः ॥—श्रुतौ अत्र प्रज्ञायतेऽस्मिन् इति व्युत्पत्त्या अधिकरणपरतया ज्ञानशब्दो योज्यः ।

वेदान्ती ॥—अद्वैतश्रुतिविरोधात् नच एवं व्याख्यातुं युज्यते । तस्मात् साधूक्तं मया चिद्रूपत्वादिति । अथेदानीं श्रूयताम् आत्मनः स्वप्रकाशत्व द्वितीयहेतुः । अकर्मत्वाच्च आत्मनः स्वप्रकाशत्वम् । आत्मनः वेद्यत्वे अभ्युपगते स्वाश्रयज्ञानविषयतया कर्मकर्तृभावविरोधप्रसङ्गात्, नहि सम्भवति आत्मैव ज्ञानस्य कर्तृत्वेन ज्ञानाश्रयः, स एव ज्ञानविषयतया कर्मेति ।

तार्किकः ॥—कथमेतन्न सम्भवति,—यतः,—सुखादिविशिष्टस्य अहं सुखीत्यादिज्ञानकर्मत्वं केवलस्य च कर्तृत्वमित्याकारभेदादविरोधो भवि-

ष्यति को दोषः । यथाहि लोके एकस्य प्रतियोग्युपाधिभेदात् अनेकाकारता पिता, भ्राता, मातुलः, श्यालक इत्यादिः, एवम् उपाधिभेदाद् एकस्य कर्त्तृत्वं कर्मत्वं न भविष्यति ।

वेदान्ती ॥—नच एवं वक्तुं शक्यते, एवं सति गमनादिक्रियास्वपि केवलस्य कर्त्तृत्वं गमनादिविशिष्टाकारेण च कर्मत्वमित्याकारभेदेनाविरोधात् कर्मकर्त्तृभावविरोधस्य सर्वत्रोच्छेदप्रसङ्गात् । पित्रादीनां स्वरूपत एकत्वेऽपि प्रतियोगिनानात्वात् सम्भवति तदपेक्षया अनेककल्पनाविषयत्वम्, इह तु उपाधिविशिष्टस्यैव तं प्रति कर्त्तृत्वं कर्मत्वं चेति विप्रतिषिद्धम्, नियमेन अनुपलब्धेः, गमनादौ अपि एवम् उपाधिभेदेन अविरोधप्रसङ्गाच्चेति ।

प्राभाकरः ।—(पार्श्वस्थः नोदयति) ननु भवतु आत्मनः अकर्मत्वम्, तथापि नात्मनः स्वप्रकाशत्वं तत्तदर्थसंवेदनाश्रयतयापि स्फुरणोपपत्तेः । घटादिविषयाणि यानि संवेदनानि तदाश्रयतया आत्मनः स्फुरणकर्मतामन्तरेणापि स्फुरणोपपत्तौ न स्वप्रकाशत्वं कल्पनीयम् ।

तार्किकः ॥—तूष्णीं स्थीयतां तावत् तौतातिकदेशानभिज्ञैः, क्रियाफलभाक्त्वं हि कर्मत्वम्, अतः भवन्मतेऽपि ज्ञानक्रियाजन्यस्फुरणरूपफलभागोऽपि अस्य आत्मनः स्यादेव कर्मत्वम् ।

प्राभाकरः ॥—अहो प्रदर्शितं महद् विद्वत्त्वम् पण्डितप्रकाण्डेन तार्किकवर्येण श्रीमता कर्मलक्षणस्य अंशतोऽपलपपूर्वकसङ्गतिप्रदर्शनेन । नहि केवलं क्रियाफलभाक्त्वं कर्मत्वं, स्मरतु तावत् भवान्, किन्तु परसमवेतक्रियाजन्यफलशालित्वमेव कर्मत्वम्, अन्यथा नगरं गच्छति चैत्रः इत्यत्र चैत्रनगरोभयसमवेतस्य गमनक्रियाफलस्य संयोगस्य चैत्रेऽपि समवायात् तस्यापि कर्मत्वं स्यात् । अतः स्वसमवेतज्ञानक्रियाजन्यस्फुरणभाक्त्वेन परसमवेतक्रियाफलशालित्वाभावात् न चास्य कर्मत्वम् ।

तार्किकः ॥—ननु आत्मनः संविदाश्रयतया स्फुरणोपपत्तौ भवतः किमिति एवमाग्रहः ? एतत् स्फुरणम् आत्मानं जानामीति मानसप्रत्यक्षेऽपि, कर्मतया समानं वरीवर्त्ति । आत्मनः ज्ञानकर्मत्वाभावे जानातेः सदा सकर्मकतया कर्मणा

व्याप्तस्य तन्निवृत्तौ ज्ञानरूपस्य निवृत्तेः न साम्प्रतम् आत्मनः कर्मत्वाभावोपपादनम् ।

वेदान्ती ॥—(प्राभाकरपक्षं समर्थयमानः स्वसम्मतम् आत्मनः कर्मत्वाभावेऽपि संविद्रूपत्वम् उपपादयति ) **संविद्व्यतिरिक्तस्य घटादेः संवित्कर्मत्वेनैव अपरोक्षत्वनियमात् आत्मनः कर्मत्वाभावे तदनुपपत्तेः ।** आत्मा यदि संविद्व्यतिरिक्तः स्यात्, तर्हि कर्मतयैव अपरोक्षव्यवहारविषयः स्यात्, घटादिविषयेषु तथा व्याप्तिदर्शनात्, अतः आत्मनि कर्मत्वं व्यावर्त्तमानं संविद्व्यतिरिक्तत्वं व्यावर्त्तयतीति सिद्धमात्मनः ज्ञानरूपत्वम् ।

प्राभाकरः ॥—तत्तत्संविदाश्रयतया एव आत्मा अपरोक्षो भवतु कोऽत्र दोषः ?

वेदान्ती ॥—अस्त्येवात्र आत्मनः संविदाश्रयत्वाभावोपपादकमनुमानम्,— **संवेदिता संविदाश्रयतया अपरोक्षो न भवति अपरोक्षत्वात् संवेदनवदिति ।** अत्र बाधनिवृत्त्यै प्रथमविशेषणम्, भवतः प्रसिद्धिमादायैव प्रतियोगिप्रसिद्धिः ।

प्राभाकरः ॥—विपक्षे बाधकतर्काभावात्, एतदननुमानमेव भवतः ।

वेदान्ती ॥—**न च विपक्षे बाधकतर्काभावः** आरोपयितुं शक्यते, **प्रकाशान्तराधीनव्यवहारवत्त्वे** नित्यज्ञानवत्त्वानङ्गीकारात् स्वसत्तायां **प्रकाशव्यभिचारवतः कदाचित् संशयादिगोचरत्वप्रसङ्गस्यैव बाधकत्वात् ।** यदि नित्यज्ञानाभाववान् आत्मा प्रकाशान्तराधीनव्यवहारवान् स्यात्, तर्हि स्वसत्तायां प्रकाशाभावस्यापि सम्भवात् आत्मनि संशयविपर्ययौ स्याताम्, न च आत्मनि तौ स्तः इत्युपपादितं पुरस्तात् इति बाधकतर्कात् संवेदिता आत्मा न ज्ञानव्यतिरिक्त इति सिद्धम् । अपरोऽपि श्रूयतां विपक्षे बाधकस्तर्कः ।

**आत्मनो घटादिज्ञाने भासमानत्वाङ्गीकाराच्च घटादिवदेव चाक्षुषत्वं प्रसज्येत ।** यदि आत्मा घटादिज्ञाने भासमानः स्यात् तदा घटादिवत् चाक्षुषः स्यात् इति ।

प्राभाकरः ॥—चक्षुषा असंयुक्तस्य आत्मनः कथं चाक्षुषत्वं प्रसञ्जयति चक्षुष्मन्मन्यो भवान् ?

वेदान्ती ॥—यदेव चक्षुषा संयुक्तं तदेव चाक्षुषम् इत्यस्ति न कश्चिन् नियमः, परमाणूनां चक्षुःसंयुक्तत्वेऽपि अचाक्षुषत्वात्, तथा सोऽयं देवदत्त इति प्रत्यभिज्ञायां चक्षुषा असंयुक्ताया अपि तत्तायाः चाक्षुषत्वाङ्गीकारात्, ततः— तज्ज्ञाने भासमानताया एव तत्त्वात्,—चक्षुर्जनितज्ञाने भासमानस्य आत्मनः चाक्षुषत्वप्रसङ्गात् न युक्तं भवदुक्तदूषणम् ।

प्राभाकरः ॥—ननु भवतु घटमहं जानामीत्यादिप्रतीतौ अरूपस्यापि आत्मनः प्रत्यक्षत्वम्, अरूपस्य रूपस्य चाक्षुषत्ववत्, भाट्टानाम् अरूपस्य आकाशस्य चाक्षुषत्ववदिति स्मरणीयम् ।

वेदान्ती ॥—नीरूपस्य च द्रव्यस्य चाक्षुषत्वायोगात् न युक्तम् आत्मनः चाक्षुषत्वम्, रूपस्य सामान्यस्य न अद्रव्यत्वात् भवति चाक्षुषत्वम्, भाट्टानां च आकाशस्य चाक्षुषत्वं स्वसमयमात्रसिद्धम्, न तु तत्राऽस्ति निर्णायकं प्रमाणम् । आत्मनश्चाक्षुषत्वे आत्मा चाक्षुषज्ञाने न प्रकाशते अरूपिद्रव्यत्वात् आकाशवदिति प्रतिप्रयोगसम्भवाच्च ।

प्राभाकरः ॥—ननु भाट्टानां सार्थनिकतया सिद्धान्तस्य, तन्मते आकाशस्य चाक्षुषत्वाङ्गीकारात् ।

वेदान्ती ॥—नैवम्, आकाशस्य प्रत्यक्षत्वे प्रमाणाभावात्, प्रत्युत आकाशं न चाक्षुषम् अरूपिद्रव्यत्वात्, अस्पर्शवद्द्रव्यत्वात् मनोवत्, सर्वगतत्वादात्मवत् इत्यादिप्रयोगसम्भवाच्च । अतः पूर्वोक्तहेतुद्वयेन सिद्धमात्मनो ज्ञानरूपत्वम् ।

तार्किकः ॥—ननु भवतु एवं तथापि आत्मनः स्वयंप्रकाशत्वप्रतिपादिका साक्षात् श्रुतिर्न दृश्यते, तत् कथम् आगमैकशरणेन भवता तत् साधयितुं शक्यते ?

वेदान्ती ॥—श्रूयताम्,—अत्रायं पुरुषः स्वयंज्योतिरिति श्रुतेरात्मा स्वप्रकाशः ।

तार्किकः ॥—ननु स्वप्नावस्थामधिकृत्येदमाम्नायते तत्र मनसोऽनुपरमात्, अपरप्रकाशव्यतिरेकेण केवलस्य आत्मनः ज्योतिषः स्वप्ने दर्शयितुमशक्यत्वात् न स्वयंज्योतिष्ट्वसिद्धिरात्मनः ।

वेदान्ती ॥—मा मैवम् स्वप्नावस्थायां मनसो गजाद्या-

कारपरिणतस्य अवभासकार्य्यतयैव अवस्थानात् करणान्तराभावाच्च आत्मैव स्वयंज्योतिः स्यादिति ।

तार्किकः ॥—न च एवं शंकनीयम्, यदि हि मनसो दृश्यतया अवस्थानं स्यात् न स्यात् तर्हि तस्य करणत्वम्, तथाच करणान्तराभावात् स्वयंज्योतिष्ट्वं स्यात् आत्मनः, न त्वेतदस्ति, मनसः चक्षुरादिवत् इन्द्रियत्वेन अयोगिनः प्रत्यक्षत्वानुपपत्तेः । शरीरसंयुक्तमतीन्द्रियं साक्षात् प्रतीतिसाधनमिन्द्रियमितीन्द्रियलक्षणम्, मनोऽतीन्द्रियम् इन्द्रियत्वात् चक्षुर्वत् इतिप्रयोगसम्भवाच्च । तस्मात् मनसो गजादिपरिणामस्वीकारे तस्य इन्द्रियग्राह्यत्वमनुपपन्नं भवेत् । अतः स्वप्नावस्थायां मनसः ज्ञानकरणत्वमेव न तु ज्ञानविषयत्वमिति मनोव्यतिरेकाभावात् न आत्मनः स्वयंज्योतिष्ट्वं सिद्धम् ।

वेदान्ती ॥—एवं सति "अत्रायं पुरुषः स्वयंज्योति"रिति श्रुतेरर्थः कथं मन्यते भवान् ?

तार्किकः ॥—तस्मात् मनःसंयोगजन्यज्ञानाधारत्वेन स्वयंशब्दवाच्य आत्मा ज्योतिरिति अभिधीयते, ज्योतिःसाधनत्वाद्वा "वाचैवायं ज्योतिषा" "अग्निनैवायं ज्योतिषा" इत्येतत्प्रकरणपठितवागग्न्यादिवत्, न तु आत्मा स्वयंज्योतिः द्रव्यस्य आत्मनः गुणत्वानुपपत्तेः । आत्मा हि द्रव्यम्, ज्ञानन्तु गुणः, न हि अनयोरभेदः शक्यसम्भवः कदाचित् ।

वेदान्ती ॥—क एवमाह, यत्, मनसः प्रत्यक्षत्वे तस्य इन्द्रियत्वव्याघात इति ? यतः,—

सम्बन्धस्याश्रयत्वेन विज्ञानासमवायिनः ।
इन्द्रियत्वाविघाताच्च मनः प्रत्यक्षमात्मवत् ॥

मनः प्रत्यक्षं ज्ञानासमवायिकारणाधारत्वात् आत्मवत्, इत्यनुमानात् मनसोऽपि प्रत्यक्षत्वोपपत्तेः । सम्भवति चास्य गजादिपरिणामेन दृश्यत्वम् ।

तार्किकः ॥—ननु प्रत्यक्षत्वे मनस इन्द्रियत्वव्याकोप इत्युक्तं मया प्राक् ?

वेदान्ती ॥—तस्य ( मनसः ) साक्षिवेद्यस्यापि ऐन्द्रियकज्ञानाविषयत्वेन इन्द्रियत्वाव्याघातात्, इन्द्रियस्य तावत् न इन्द्रियग्राह्यत्वमित्यस्ति नियमः,

नहि इन्द्रियस्य साक्षिरूपान्यप्रकाश्यत्वे इन्द्रियत्वव्याघातो भवति, साक्षिणः सर्वावभासकत्वात्। **तस्मात् निरस्तसमस्तकलङ्कावकाशमात्मनः स्वप्रकाशत्वम्।**

तार्किकः ॥—एवं सति, ज्ञानरूपस्य आत्मनः कथं ज्योतिःशब्दवाच्यता? यतः भूतविशेषे वह्निसूर्यादौ ज्योतिःशब्दो व्युत्पन्नः।

वेदान्ती ॥—**तच्च ( ज्योतिः ) आत्मरूपम् अविद्यापरिकल्पितप्रपञ्चावभासकत्वात्, अविद्यातमोनिवर्त्तकत्वाच्च ज्योतिःशब्दाभिधेयम्, यथाभावरूपशार्वरादितमोनिवर्त्तनेन जगदवभासकमादित्यादि ज्योतिरिति सिद्धम्।**

(क्रमशः)

---

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| July, 1935. | १८५७ शकीये आषाढे<br>१८श-वर्षस्य ३य-संख्या | Vol. XVIII<br>No. 3 |

## धर्मपरिस्थितिः

[ निबन्धकः—महामहोपाध्याय-श्रीयुक्त-कुञ्जविहारी तर्कसिद्धान्तः ]

सुखात् परं दुःखं दुःखात् परं सुखम्, अभ्युत्थानात् पतनं पतनादभ्युत्थानम्, जन्मनो मरणं मरणाच्च जन्मेत्येवं चक्रवत् परिवर्तनं लोकशास्त्रप्रत्यक्षसिद्धम्। तथाच पतितानामपि मानवानां कदाचिदवश्यमेवाभ्युत्थानं भवेदिति मन्ये। अधःपातचरमतामुपगते सम्प्रति भारते मादृशामपि शिश्नोदरपरायणानां कदाचिद्धर्मानुसन्धित्सा जायत इति। सम्प्रति प्रायः सर्वेषामेव मर्मणि धर्मभावबीजमङ्कुरितम्, तच्च यदि सदुपदेशाद्यमृतसेकेन पल्लवितमपि कर्त्तुं शक्येत तदा क्रमशः शाखाप्रशाखादिभिर्वर्द्धमानं महापादपपदवीमासाद्य काले फलादिभिः परमां प्रीतिमुत्पादयेत्।

इतः पूर्वञ्च ये नव्यशिक्षिता धर्मकथा-नामत एव श्रवणं पिधाय भ्रूकुटिविक्षेपेण पलायाञ्चक्रिरे वञ्चकानेव च धर्मयाजकान मन्यमाना यथेच्छमवामंसत, कालप्रभावात्त एव सम्प्रति धर्मोपदेशं सादरं शिरसि दिधीर्षन्तीति किञ्चिदाशास्थानमस्माकम्। परन्तु दुःखमेतावदेव यत्तेषां धर्मबुभुत्सायां

वर्त्तमानायामपि धर्मकर्मानुष्ठानं प्रति न निम्नन्ति प्रायो मनांसि। अनुद्धा किमपि ते कर्त्तुं नाग्रे सरन्ति, सर्वेष्वेव कार्यकलापेषु केवलं युक्तिं परिज्ञातुमभिलषन्ति, युक्तिमृते न कुत्रापि तेषामनुरक्तिर्दृश्यते। किन्तु कर्मानुष्ठानं विना धर्मस्य मर्म नैवावगन्तुं शक्यते, लौकिकदृष्टान्तेन धर्मतत्त्वनिर्द्धारणमतीवाशक्यम्, समतीव सूक्ष्मा धर्मस्य गतिः। अत्र च—

"कानीनस्य मुनेः सहोदरवधूवैधव्यविध्वंसिनो
नप्तारः किल गोलकस्य तनयाः कुण्डाः स्वयं पाण्डवाः।
तेऽमी चैकवधूपभोगनिपुणास्तेषाञ्च सङ्कीर्त्तना-
च्छान्तिः स्वस्त्ययनं भवेदनुदिनं धर्मस्य सूक्ष्मा गतिः॥"

इति श्लोकः सम्यगुपन्यासमर्हति लब्धुम्।

अपरैश्च लब्धयोगमाहात्म्यैर्भूयो भूयः सन्दिष्टम्—"धर्मोपदेशतात्पर्यं न साधारणलौकिकदृष्टान्तैरवधार्यं परन्तु योगानुष्ठानादिविशुद्धचेतसामनायासाधिगम्यमिति प्रथमतः केवलं धर्मोपदेशो मान्य एवे"ति। अत एव धार्मिकधुरीणेन धर्मनन्दनयुधिष्ठिरेणाप्यभिहितम्—

"धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः॥"

इति। तथा च धर्मं बुभुत्सुभिर्युक्तिं निर्द्धारयितुमसमर्थैरपि आप्तवाक्यविश्वासेनावश्यं तन्निर्द्दिष्टं कर्मानुष्ठातव्यम्। एतदपि नैवाहितैर्भिन्ननीयं यन्मादृशामदृश्ययुक्तिकत्वेऽपि तत्तद्वचनप्रतिपाद्यविषयाणामप्रामाण्यं नार्हति भवितुम्। यस्मान्मादृशादृश्ययुक्तिकानामपि बहूनामेव वचनानां प्रामाण्यमनुमन्यते। योगबलेन स्थूलसूक्ष्मभूतभविष्यद्वर्त्तमानेषु सर्वेष्वर्थेषु तुल्यदृष्टयः खल्वस्माकं शास्त्रकाराश्चलात्पर्यादिकमवधार्यैव शास्त्राणि प्राणैषुः। वेदास्तु स्वया अनादिसिद्धाः सर्वथैव दोषकलङ्कासङ्कुलाः। तथाहि—

"दोषाः सन्ति न सन्तीति पौरुषेयेषु युज्यते।
वेदे कर्त्तुरभावाच्च दोषाशङ्कैव नास्ति नः॥

इति। तस्मात्तत्प्रतिपाद्यं सर्वमेव युक्तिसिद्धमित्यवबोध्यम्। सर्वेषामेव सयुक्तिकत्वे कथमस्माभिर्न सर्वत्रावबुध्यन्ते युक्तय इति तु न विवादस्थानम्,

यस्मादाधुनिकविज्ञानवित्कार्याणामपि तात्पर्यं प्रायो नाकलय्यते मादृशैः, का कथा दिव्यदृष्टिसम्पन्नोपदिष्टानां तत्तत्कार्याणाम् ।

अबुद्ध्वा कार्यानुष्ठानेन फलावाप्तिरेव न भवेदित्यपि नाशङ्कनीयम् , बहूनामेवापरिज्ञातफलयुक्तिकानामपि कार्याणां फलदर्शनात् । दाहकत्वमजानन्नपि वह्नौ पतन्नविदग्धः किं न दग्धो भवेत् ? तृष्णानिवारकत्वमजानन्नपि जलं पिबन् वितृष्णः किं न जायेत ? यत्तु यन्त्रेण संवादप्रेषणादिकं मादृशां धारणातीतं सर्वदा सम्पद्यते, तत्र नियुक्ता अपि कर्मकारिणः किं "कथमेकत्र कृतः शब्दः सुदूरतरापरप्रदेशे गच्छती"ति सयुक्तिकं प्रतिपादयितुं शक्नुवन्ति ? परन्तु नैव ; किन्तु तथापि ते यथारीति कार्यमनुष्ठाय संवादादानप्रदानादिरूपं फलं लभन्त एवेति सुविदितमेव सर्वेषाम् । तस्मात् केवलं युक्त्यनुसरणं परित्यज्य शास्त्रोक्तरीत्या यथायथं कर्मानुष्ठानेन क्रमादग्रेसरीभूय स्वत एव क्रियानुष्ठानबलाद् युक्त्यादिकमवधारयितुं शक्येत, नोचेत् केवलं कर्कशतर्केण युक्त्याद्यनुसन्धानत एवायुः क्षीयेत । बुद्ध्वा करोमीति कृत्वा कर्माण्यननुतिष्ठतः केवलमनल्पं जल्पतो बोधः करणञ्च द्वयमेव दुःसम्पादम् । यथा "सन्तरणपाटवमनासाद्य नाहं जलावगाहनं करिष्यामी"ति प्रतिज्ञातवतो जलावगाहनैकसाध्यं सन्तरणपाटवं जलावगाहनञ्च द्वयमेवासाध्यं भवेत् ।

वस्तुतो यं कमपि विषयं दिधारयिषुभिरेव प्रथमतस्तूष्णीम्भूयोपदेष्टुर्वाक्यार्थो ग्रहीतव्यः, ततश्च क्रमशस्तत्र निविष्टैः स्वचेष्टयैव बहवः संशया उच्छेत्तुं शक्येरन् , शिष्टाः पुनरुपदेष्टुरुपदेशपरम्परया । अन्यथा प्रथमत एव यदि ते संशयापसारणे यतेरंस्तदा बहूपदेशतोऽपि प्रकृतं तत्त्वमवधारयितुमसमर्था अगत्या एतद्विषयावधारणाद्विरता एव भवेयुः ।

सर्वदैवैतदुपलभ्यते यानि कानिचिच्छास्त्राणि विशेषतो नव्यन्यायादिशास्त्राण्यध्येतुं प्रवृत्ता धीरधिषणा अपि यदि प्रथमत एव सर्वं युक्त्यादिभिर्बोद्धुं प्रवर्त्तेरंस्तदा कथमपि तत्तत्तात्पर्यमवधारयितुं न प्रभवेयुः, परन्तु बोद्धुमशक्नुवन्तः कर्कशतर्कसङ्कुलतामापादयन्तस्तत्र विरक्तास्तत्तदध्ययन-

धर्मपण्य' वणिजं मत्वाऽवहेलयन्ति। परन्तु ते इतस्ततो बंभ्रम्यमाणाः स्वीकृत्यापि स्वेच्छया कतिपयान् गुरून् कुत्रापि परितृप्तिमलभमानाः कतिपययोगाङ्गाभ्यासेनैवाविवेकलोकमोहकाद् अचिरेणैवोपनिबद्धसम्प्रदायविशेषाद्-विधृतसन्न्यासिवेशात् कस्माच्चिज्जीवन्मुक्तम्मन्याद् गुरुप्रवरात् सम्प्रदाय-प्ररोचनया करबिलसितापवर्गसोपानमिव कञ्चिन्मन्त्रं गृहीत्वा कियत्-कालं तन्मतानुवर्त्तिनस्तिष्ठन्ति। तदुपदेशानुसारेण योगाङ्गानुष्ठानमपि कर्त्तुमारभन्ते। किन्त्वविशुद्धचित्ततया यथोचितमनुष्ठातु' नार्हन्ति, अयथा-नुष्ठिततत्तदनुष्ठानाच्च केचनाकालमृत्युतां भजन्ते, केचिदुन्मादरोगग्रस्ततां लभन्ते, केचिद्वा इतो भ्रष्टास्ततो नष्टा जडवत्तिष्ठन्ति। एवं सम्प्रदायविशेष-प्ररोचनया देशस्य कियानपकारः प्रचलतीत्यालोचनतोऽपि चेतः समुद्विजते। तस्मादेवमुच्यते—येषां धर्मपिपासा वर्त्तते ते यदि सत्कर्मानुष्ठानादिना चित्तशुद्धिं विधायाध्यात्मिकोन्नतिसाधनाय यतेरंस्तदा नैवं समुपलब्धापदो भवेयुः। यथा च वृक्षस्य निम्नदेशारोहणमन्तरेणाग्राधिरोहणमशक्यम्, तथैव कर्मानुष्ठानादिमन्तरेण प्रथमत एव ज्ञानमार्गविचरणमशक्यमिति मन्यामहे। तथाचोक्तम्—

उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिः।
तथैव ज्ञानकर्मभ्यां जायते परमं पदम्॥

इति। ये तु जन्मान्तरीणकर्मवशादेव विधौतकल्मषा अमलमानसा उत्त-माधिकारिणस्तेषामिह कर्मानुष्ठानमन्तराऽपि भवतु नाम निःश्रेयसाधिगमः, किन्तु तादृशाधिकारिणां दृष्टान्तेन मादृशामपि कीटसदृशामनुसरणं सर्वथैव हास्यव्यञ्जकं विपज्जालसङ्कुलञ्चेति मन्तव्यम्। तथाच मादृशैः सर्वैरेव प्रथमं स्वस्वाश्रमोचितकर्मानुष्ठानेन चित्तशुद्ध्यर्थं यत्नो विधेयः, नो चेत् यः कोऽपि गुरुराश्रयणीयो भवतु कोऽपि केवलं मन्त्रप्रदानेन सदुपदेशप्रदानेन वा समुद्धारयितुं न प्रभवतीति सुदृढं विचिन्त्य कर्त्तव्यमनुष्ठेयं मोक्षार्थिभिरिति शम्।

# आइ० सि० एस्० जामाता

[ निबन्धकः—आर् रङ्गाचार्यः शिरोमणिः ]

नीलकण्ठः। अस्य जन्मभूमिर्देवीपट्टणम्। प्रथमे वयसि वर्तमानस्याप्यस्य लण्डन् (London) नगरमधिकृत्य महती महनीयता-मनिरासीत्। तत्र गृहा वीथ्यो गोपुराग्र्यन्यानि च कनकमयोभिरिष्टकाभिराचितानीत्येवास्य प्रायः प्रत्ययो बभूव। कथमपि इङ्गलण्ड-(England)-देशो द्रष्टव्य इति मनीषाऽस्य मेदुरा प्रादुरास। कथमिदमस्य सुसाधम्। यतोऽस्य पिता धनुष्कोटिवास्तव्यः समापन्नश्रो यात्रिकजनेभ्यो लब्धेन भैक्ष्येण जीविकां निर्वर्तयन् कश्चन दीनः पुरोहितः। अथापि प्रातिवेशिको ज्योतिषिकः कश्चन वृद्धो नीलकण्ठस्य जातकं समीक्ष्य "राजयोगोऽस्ति, नियतमयं भविता कस्यचिद्देशस्य शासिते"ति भाविशुभंयु दैवं समादिदेश।

युवा नीलकण्ठो भृशं व्यवसायपरः पठितिनामग्रेसरो बभूव। "श्रिया दुरापः कथमीप्सितो भवे"दिति पाठं व्यत्यस्य "मयेप्सिता श्रीः किमहो दुरासदा" इति पपाठ। एकवधूं काञ्चन कन्यां परिणीय तयात्मानं सर्वोन्नतं स्थापयितुममंस्त।

नीलकण्ठोऽल्पेतरेणोत्साहेन परीक्ष्यान् ग्रन्थान् पपाठ। ज्ञातव्यान् धार्यांशान् सुदृढं चिन्तयामास। बि० ए० अनरस् परीक्षायां सर्वोत्तमतया जयं प्राप। आइ० सि० एस् परीक्षायां परीक्ष्येषु स्वयमन्यतमो भवितुमियेष। हन्त! स मनोरथो न फलायाकल्पत। कथमपि लण्डन्-नगरी गन्तव्या। परीक्षका द्रष्टव्याः, आत्मानमवगमयितव्याः। समीहितं साधयितव्यमिति निश्चिकाय। क्षणमपि न विललम्बे।

भगवान् विवस्वानपि विहायावाचीमुदीचीं प्रतस्थे। प्रथमाश्रमिणां समुन्मेषसमयः प्रादुरभूत्। सर्वतः कोलाहलः समुदजृम्भत।

सोमसुन्दरशास्त्री । अयं धूमशकटास्थान्यां नियुक्तः कश्चनाधिकारी । तस्यैकैव दुहिता । नाम्ना वासन्ती । वयसा गुणेन रूपेण शोभया च स्पृहणीया । एकश्च पुत्रोऽस्य बालश्चतुर्वर्षदेशीयः । यद्यप्यायतिर्न स्फीता तथापि मितंपचेन व्ययेन समधिकां संपदमयमुदच्चयामास । स नीलकण्ठमन्तरेण बहुशः शुश्राव । दानीयं तममन्यत । वासन्ती नीलकण्ठाय दारक्रियया दातव्येति निरणैषीत् । यौतकं प्रति नाधिकं वक्तव्यम् । आइ० सि० एस् परीक्षावधिकस्य लण्डन्नगरावस्थानस्य यावदपेक्षितं तावद्धनं श्वशुरेण दातव्यमिति निश्चितम् । वासन्तीनीलकण्ठीयः परिणयविधिर्महता समारोहेण अन्यादृशेनाडम्बरेण समपद्यत । नीलकण्ठश्च अविलम्बितं लण्डन्नगरं प्रचण्डोद्यमः प्रतस्थे । तत्र चाचरणेन, आकृत्या, वेषेण, गत्या, भाषणेन, उच्चारणेन सर्वथा लण्डन्नगरजातां जनतां लघुतरमतिशिश्ये । यो यः पश्यति स सर्वोऽपि तं कमपि सुन्दरम् आङ्गलजात्यां लब्धजन्मानमेवामन्यत । नीलकण्ठोऽपि असकृदात्मानमधिकृत्य दूयते स्म । "अहो अपण्डितता विधेः । जनुर्षि लण्डेयो यदहं नाभव"मिति । तथापि इन्द्याभूमौ लब्धजनुषो वासन्त्या रूपं लावण्यं च न तस्य चक्षुषोर्मनसश्च नैव पुस्फोर । हन्त ! स एक एव हेतुरात्मनो हैन्दवत्वप्रकाशको जातः । तत्तादृशमात्मनो नामापि तस्मै नतरामरोचत । यत इदं सुदीर्घं परुषाक्षरघटितमसुखोच्चारणं बभौ । सद्य एव तत्तथाऽन्यथयति स्म यथा श्रवणमात्रेण तत् किञ्चिदाङ्गलं नामेव भायात् । ननु कीदृशं तत् । "नैल. ओ. केण्टन्" इति । अपि तु भीतिरियमेका नैव तं जहौ, जहौ यत्, यत्किञ्चिच्चिह्नमात्मनो हैन्दवत्वद्योतकं गूढं संलक्ष्येत वेति । एको हायनः पूर्णः । नैल. ओ. केण्टन् उपाधिकरणिकस्थाने (Sub-collector) नियुक्तः । प्रतिप्रयाणाय मतिं चकार । नावमारुरोह । कथमपि एकस्मिन् वत्सरे द्वित्राणि पञ्चषाणि वा दिनानि श्वशुरगृहे वस्तव्यानि न तु ततोऽधिकमेकमपि, अन्यथा लाघवमिति मेने ।

सुन्दरशास्त्री आत्मन आइ० सि० एस् जामातरमधिकृत्य प्रत्यहं सचिन्तः

स्थितः। अहो !! काचन तन्त्रीवार्ता !! को विशेषः। आइ० सि० एस् जामाता लण्डन नगरतो निवर्तमानोऽस्तीति। कथमिह कथनीयो वाग्मन्त्या स्तदानीन्तनः कुतूहलस्यातिरेकः। दवीयसो द्वीपान्तरादावर्तमानं जामातरं प्रत्युत्थातुं सभाजयितुं च सुन्दरशास्त्री अनल्पेनाऽऽदरेण महता च प्रमोदेन प्रतीक्षाञ्चक्रे। स महान् किल कश्चनातिथिविशेषः। अत्र चतुर्थवादनसमये तदीयमागमनं प्रतीक्षितम्। महान् संभ्रमः। अन्यादृशः कोलाहलः। अस्मदीयो नैलू. ओ. केण्टन् जामाता श्वशुरमन्यांश्चालक्षितमतर्कितं चागत्य विस्माययितुमियेष। श्वशुरगृहस्य नातिदूरतो धूमशकटादवारुरोह। केनचित्प्रवहणेन प्रतीक्षितकालात्पूर्वमेव श्वशुरगृहमाजगाम। प्रवहणशब्दो द्वारि शुश्रुवे। बालकः पुत्रः सरभसं बहिराजगाम। कमपि सुन्दरयुवानं पुरुषविशेषमाप्रपदीनंकाकारप्रावारकवेष्टितं पिठरकायमानशिरस्त्राणं प्रवहणादवतरन्तमैक्षत। अहो !! किमाश्चर्यम् !! "लण्डन नगरादागतो जामाता" इत्युच्चैरुद्घोषयन् निपतन्नुत्पतन्नन्तः प्रविवेश। जामाता च सस्वागतं ससभाजनं प्रातिस्विकतया आरचिते अपवारके सोपचारं निवेशितः। कतिपयनिमेषानिव विश्रम्भालापाः स्वैरं प्रावर्तन्त। जामाताऽपि विश्रान्तिसुखमनुभवितुं विविक्तं विसृष्टः। अभ्यागतं जामातरं वीक्षितुं बान्धवाः पौराश्च संघशः समाजग्मुः प्रतिजग्मुश्च।

लोके यदि नाम यत्किञ्चित्प्रेयस्या वासन्त्या अपि समधिकतरं स्पृहणीयं वस्तु नीलकण्ठस्य मानसीं वृत्तिमावर्जयितुमीष्टे स्म, तर्हि दिगन्तविश्रुतं सर्वबालमनोहरं तादृशं तत्स्वादुतमं "कारावन्दी"नामकं प्रसिद्धं भक्ष्यविशेषमतिरिच्य किमन्यदुज्जिहीताम्। अहो ! कष्टम् ! ब्रह्मणा सृष्टेषु इदमतिरमणीयं वस्तु सर्वत्रापि लण्डननगरे सुदुरासदमासीत्। यदाऽयं श्वशुरगृहमागच्छन्नासीत् तदा मध्येपथमस्य किञ्चित् पथिकजनपण्यगृहं ( hotel ) नयनपथं गतम्। यद्यपि सर्वमिन्द्रजालं वस्तुजातं सर्वथा तस्य प्रद्वेषजनकं तथाऽपि यदा तत् श्रीमत् प्रेयः कारावून्दीभक्ष्यकमस्य दृष्टिपथं गतं तदा चापलमवर्धत। जिह्वामाक्षालाबिन्दवः स्वैरमव्याहतं निःसुस्रुवुः। हा !

दैवी चित्रा गतिः। जनुषा कृष्णं कुक्कुरं कः श्वेतयितुमीष्टे। तादृशं प्रेम-सर्वस्वभूतं भक्ष्यकमक्रीत्वा क्षणमप्यवस्थातुं नायं शक्नोति स्म। आङ्ग्लानां संप्रदायमाचारेणानुष्ठातॄणामग्रेसरो नीलकण्ठः पथि चरन् जनः पामर इव तत् पश्यतां पुरश्चर्वितुं नैव चक्रमे। यतोऽन्यथा द्रष्टृजनाः आइ० सि० एस्० परीक्षायामुत्तीर्णमात्मानं पथि भक्ष्यं चर्वन् (?) गच्छन्तं मिथ्यांगलवेष-धारिणं कमपि इन्द्याभूमिजातमित्येवावगच्छेयुरिति। अतोऽलक्षितमेव तदुपभोक्तुमचकमत। भद्रं तत्पोटलीकृत्य पेटिकायां निक्षिप्य तद्ध्यानपरो ररक्ष। तदाप्रभृति विविक्तमतृतीयाक्षिगोचरमुपभोक्तुं तत्किञ्चित्समय-विशेषमुदीक्षमाण एवावतस्थे।

सर्वोऽपि भार्याजनो निवृत्तः। इतस्ततो नीलकण्ठः पश्यति स्म। दिष्ट्या न कोऽपि ददृशे। पेटिकामुद्घाट्य पोटलिकां जग्राह। कोणीभूतं तदग्रं किञ्चिदिव नखमुखेन चिच्छेद। ऊर्ध्वमुद्दधार। वक्त्रं प्रकटं व्याददौ। च्यावयति स्म। पोटलिकागतं सर्वं वस्तुजातं सहसा गुहामुख इव तस्य वक्त्रकन्दरे तिरोदधे। हन्त! प्रमादः! पदशब्द इव श्रुतः। श्वशुरजना इतस्ततः परिचक्रमुः। तपस्वी नीलकण्ठः किं करोतु नाम। इदं प्रत्य-भात्। यथा लण्डनान्निवृत्तो जामाता सरभसं सप्रेमानुबन्धं "कारावून्दी" चर्वन्नस्तीति ते यथा न जानीयुः तथा चरितव्यमिति। एवं निरचैषीत्। जीवितनाशेनापि आत्मीयं वक्त्रं नोद्घाटनीयम् न केनापि सह किञ्चिदपि संभाषणीयमिति। हा! कष्टम्। वक्त्रगतं वस्तुजातं लालान्वितं प्रतिक्षणं स्फायमानमासीत्। कपोलावुच्छूनौ। उच्छ्वासनिःश्वासा व्यतिदोलायिताः। गात्रमासकलं परिसिष्वेद। गलो बद्धः। अक्षिणी प्रलम्बिनी। कीदृशी तदानींतनी तदीया मुखश्रीरिति भावुकाः स्वयं भावयन्तु। हा! अन्ततः सर्वथा वृश्चिकदष्टस्य वलीमुखस्य दशां सुतरामन्वकरोत्। अद्भुतानि नव-नवानि असदृशि भक्ष्यजातान्यादाय नारीजना नीलकण्ठमभितः परिवव्रुः। सुनिपुणं तं किञ्चिदिव निरूपयामासुः। हा! किमिदम्! अत्याहितम्! किमयमायुष्मान् अस्मत्प्रेमसर्वस्वं जामातृरत्नं नीलकण्ठ उताम्यः! अहो!

कुत्र गता सा तद्वदनगता सौन्दर्यश्रीः ! या क्षणमिव पुरा चिरं तस्य चन्द्र-मुखे चारु विललास ! हन्त ! कुत्र गतं तदव्याजमनोहरं वाग्विलसितम् ! कोऽयं दारुणो दशापरिणामः ! इति व्याहरन्त्यः करुणं परिदेवयामासुः। आस्माको नीलकण्ठस्तु वक्त्रं व्यावृत्य नैव वाचमेकामुदाजहार। करावे-वेतस्ततो विचालयन् सर्वांस्तान् निष्क्रमितुं संज्ञामातेने। जामाता हि नाम बहिश्चराः प्राणाः श्वश्रूजनस्य। तं विहाय पदात्पदमपि नापससार। ग्रावस्रावं विलेपुः। श्वशुरदेवोऽविलम्बितमानीतः। स पाणिना मन्दमन्दं सुखस्पर्शं जामातुः कपोलौ परामर्श। स रोगी नैव नं तथा कर्तुमनुमेने दृढोपमर्दनाज्जातु रहस्यमुज्झितं न वेति विभाव्य। श्वशुरोऽनुयोगपरंपराया नैव विरराम। हा! सर्वमपि वृथा जातम्। रोगी करचालनं विना नान्य-ज्ज्ञानाति स्म। जोपमवातिष्ठत। सर्वथा माया बलीयसी। कस्तां विजेतुं प्रभवति विना तमेकं कालस्य महिमानम्। किं बहुना। अन्ततो गत्वा अयमेव सिद्धान्तसारः संपन्नः। हा! महानयं दुर्विचिकित्स्यो व्याधिः। तीव्रममुं पीडयति। जिह्वास्तम्भे परिणतः। किं कुर्मः! केयं दुरवस्था। क्षणमपि नोदासितम्। न विलम्बितम्। सत्वरमांगलभिषगानीतः। स च सहसा साटोपं करधृतेन हृत्परीक्षणयन्त्रेण अन्तः प्रविश्य नमस्कृत्य रोगिण-मैक्षत। न करेण पस्पर्श। यन्त्रेण परीक्षितुमुद्ययुक्त।

नीलकण्ठः आकस्मिकमिमं परिभ्रमं वीक्ष्य "कोऽयम् उपद्रव" इति व्यमनायत। समीपस्थान् कांश्चन पाणिभ्यां कांश्चन पादाभ्याम् अन्यान् मुष्टिभिश्च परिजहार। रोगिणस्तादृशमाचरितं सर्वान् कुलंकषमुद्वेजयति स्म। दारुणो व्याधिः क्षणे क्षणे परिववृधे। आंगलभिषङ्मणिरनीशाः कीश-वदाशाः पर्यपश्यत्। न किमपि बुबुधे। निष्क्रमं वरममन्यत। न मये-दृशो रोगो दृष्टपूर्वः श्रुतपूर्वो वेत्यस्फुटं जल्पन् निष्क्रान्तः। अहो! कति कति नवनवा भिषजः। कति ज्योतिषिकाः। कति जरठा नार्यः। कत्योषध्यः कति तन्त्रीवार्ताः। कति दूरभाषीणि यन्त्राणि। न किमपि फलेग्रहि बभूव।

"कारायून्दी" खण्डा रोगिणो लालासरसि चिरवासेन पीतपीताः शूनशूनाः

सर्वपथीना दीनस्य तस्य महतीमिव पीडां नियतमारचयामासुः। इयमेकैव चिन्ता तपस्विनो रोगिणो हृदये सदा परिलुलोठ। क्षणमिव विविक्तता संपद्येत वा? वक्त्रगता खण्डविशेषाः कियन्तो निःसरेयुर्वेति। निष्ठ्यूताः स्युर्वेति। स तु इंगितेन अंगविक्षेपेण हस्तचालनेनाऽऽत्मानमद्वितीयं क्षणमवस्थापयितुं बहुधा प्रययास।

अहो समयस्य वैचित्र्यम्। शास्त्रिणो गृहिण्या एवं प्रत्यभात्। सर्वथायं दृष्टिदोषः। मान्त्रिकः समाह्वातव्य इति। सहसा मुण्डः परिहारी (pariyari mottai) समानीतः। स मुष्टिमेयैरभिनवैर्निम्बपत्रैः कृष्णोर्णेन तन्तुना सह रोगिणमुपससर्प। कूर्चीकृतैः पत्रैः कपोलयोः क्षणं तस्य भृशं वीजयामास। कृष्णतन्तुं तस्य दक्षिणकटकमभितो बन्धुं यदा करं ग्रहीतुमुदयुङ्क्त तदा नैल्. ओ. केण्टन् आङ्गलयूनां यत्सदृशं तदाचरंस्तादृशानां मूढविश्वासनिबन्धनानामुपरोधानामात्मानमास्पदमाधातुं नैवानुमेने। निम्बपत्राणामुग्रो गन्धस्ततोऽप्यधिको मान्त्रिकदेहजः प्रस्वेदगन्धः सुबहु तमात्मदोषज्ञं रोगिणं विह्वलयतः स्म। नेदमाश्चर्यम्! यन्माहिषचर्मनिर्मितोपानदावृतेन सव्येन पादेन पार्श्वे उच्चावचमसंबद्धं प्रलपतो मान्त्रिकमूर्धन्यस्य तस्योरसि प्रसभं किञ्चन सावेगं प्रहाररत्नं दृढतरमावासयामास। येन स मुण्ड उच्चैस्तमामविहेत्याक्रोशन् स्थूलस्थूलं निःश्वसन् बहिरङ्गने कूष्माण्डपातं पातितः। स पार्श्वस्थैः सानुशयमुत्थापितो रोगिणो मुखमनालक्षयन्नेव "महता भूतेनाऽऽविष्टोऽयमार्य इति प्रजल्पन्ननिवृत्तमुखो नैजमुरः परिमृशन् पलायामास।

जामातरमधिकृत्य श्वशुरवर्गो निराशोऽभूत्। अल्पमप्येकोऽपि जामात्रर्थं परिष्कृतानां भक्ष्यजातानां गन्धमपि न जिघ्राय। बालकं क्षुधातुरपुत्रं प्रति का कथा। कोणे क्वापि स्वपन्तं क्लान्तं तं न कोऽपि सस्मार। स्त्रियः शान्ताः। सुन्दरशास्त्री सर्वमपि दिवा व्यापृतः पश्यन्नेव निद्रां गतः सर्वं निर्जीवमिव स्थितम्। महदिव स्तैमित्यम्। उच्छ्वासनिःश्वासं विना नान्यः शब्दश्चचालेव।

अन्तरालमिदं समीचीनम्। नीलकण्ठः वामतो दक्षिणतश्च परिलुलोठ। दक्षिणापाङ्गं किञ्चिदिव परितो व्यापारयामास। दग्धारण्यमिव सर्वं ददर्श। शनैः शयनादुत्तस्थौ। वातायनमुपससार। कवाटं किञ्चिदिव विवृतं चकार। वक्त्रं गवाक्षे संलग्नं कृत्वा यदा मुखान्तर्गतं पयः किञ्चिदिव निःसारयितुमुद्यतः अहो ! प्रमादः। पदशब्दः। (वस्तुतः कवाटशब्दः) हा ! महाननर्थोऽस्थाने। अपचरिते मन्त्रोपदेश इव अनवसरे रहस्यसर्वस्व-मुद्भिद्यतेति चकितचकितः शय्यागतः कूर्मो महाह्रद इव गाढनिद्रोदधौ निमग्नः। पर्याप्ताहाराभावस्य, अध्वखेदस्य निशीथप्रसृमरशिशिरमन्दमारुतस्पर्शस्य वा हेतोः दारुणां घुरणामावर्तयामास।

बालकः पुत्रो जामात्रर्थं संभृतानाम् अशितव्यानामर्धमात्मना समापनीय-मिति बहुधा मनोरथप्रासादोपरि नृत्यन्नपि हन्त प्रतारितः। नैपदपि लभते स्म। कष्टम्। केयं विडम्बना ! सर्वेऽपि अभ्यागतपरायणा नैव तं गणयन्ति स्म। "कोऽयं दुर्जातो जामाता शनिः। यस्य हेतोर्मम भोजनमपि दुर्लभमासीत्। नंक्ष्यति चेन शीघ्रं नश्यतु। सत्यमियं लोकोक्तिः यज्जामाता दशमो ग्रहः इति। अवम इति वक्तव्यम्। इयं पीडा लघु परिहर-णीया। अन्यथा पिण्डो दुर्लभः मरणमेव नियतमिति" चान्यन्नाकल्पयत्। स किञ्चित् कर्तुमजानानः क्षणं निदध्यौ। भवतु। यदि नाम म्रियतेऽचिरान्म्रियताम्। मरिष्यति चेन्नियतं मरिष्यत्येव। तावता जनानां नाधिकस्यातङ्कस्य क्लेशस्य वा अवसरः। मम पितामहोऽसकृन्मां उपक्रो-शति। "किं त्वं वेत्सि ? नासिकायां रुद्धायां वक्त्रं व्यादातुमपि न जानीषे" इति। स उपायोऽधुना प्रयोक्तव्य इति मेने। आत्मानं रोगिणः शिरोभागस्य पश्चादवस्थापयन् अशंकितं गाढं निद्राणस्य रोगिणो नासिकामङ्गुष्ठ-तर्जनीभ्यां सुदृढं गृहीत्वा निष्पीडयायास।

आः। पश्यत ! पश्यत ! काराबन्दीखण्डा वक्त्रान्तश्चिरावस्थान-जातद्विगुणस्फीतिमान् आत्मनि प्रविष्टेनेव नीलकण्ठहृदयगतप्रेमरसेन गुरु-भूताः— वर्षासु पल्वलेषु सरसीषु बिलमुखेभ्यो बहिः क्रमेणोत्प्लवन्तः पर्याय-

प्रवर्त्यमानकरालक्रन्दनाध्ययनपरायणा भेकाभीका इव स्वयं व्याददानात्तद्-वक्त्रकन्दरान्निश्चक्रमुः। रश्मिपु गृहीत इव रोगी झटिति प्रबुद्धः। उत्थितः। शय्यायामुपविष्टः। अहो! निद्राणस्य मे वक्त्रात् स्वयमेव निर्गताः किलामी खण्डाः। किमिदानीं कर्तव्यम्। अतृतीयाक्षिपातं सत्वरमेव गोपनीयाः इति सर्वांस्तान् स्वकीये वस्त्रखण्डे समाहृत्य बद्ध्वा पेटिकायां निधाय तां योक्त्रेण संयम्य कुञ्चिकां स्वीयधनभस्त्रिकायां कृत्वा दिष्ट्या रक्षितोऽस्मीति निशश्वास। स्वस्थो जात इति अन्यान् बोधयितुकाम इव प्रबलमक्षुवत्। सर्वे प्रबुद्धाः। अहो! अन्तिमः स्वरसंयोगः। "हा गतोऽसि जामातः" इति सोरस्ताडकरुणं विलपितुं प्रावर्तन्त। सुन्दरशास्त्री नोदतास्यत्। सर्वथा नियतिर्बलीयसी। कस्तामन्यथयितुमीष्टे। भवतु पश्यामः। हा दैवमनुकूलमिव भाति। पश्यत मुखे प्रसादम्। हा आमोदः! प्रमोदः! सम्मोदः! शुभंयु लक्षणं दृश्यते। न स्फीतिमा। नापि श्वयथुः सर्वं सुन्दरम्। वत्से वासन्ति दिष्ट्या प्रत्युज्जीवितासि। वन्दस्व ते मांगल्याधिष्ठानदेवताम्। कुरु देवतापूजाम्।

नीलकण्ठः किञ्चिदिव कांजिकं स्वीचकार। नादृशमृदुपानीयं विनाऽन्यत् कठिनं किमपि सव्रणे कण्ठे कथं नाम स निगिरतु।

प्रभातायां रजन्यां नीलकण्ठः स्वस्थो जातः। न कोऽपि विकारः। सर्वं सुस्थम्। अन्येद्युः सायं वासन्त्या सह वाष्पशकटश्रेण्यां प्रथमकक्ष्यायमास्थितः स्वाधिकारस्थानमाससाद।

अधुना महान् कश्चन स्वभावभेदो नीलकण्ठे समदृश्यत। पाश्चात्यानां वेषभाषादिषु यावत्तन्मयत्वावलम्बनं तत् सर्वं दूरापेतम्। अधुना प्राचीनभारतीयसंप्रदायानुगतमुष्णीषादिकं धरन्नवर्तत। अयं च भेदो वासन्त्युपज्ञमित्येव शुश्रुवे। अथापि नियतमहमेकं विषयं ब्रवीमि नीलकण्ठपुरोहितः न पुनरपि कारावुन्दीभक्षणे मतिं यावज्जीवमाबबन्ध। दग्धपयः पीत्वा बिडाली वस्तुदर्शं त्रस्यति। स्वभावनियतं नित्यं शोभते नैव कृत्रिमम्।

---

# मेघनादवधम्

## त्रयोदशः सर्गः

[ निबन्धकः—श्रीनित्यगोपालविद्याविनोदः ]

अथ राघवजीवितप्रियाऽवददालि न्वनयं दिनं बहु ।
सुसुखं विपिने तव स्वसा दयितस्यैव चकार विप्रियम् ॥१॥
हृदयं सजनि ह्रियाकुलं व्यथतेऽतीव तदीयवार्त्तया ।
रमणीकुलवाञ्छितं पतिं मम घातेन वरीतुमैहत ॥२॥
दयितावरजः क्रुधा हि तां निरकार्षीदिति रक्षसां गणः ।
अगमत् प्रधनं विभीषणमभवन्नेति कुटीरमाविशम् ॥३॥
धनुषः सखि घोरटङ्कृतेः श्रवणेनारुदमार्त्तमानसा ।
अवितुं दयितं कृताञ्जलिरसकृद्देवगणं समाह्वयम् ॥४॥
गगनं मुखरं रणस्वनैः पतिताऽहं भुवि मूढचेतना ।
नहि वेद्मि पुनः कदाऽभवं रघुनाथेन सखि प्रबोधिता ॥५॥
मृदुकण्ठपतिः समीरणो मधुमासीव वने सुपुष्पिते ।
अवदद्रघुवंशकेतनं त्वरितं चेतनमाप्नुहि प्रिये ॥६॥
अयि राघवजीवितेश्वरि वसुधातल्पमिदं किमर्हसि ।
चपलं शयनं महीतलं त्यज चोत्तिष्ठ सुवर्णवर्णिनि ॥७॥ ( युग्मम् )
सरमे श्रवणे पुनः किमु मधुरध्वानममुं समेष्यतः ।
ब्रुवतीत्थमियाय मूर्च्छितं सहसा सा च दधार तां सखी ॥८॥
विहगीव शरेण ताडिता मृगयोरापतिता भुवस्तले ।
व्यथयाऽतितरां निपीडिता सरमाक्रोडतलं विवेश सा ॥९॥
कियतः क्षणतः सचेतनां सरमा प्राह सखि क्षमस्व माम् ।
अहमेव तवाधिकारणं कुमतित्वादभवं रघुप्रिये ॥१०॥

सरमां पुनराह जानकी मृदुवाक्येन रघूत्तमप्रिया ।
स्खलितं तव नैव लक्ष्यते शृणु पूर्वं वचनं ब्रवीमि ते ॥११॥
कपटेन पुरा कथं श्रुता छलिताऽहं तनयेन ताडका- ।
प्रभवेण यथा मृगी मरौ किरणैरुष्णरुचेः पतिस्वसुः ॥१२॥
अशुभे समये मयाऽर्थितः सखि हेम्नो हरिणस्ततो मम ।
धृतचापपतिर्बहिर्ययौ गृहरक्षार्थनियुक्तलक्ष्मणः ॥१३॥
कपटो हरिणस्तडिद्द्युतिर्वनमुज्ज्वल्य सुखं पलायितः ।
मृगराजगतिः पतिश्च मे तमधावन्नयनामृताञ्जनम् ॥१४॥
सहसाऽशृणवं ध्वनिं "कुतः प्रिय सौमित्र इहापदः क्षणे ।
परिरक्ष विपन्नमग्रजं" श्रुतिमात्रेण च सोऽतिशङ्कितः ॥१५॥
अवदं चकिता भयातुरा व्रज धीराशु वनं निशामय ।
जनमार्त्तममुं य इच्छति तव साहाय्यमलं बिभेम्यहम् ॥१६॥
श्रवणेन ममासवो ध्वनेः करुणस्य व्यथिता व्रज द्रुतम् ।
रथिकाह्वयतीति मे मती रघुनाथोऽवरजं सुहृत्तमम् ॥१७॥
अवदत् स कथं करिष्यते तव वाक्यानुसृतिः कथं नु वा ।
विजने विपिने त्वमेकला स्थितिमाधास्यसि रक्ष-आकुले ॥१८॥
भयमेषि कुतः क ईश्वरः शसितुं तं रघुवंशशेखरम् ।
भुवनत्रितये बली च यो भृगुरामादपि वीरकुञ्जरान् ॥१६॥ (युग्मम्)
ध्वनिरार्त्त इति श्रुतो मया "क नु सौमित्र इहासुसङ्कटे ।
तनये जनकस्य कुत्र वा दयिते" धैर्यमतश्च्युतं मम ॥२०॥
रघुसिंहसखः पुनर्मया कथितस्त्वं जनितः सुमित्रया ।
न हि सत्यमिदं वचः खल हृदयं तेऽश्ममयं विधीप्सितम् ॥२१॥
कुमते विपिने भृतो भवान् वृकपत्न्या विदितो हि रे शठ ।
रघुवंशकलङ्क दुर्बल स्वयमेमीक्षितुमार्त्तनादिनम् ॥२२॥
अपभाषित एवमिद्धरुडरुणाक्षो धृतचापमार्गणः ।
इषुधिं परिबध्य पृष्ठकेऽकथयन्मां परिलक्ष्य लक्ष्मणः ॥२३ ॥

जननीसदृशी त्वमेव मे जनकक्षोणिपतिप्रियात्मजे ।
सरलं तव दुर्वचः सहे प्रचलामि प्रवसेह जाग्रती ॥२४॥
न हि कृपणमीपदस्ति मे तव वाक्याद् भवतीमहं जिहे ।
कथयन्नियदेव लक्ष्मणः प्रजगाम त्वरयाऽन्वितो वनम् ॥२५॥
विमना विजने तदा स्थिता बहुशङ्काकुलितं मनोऽभवत् ।
कथमालि वदामि तां कथां दिवमाचक्रम उष्णगुर्द्रुतम् ॥२६॥
सुखिता विहगा मृगव्रजा मृगपोताश्च तथा सदाव्रताः ।
करभाः प्रियया युतास्तदा पशवश्चाययुरस्मदाश्रमम् ॥२७॥
समदर्शमहं तदन्तरेऽनलकल्पं जटिलं महामुनिम् ।
असितं स्फटिकाक्षमालया धृतपाणिं च कमण्डलुश्रितम् ॥२८॥
विदितो यदि सोऽभवत् सखि कुसुमे सर्प इवातिभीषणः ।
गरलं विमले जलेऽथवा न हि तस्मै नमितं शिरो मया ॥२९॥
कितवः स यतिर्जगाद मां रघुलक्ष्मि त्वरितं प्रयच्छ मे ।
क्षुधया व्यथिताय तृप्तये फलमूलादि यदस्ति सञ्चितम् ॥३०॥
वदनं पिहितं विधाय मे वसनान्तेन तमब्रवं सखि ।
कृपयाऽजिनमासनं प्रभो समलङ्कृत्य विनोदय श्रमम् ॥३१॥
उपविश्य तरोर्मूले सुखं क्षपयाल्पं समयं मम प्रियः ।
अनुजेन समं समागतस्तव पूजां परमां विधास्यति ॥३२॥
अगदीत् कपटक्षुधाऽन्वितः पिशुनो मां रघुवंशनन्दिनि ।
अशनं त्वरितं प्रदेहि मे त्वथ वाऽन्यत्र मया चलिष्यते ॥३३॥
विमलं जननं रघोः किमु मलिनीकर्तुं मही त्वमिच्छसि ।
द्विजशापमुपैष्यसे कथं वितराशं न हि शापमाश्रय ॥३४॥
ज्येष्ठेन पत्युस्तव रावणेन सखी धृताऽहं महता बलेन ।
अज्ञातपाशेव खगी निबद्धा धूर्तेन पापेन किरातकेन ॥३५

अहर्ये कस्मिन् कमलवदने पर्यटन्त्या प्रियेण
रम्येऽरण्ये हरिणगृहिणी वीक्षितैका चरन्ती ।

श्रुत्वा पश्चाद् विकटनिनदं युक्तया साध्वसेन
विक्षिप्ताक्ष्या वृककवलिता सैव दृष्टा वराकी ॥३६॥
रक्षैनां भोः प्रियतम मृगीं दुष्टशार्दूलशीर्णा-
मित्युक्त्वाऽधां चरणकमले वल्लभस्यातिदीना ।
आर्त्तत्राणव्रतधृततनुर्मोचयामास नाथ-
स्ताश्चारण्यश्रियमहमतिप्रेमतोऽरक्षमालि ॥३७॥

इति श्रीमेघनादवधे महाकाव्ये सीतासरमासाक्षात्कारो नाम
त्रयोदशः सर्गः ।

---

## चतुर्दशः सर्गः

दधार रक्षईशो मां शार्दूल इव भीषणः ।
न कोऽप्यगाद् विपन्नां मां रक्षितुं हरिणीमिव ॥१॥
हाहाकाररवैरासीद् वनं पूर्णं ममाऽऽर्त्तिजैः ।
शृण्वतीवाटवी देवी क्रोशन्तीं मामुपारुदत् ॥२॥
नाश्रुभिस्तस्य हृदयं द्रुतमासीदयोमयम् ।
द्रावयेल्लौहमनलो नापां धाराः सहस्रशः ॥३॥
कमण्डलुं जटाजूटं विमुच्य दूरतः शठः ।
आरोपयन्नृपाकल्पः पापो मां कानकं रथम् ॥४॥
अचालयद्रथी रथमहञ्चारुदमाकुलम् ।
कृष्णसर्पकवलिता भेकीव सुभगे वृथा ॥५॥
रथचक्रविनिर्घोषो ममाऽऽर्त्तध्वनिमभ्यभूत् ।
वायुमर्मरितो वृक्षः कपोतीक्रोशनं यथा ॥६॥
हतबुद्धिस्तदाऽमुञ्चं सर्वाण्याभरणानि मे ।
उत्क्षिपञ्च ततो दग्धदेहे तानि न पश्यसि ॥७॥

इत्युक्त्वा जोपमास्मां तां शशाङ्कवदनां सखी ।
सरमाह पुनर्दासी शुश्रूषते सुधावचः ॥८॥
पुनर्वदितुमारब्ध सीतेन्दुप्रतिमानना ।
शुश्रूषसे पुनस्त्वञ्चेच्छ्रूयतां मद्व्यथातुरं ॥९॥
विहगीं वागुराबद्धां नीत्वा प्रीतो यथा गृहम् ।
प्रयाति मृगयुस्तादृगचालयद्रथं रथी ॥१०॥
आक्षिप्ताङ्गी खगी यद्वद् वागुरां भङ्क्तुमीहते ।
तद्वद् रोरुद्यमानाऽहमाह्वयं शब्दवाहनम् ॥११॥
लोकैस्त्वं कथ्यसे शब्दवाह इति दयस्व मे ।
नय सन्देशमेतं मे यत्र रामः सलक्ष्मणः ॥१२॥
गन्धं वहसि वायो त्वमतो दौत्यं विधेहि मे ।
याहि क्षिप्रं यत्र नाथो भ्रमत्याकुलमानसः ॥१३॥
आकारय प्रभुं मेघ भीमनादैर्मम प्रियम् ।
पुष्पं हित्वा चञ्चरीक गुञ्ज यत्र रघूत्तमः ॥१४॥
पिकराज मधोर्मित्र गाय पञ्चमतानलः ।
नाथः श्रोष्यति ते गीतं नूनं लोकमनोहरम् ॥१५॥
सर्वमेवं विलापं मे वयस्ये कोऽपि नाशृणोत् ।
दीनानां दैन्यवचनमरण्यरुदितोपमम् ॥१६॥
पुष्पकमतिचक्राम देशान्नदीर्नदान् बहून् ।
नगश्रेणीररण्यानीस्तद्गतिस्तव गोचरी ॥१७॥
कालेनाशृणवं भीमं नादं पुरो भयार्दिताः ।
हयाः स्वर्णरथश्चैव चचालास्थैर्यबन्धुरम् ॥१८॥
अदर्शं चक्षुरुन्मील्य वीरं भैरवविग्रहम् ।
गिरौ प्रलयसञ्जातमेघमण्डलसन्निभम् ॥१९॥
वीरवर्योऽवदन्मन्द्रं जानामि त्वां दशाननम् ।
चौरं दुर्मेधसं त्वद्य हरसि कां कुलाङ्गनाम् ॥२०॥

प्रेमदीपस्य निर्वाणात् कस्य गेहं तमोवृतम् ।
अकार्षीस्त्वं दुराचार वेदाग्रे तन्नित्यकर्म ते ॥२१॥
धिक् त्वां मूढमतिं लज्जाहीनं राक्षसलाञ्छनम् ।
दुर्वृत्तं प्रेषयाम्यद्य कृतान्तसदनं शरैः ॥२२॥
उक्त्वैतावत् केशरीव जगर्ज स महाबलः ।
तेनाहं मूर्च्छिताऽपप्तं शताङ्के स्वर्णनिर्मिते ॥२३॥
संज्ञां लब्ध्वा स्थितं भूम्यामात्मानमैक्षिषि प्रिये ।
गगने युयुधे रक्षोराजो वीरेण हुङ्कृतैः ॥२४॥
अबला रसना क्वचिद् वर्णितुं तद्रणं क्षमा ।
मया निमील्य नयने देवताभ्यो निवेदितम् ॥२५॥
साहाय्यार्थाय वीरस्य हन्तुकामस्य राक्षसम् ।
माश्वोद्धर्तुं तथा यत्नं कुरुध्वं करुणाधनाः ॥२६॥ (युग्मम्)
दूरं वनं गन्तुकामा प्रोत्थिताऽहं स्खलत्पदम् ।
भूमिपृष्ठेऽपप्तं भूमिकम्पनेनेव घूर्णिता ॥२७॥
याचे स्म वसुधे मातर्मां ते वक्षःस्थलं नय ।
सहसे वेदनां साध्वि दुहितुस्त इमां कथम् ॥२८॥
तूर्णमेह्यन्यथा दुष्टः प्रत्येष्यति यथा निशि ।
आयाति तस्करो यत्र रत्नमन्यस्य रक्षितम् ॥२९॥
तुमुलं रणवादित्रं ननाद गगने सखि ।
चकम्पे वसुधा कृत्स्ना पूर्णो देशः समारवैः ॥३०॥
मूर्च्छिताऽहं पुनः स्निग्धे शृणु चावहिता कथाम् ।
प्राक्तनीं वसुधा माता स्वप्ने मधुवचोऽब्रवीत् ॥३१॥
विधिना प्रेरितः क्रव्याद्राजस्त्वामहरत् खलः ।
नङ्क्ष्यतीति सवंशः स भार एष सुदुर्वहः ॥३२॥
लङ्कां नाशयितुं गर्भे त्वामधां कुक्षणे तव ।
अस्पृशद् वर्ष्म पापः स मर्तुं दैवविडम्बितः ॥३३॥

विधिर्मयि प्रसन्नोऽद्य मातृदुःखं हृतं त्वया ।
द्वारं मुञ्चामि पश्य त्वं भवितव्यस्य मैथिलि ॥३४॥
अपश्यं पर्वतं व्योमभेदिनं पुरतः सखि ।
निमग्ना इव दुःखाब्धौ पञ्च वीरास्ततोऽभवन् ॥३५॥
तदा तत्राऽऽययौ नाथो विषण्णवदनः प्रिये ।
लक्ष्मणेन समं वीक्ष्य तं भृशं रोदनं व्यधाम् ॥३६॥
अपूजयन् रघुश्रेष्ठं वीराः पञ्च सलक्ष्मणम् ।
ततस्ते नगरे रम्ये सर्व आसत सङ्गताः ॥३७॥
घोरे मृधे नृपं हत्वा तद्देशस्य रघूत्तमः ।
पञ्चानां वरमेतेषां भूपं विहितवान् मुदा ॥३८॥
वीरसिंहा अगणिता आयाता घोरनादिनः ।
अधावन् दूतवृन्दानि परितः कम्पिता धरा ॥३९॥
भयमुद्रितनेत्रां मां जननी प्राह सस्मितम् ।
कस्मात्त्रस्यसि वैदेहि सुग्रीवस्त्वां मुमुक्षति ॥४०॥
किष्किन्ध्याधिपतिर्वाली यस्ते पत्या विनाशितः ।
सज्जन्ते वीरमातङ्गास्त्वामुद्धर्तुं बलोन्मदाः ॥४१॥
सहुङ्कारं चलन्त्येते स्रोतःसु पाथसामिव ।
वर्षासु सरितः शुष्का वृक्षा भग्ना इतस्ततः ॥४२।
वन्यसत्त्वानि भीतानि पलायन्ते स्म दूरतः ।
मन्द्रघोषैर्जगत् पूर्णं सैन्याः सिन्धुतटं गताः ॥४३॥
प्लवमाना मया दृष्टा ग्रावाणः सलिलोपरि ।
शैलाः क्षिप्तास्तथा वीरैः समुत्पाटितघूर्णिताः ॥४४॥
सेतुर्बद्धो महाश्चर्यैः शिल्पिभिः शिल्पकोविदैः ।
वारीश्वरः स्वयमधाच्छृङ्खलामङ्घ्रि सारसे ॥४५॥
लङ्घयित्वाऽलङ्घ्यसिन्धुं वीराः कटकमत्यगुः ।
कम्पिता स्वर्णलङ्केषा वैरिपादभराहिता ॥४६॥

जयोल्लासध्वनिं सर्वे चक्रुः सैन्याः समन्ततः ।
दुःखेनारुदमत्यर्थमपश्यं रावणं पुनः ॥४७॥
स्वर्णासनसमासीनं सौवर्णे सुनिकेतने ।
साक्षाद्धर्मसमो धर्म्यो वीर एकस्तमब्रवीत् ॥४८॥
सीतां दत्त्वाऽर्च्ययाऽऽशु त्वं रघुशार्दूलमग्रज ।
अन्यथा सकुलं नाशं गमिष्यस्यचिराद्ध्रुवम् ॥४९॥
अथोष्मणाऽभितप्तेन रावणेन पदाहतः ।
भर्त्सितश्चाभिमानेन सोऽगाच्छन्मे प्रियास्पदम् ॥५०॥
सरमोवाच वैदेहि रक्षोराजानुजः स हि ।
कीदृग् दुःखी कथं वक्ष्येऽरुदिम त्वत्कृते भृशम् ॥५१॥
जानक्युवाच जानेऽहं त्वया सह विभीषणः ।
सन्ततोपकृतौ लग्नो जीवामि युवयोर्गुणैः ॥५२॥
आकर्णय दयाशीले कथयामि पुनः कथाम् ।
अपूर्वां स्वप्नसम्पृक्तां कौतूहलशिखोज्ज्वलाम् ॥५३॥
सन्नद्धा राक्षसाः सर्वे युद्धाय क्रोधमूर्च्छिताः ।
ध्वनितं रक्षसां तूर्यं प्रतिध्वनितमम्बरम् ॥५४॥
बभूव तुमुलं जन्यं नद्य ऊहुरसृग्जलाः ।
शैलाकाराः शवा भीमा दृश्यन्ते स्म समन्ततः ॥५५॥
कबन्धा ननृतुः प्रेताः पिशाचाश्चैव दानवाः ।
गृध्राः शकुनयस्ते ते विहगा मांसलोलुभाः ॥५६॥
शृगालयूथमागच्छद् भषन्तः श्वान आययुः ।
पूरिता ध्वनिभिर्लङ्का भैरवैरसकृत्तथा ॥५७॥
भूयोऽपश्यं सभायां तं कर्बुर-कुलनायकम् ।
साश्रुनेत्रं शुचाक्रान्तं चिन्तान्धकारिताननम् ॥५८॥
विषण्णो रावणः प्राह हतमानस्त्वहो विधे ।
इदमासीत्तव स्वान्ते मय्येकान्तपराङ्मुख ॥५९॥

क्षिप्रं विबोध्यतां भ्राता कुम्भकर्णः शिवोपमः ।
तं विना समरे को वा त्रायेत रक्षसां कुलम् ॥६०॥
पुनर्युद्धं समारब्धं नार्यश्चक्रुर्हुलुध्वनिम् ।
भीममूर्त्ती रथिश्रेष्ठः क्षिप्रं कटकमाविशत् ॥६१॥
प्रभुर्मे तीक्ष्णबाणेन चकर्त्तास्य शिरः क्षणात् ।
अकाले भग्ननिद्रोऽसौ जगाम शमनालयम् ॥६२॥
रक्षसां रोदनं श्रुत्वा दुःखिताऽम्बामवादिषम् ।
दीर्यते हृदयं मेऽम्ब परदुःखेन मृष्यताम् ॥६३॥
विहस्य वसुधा चाह सत्यं दृष्टं रघुप्रिये ।
धर्षयित्वा पुरीं रामो रावणं निहनिष्यति ॥६४॥
पश्येत्युक्ता तयाऽपश्यं दृश्यं स्वजनि चाद्भुतम् ।
माल्याभरणहस्ता मां परिवव्रुः सुराङ्गनाः ॥६५॥
काचित्तासामवोचन्मां साध्व्युत्तिष्ठ हतो रिपुः ।
दिनैरेभीरणे चान्या शुभोदन्तैरहर्षयत् ॥६६॥
सुगन्धसलिले स्नात्वा परिधेहि विभूषणम् ।
सीताभर्त्रे स्वयं सीतां दास्यत्यद्य शचीसखः ॥६७॥
प्रावोचं सरमे भूत्वा कृताञ्जलिः सुराङ्गनाम् ।
अलं वेशैरलङ्कारैर्दीना द्रक्ष्यामि वल्लभम् ॥६८॥
दीनां सीतां नरव्याघ्रो दीनवेशां स पश्यतु ।
सुरबालाश्च प्रत्यूचुः श्रुत्वेदं वचनं मम ॥६९॥
शृणु मैथिलि तिष्ठन्ति रत्नानि रेणुभिः खनौ ।
कीर्णानि तानि संस्कृत्य राज्ञे दाता प्रयच्छति ॥७०॥
रुदित्वाऽहं हसित्वा च सज्जिताऽपश्यमन्तिके ।
नाथं हैमोदयाद्रिस्थं देवमर्यमणं यथा ॥७१॥
उन्मत्तेव गता धर्त्तुं पादपद्मं प्रियस्य मे ।
तदैवाजागरमहं सुधांशुवदने सखि ॥७२॥

सहसा दीपनिर्वाणे ध्वान्तच्छन्नं गृहं यथा ।
तद्विधा मे दशा जाताऽदर्शं विश्वं तमोमयम् ॥७३॥
दुःखितां जोषमासीनां वितन्त्रीमिव वल्लकीम् ।
तां प्राह सरमा खिन्ना रुदती राजलक्ष्मीवत् ॥७४॥
जानक्याप्स्यसि नाथं ते स्वप्नस्ते सफलीभवेत् ।
कुम्भकर्णमुखा वीरा रक्षःपक्षा मृता मृधे ॥७५॥
मरिष्यति दशस्कन्धः पुत्रैः पौत्रैश्च बन्धुभिः ।
भूयः कथय किं वृत्तं श्रोतुं चित्तं सलालसम् ॥७६॥
पुनर्वक्तुं समारेभे सती जितपिकस्वरा ।
उन्मील्य नयनेऽपश्यं पुरतो रावणं स्थितम् ॥७७॥
चूर्णं वज्रनिपातेन शैलशृङ्गमिवोच्छ्रितम् ।
भूतले पतितं हन्त रावणं वीरवारणम् ॥७८॥ ( युग्मम् )
स त्वाह मां पश्य भद्रे रावणस्य पराक्रमम् ।
जटायुर्निहतो वीरो मयाजौ बाहुवीर्यतः ॥७९॥
स्वदोषेण मृतो मूढो गारुलिः को मया सह ।
योद्धुं समुक्तवान् योऽभूत् सर्वथा बर्बराधमः ॥८०॥
शनैरुवाच शूरः स म्रियेऽहं साधुकर्मणे ।
स्वर्गं यामि हतो युद्धे दुर्दशां भुङ्क्ष्व राक्षस ॥८१॥
जम्बूको लिप्ससे सिंहीं कस्त्वां त्रायेत पामर ।
स्त्रीरत्नं चोरयित्वा त्वं विपत्सिन्धौ निमज्जसि ॥८२॥
एतदुक्त्वा खगाधीशे विरते राक्षसाधिपः ।
आरोपयद्रथं भूयो रुदतीं मां भयातुराम् ।८३॥
द्विजं कृताञ्जलिर्भूत्वाऽवदं वैदेहकन्यका ।
नाम्ना सीता रघुश्रेष्ठभार्याऽहं रक्षसा हृता ॥८४।
वक्ष्यसि कृपया नाथं रामं दृष्टिपथागतम् ।
वार्त्तामिमां खगाधीश मत्त्राणोत्सृष्टजीवित ॥८५॥

शताङ्ग उदगाद् व्योम निर्घोषपूर्णदिङ्मुखम् ।
भीमो नादः श्रुतः स्निग्धे दृष्टश्चोदधिरग्रतः ॥८६॥
ऊर्म्मिमालिमहासिन्धौ पतित्वा मर्त्तुमिच्छतीम् ।
मां निवारितवान् क्रूरो दुष्टाभिसन्धिपीडितः ॥८७॥
मनसाह्वमपामीशं देववृन्दञ्च कातरम् ।
न कोऽप्याकर्णयामास मम तां करुणां गिरम् ॥८८॥
अनम्बरपथेनासौ रथो मनोरथाशुगः ।
क्षिप्रं चचाल पुरतः शुशुभे कानकी पुरी ॥८९॥
रक्तचन्दनरेखाया धारिणी सा महापुरी ।
न बभौ मे स्वर्णबन्दीशालेव बन्दिनेत्रयोः ॥९०॥
किं प्रीतिं याति विहगी कुञ्जकाननचारिणी ।
सुवर्णपिञ्जरे बद्धाऽस्वतन्त्रा दुःखभागिनी ॥९१॥
राजकन्या वधू राज्ञां कारायां यन्त्रिता सखि ।
श्रुतपूर्वं त्वया कच्चिद् वृत्तमीदृशमद्भुतम् ॥९२॥
इत्युक्त्वा कण्ठमालिङ्गय सरमाया रुरोद सा ।
रुदती सरमा चाह नेत्रे संमृज्य मैथिलीम् ॥९३॥
नावश्यम्भाविता देवि रोद्धुं शक्या सुरैरपि ।
हृता त्वं विधिवश्येन रावणेन मुमूर्षुणा ॥९४॥
हता वीरा महीयस्या लङ्कायाः पश्य दुर्द्दशाम् ।
तव दुःखनिशा नूनं प्रभाताशु भविष्यति ॥९५॥
फलिष्यत्यचिरात् स्वप्नपादपस्ते वपुर्वरम् ।
अलङ्करिष्यते विद्याधरीभिर्दिव्यभूषणैः ॥९६॥
सङ्गंस्यसे वल्लभेन मधुनेव क्षितिर्मधौ ।
स्मरिष्यसि सदा साध्वि दासीमेनां पदाश्रिताम् ॥९७॥
मनोमन्दिरदेवीं त्वां पूजयिष्यामि नित्यशः ।
कौमुदीं परया प्रीत्या सरसीव निशागमे ॥९८॥

भुक्ताः सुबहुलाः क्लेशा देशेऽस्मिन् वरवर्णिनि ।
कारणं नास्मि दोषाणां तेषां ते परिचारिका ॥९९॥
सीतोवाच शनैरालि त्वादृशी मे हितैषिणी ।
काऽस्ति भूमितले त्वं मे मरौ स्वच्छप्रवाहिणी ॥१००॥
अकार्षीस्तापदग्धां मां स्निग्धां त्वं छायया स्वया ।
देशेऽस्मिन करुणामूर्त्तिस्त्वं क्रूरै राक्षसैर्वृते ॥१०१॥
पङ्किले सलिले पद्मं रत्नं शीर्षेऽहियोषितः ।
लङ्कायाः किं ब्रवीम्यन्यत्त्वं सीतादुर्लभं धनम् ॥१०२॥
लब्ध्वा निष्किञ्चनो भाग्यान्निधिं यत्नाद् यथाऽवति ।
हृदि सम्पुटकेऽहं त्वां रक्षिष्यामि तथाऽनिशम् ॥१०३॥
प्रणत्य सरमा प्राह दासीं विसृज साम्प्रतम् ।
प्राणा नेच्छन्ति हातुं ते दुर्लभं पदपङ्कजम् ॥१०४॥
रामदासस्तु मे भर्त्ता सम्भाषेऽहं त्वया सह ।
शृणुयाच्चेदिदं लङ्कानाथोऽहं विपदं भजे ॥१०५॥
प्रत्याह मैथिली स्निग्धे क्षिप्रं गच्छ निजालयम् ।
पदध्वनिं शृणोम्याराद् मन्ये चेटीः समागताः ॥१०६॥
भयतो हरिणी यथाऽटवौ सरमेयाय तथाऽतिसत्वरम् ।
विजने विपिने स्थिता सती कुसुमं वकलमुग्रकानने ॥१०७॥

इति श्रीमेघनादवधे महाकाव्ये सीतासरमासंवादो नाम
चतुर्दशः सर्गः ।

---

वररुचिविरचिता

# लिङ्गवृत्तिः

(पूर्वतोऽनुवृत्ता)

**पातालजालमलखलकपालशैवालशीलनालानि ।**

**चीरचीवरवियन्ति च विद्धि तृतीयप्रकृतिकानि* ॥२८॥**

एतेषां तृतीया प्रकृतिः । तृतीयस्थाने नपुंसकस्य दृष्टत्वात् पातालादीनि तृतीयप्रकृतीनि* विद्धि जानीहि । यथा इदं पातालं रसातलम् । जालं मत्स्यबन्धनम्, गवाक्षश्च । मलं पापम् । खलं मर्दनस्थानम् व्रीहीणाम् । कपालं मस्तकास्थि खण्डश्च । शैवालं जलसम्भवम् । शीलं विनयः । नालं पद्मादीनाम् । चीरं जीर्णवस्त्रम् । चीवरं भिक्षुप्रावरणम् । वियद् आकाशम् ।

**मुण्डनितम्बक्षुपगुल्मसान्वङ्कवंशपूगशङ्खरथाश्च† ।**

**पुंसि स्युर्जघनाम्बरफलमूलाङ्गानि तु‡ विमुच्य ॥२९॥**

एते शब्दाः पुंसि स्युः । अयं मुण्डो मुण्डितशिराः । नितम्बः पश्चाद्भागः स्त्रीकट्याः । ह्रस्वशाखामूलको वृक्षः क्षुपः । गुल्मः शाखापत्रप्रवरणः । सानुः पर्वतैकदेशः । अङ्कः चिह्नम् । वंशः वेणुः सन्ततिश्च । पूगः क्रमुकः । शङ्खः कम्बुः । वंशोऽन्वयः । रथः स्यन्दनः । नपुंसकाधिकारात् जघनादयो नपुंसके स्युः । इदं जघनं कटिप्रदेशः । अम्बरमाकाशं वस्त्रञ्च । फलं वृक्षादीनाम् । मूलं शिफा । अङ्गम् अवयवः ।

---

* तृतीयाप्र० इत्यादयौ । तत्र संज्ञावचनत्वात् पुंवद्भावाभावो बोध्यः ।

† रथाः—मु० पु०

‡ च—मु० पा०

**क्षीरोदश्विन्नवनीतवर्षकुण्डाण्डघृतभगगगनानि ।**
**विद्यान्नपुंसकान्योदनश्च पुंसि स्त्रियां ज्या च ॥३०॥**

एतानि नपुंसकानि स्युर्भवेयुरित्यर्थः(?)। यथा—इदं क्षीरं दुग्धम्। उदश्वित् तक्रविशेषः। नवनीतं दधिविकारः। वर्षं वत्सरः। कुण्डं पेयादिपात्रम्। अण्डं बीजादिप्रादुर्भावः। इदं घृतमाज्यम्। भगं योनिः। गगनमाकाशम्। ओदनस्तु पुंसि भवति। अयमोदनो भक्तम्। स्त्रियां ज्या च। इयं ज्या धनुषो गुणः।

**विषसंज्ञाः पुंसि विषं तु नपुंसकं स्यात्* स्त्रियां तिथिर्वोक्ता ।**

विषसंज्ञाः पुंसि भवन्ति। अयं हालाहलः। कालकूटः। ब्रह्मपुत्रः। विषं नपुंसकम्। इदं विषं सर्पशरीरजम्। तिथिशब्दो विभाषया स्त्रीलिङ्गे भवति पुंलिङ्गश्च। इयं तिथिः। अयं तिथिः।

**अतिथिस्तु† पुंसि शकृन्नीतशोणितानीतरप्रकृतौ ॥३१॥**

अतिथिशब्दः पुंसि भवति। अयमतिथिरभ्यागतः। शकृदित्यादीनीतरप्रकृतौ नपुंसके भवन्ति। इदं शकृत। नीतं घृतम्। शोणितं रुधिरम्।

**मुक्त्वा दिनाहनी दिवसनामानि‡ पुंसि स्त्रियां त्विडुडुताराः ।**

दिनाहनी मुक्त्वा अन्ये दिवसपर्यायाः पुंसि भवन्ति। अयं दिवसो वासरः। घस्रः। सूर्याङ्क§ इत्यादिः। दिनाहनी नपुंसके भवतः। इदं दिन-

---

* 'विषं' नपुंसकी—मु० पा०

‡ दिवसनाम—मु० पा०

महः। स्त्रियां त्विड्डुडुतारा:। त्विडादयः स्त्रियां भवन्ति। इयं त्विट् कान्तिः। इयमुडुर्नक्षत्रम्। इमास्तारा नक्षत्राणि।

## यानयुगः॰ पुंस्युक्तः स्त्रियां समाश्चैव वर्षाश्च ॥३२॥

यानयुगः* पुंसि भवति। अयं यानयुगः*। *यानयुगग्रहणमन्ययुग-निवृत्त्यर्थम्। तेनेदं कृतयुगम्। कलियुगम्। स्त्रियां भवन्ति समाश्च वर्षाश्च। बहुवचनान्तयोः प्रयोगः। इमाः समाः। इमा वर्षाः। एवकारोऽवधारणे।

## भवति नपुंसकयोगः संख्यापूर्वस्य रात्रिशब्दस्य।

संख्यापूर्वो यदि रात्रिशब्दस्तदा नपुंसके बोद्धव्यः। यथा—इदमेक-रात्रम्। द्विरात्रम्। त्रिरात्रम् इत्येवमादयः।

## ससमासस्य तु तस्यैव पुंसि योगं विजानीयात् ॥३३॥

सह समासेन वर्त्तत इति ससमासः। ससमासस्य तु रात्रशब्दस्य पुंसि योगं विजानीयात्। †सर्वरात्रः। अर्द्धरात्रः। वर्षारात्रः।

## पुरमधुजगन्ति विद्यान्नपुंसके वा स्त्रियां भवेदर्चिः।

पुरादीनि नपुंसके जानीयात्। इदं पुरं नगरम्। मधु क्षौद्रम्। जगद् विश्वम्। अर्चिःशब्दः स्त्रियां भवति वा। इयमर्चिः, इदमर्चिः, दीप्तिः।

## त्वतलौ नपुंसके स्त्रीविधावहः [पुंसि] संख्यादिः ॥३४॥

त्वतलौ प्रत्ययौ यथासंख्यं नपुंसकस्त्रीविधौ द्रष्टव्यौ। ब्राह्मणस्य भावः ब्राह्मणत्वं ब्राह्मणता। एवमिदं शूद्रत्वं शूद्रता। अहःशब्दो यदा संख्यादि-स्तदा पुंलिङ्गो भवति। अयमेकाहः। द्व्यहः। त्र्यहः। संख्यादेरिति किम्? पुण्याहम्। प्रत्यहम्।

## रुत्वन्ताः पुंसि कसेरुदारुजतुवस्तुमस्तुभिस्त्यक्ताः । स्युः सग्रन्थिप्रस्थाः

रुशब्दान्तास्तुशब्दान्ताः कसेरु-दारु-जतु-वस्तु-मस्तुभिस्त्यक्ता रहिताः सग्रन्थिप्रस्थाः पुंसि भवेयुरित्यर्थः(?)। यथा—अयं त्सरुः खड्गप्रहरणं खड्गमुष्टिः। भरुः भर्त्ता। मरुर्निर्जलो देशः। चरुः समन्त्रस्तत्प्रपाकः। शत्रुः रिपुः। तरुर्वृक्षः। रुरुर्मृगः। मेरुः पर्वतः। इत्यादयः। अयं केतुरुत्पातः। सेतुर्बन्धः। हेतुः कारणम्। तन्तुः पटप्रकृतिः। धातुः श्लेष्मादिः। कशेरुप्रभृतयो नपुंसके भवन्ति। इदं कशेरु भूसम्भवम्। ग्रन्थिप्रस्थौ च पुंसि भवतः। अयं ग्रन्थिः गेण्ठिरिति प्रसिद्धः। प्रस्थः परिमाणम्।

## इसुसुष्यञां स्यान्नपुंसकता* ॥३५॥

इसन्तानामुसन्तानां ष्यञन्तानाञ्च नपुंसकता स्यात्। इदं सर्पिः। हविः देवान्नम्। बर्हिः पवित्रमित्यादिः। इदं वपुः शरीरम्। आयुर्जीवितपरिमाणम्। धनुः शस्त्रमित्यादि। ष्यञ्ग्रहणेन वर्णदृढादिभ्यः ष्यञ् [पा० ५।१।१२३] इति गृह्यते। न ब्राह्मणादिभ्यः [पा० ५।१।१२४]। इदं सौकुमार्यम्। शौक्ल्यम्। कार्ष्ण्यम्। दार्ढ्यम्। कार्श्यम्। इत्यादि।

## पुंसि स्त्रियाञ्च पाटलिगो†मुष्ट्यशनिबाहुसिन्धुमणयः।

एते शब्दाः पुंसि स्त्रियां भवन्ति। इयं पाटलिः। अयं पाटलिः। इयं गौः। अयं गौः। इयं मुष्टिः† । अयं मुष्टिः† । इयमशनिः। अयमशनिः। इयं बाहुः। अयं बाहुः। इयं सिन्धुः। अयं सिन्धुः। इयं मणिः। अयं मणिः।

---

* इसुसुष्यञन्तानां नपुंसकता—मु० पा०

**आशीर्धूःपूः क्षुत्*तृड्गिरः स्त्रियां मुद्रुषावपि† ॥२६॥**

एते शब्दाः स्त्रियां भवन्ति। इयमाशीः इष्टाशंसा। इयं धूः भारः, कीलश्च। इयं पूः पुरी। इयं क्षुद् बुभुक्षा। तृड् पिपासा। इयं गीर्वाणी। मुद् हर्षः। रुड् रोषः।

**शीकरतुषारतुषा बुद्बुदफेनौसतण्डुलापूपाः।**
**स्युः पुंसि‡**

एते शब्दाः पुंसि स्युर्भवेयुरित्यर्थः(?)। शीकरोऽम्बुकणः। तुषारो हिमसंहतिः। तुषो धान्यतुषः, कडङ्गरश्च। ओसः अवश्यायः। तण्डुलो धान्यस्य। अपूपः पिष्टकस्य।

**आलिमुक्ताजिदर्विसिकताः स्त्रियामुदिताः ॥२७॥**

एते शब्दाः स्त्रियामुदिताः कथिताः। इयमालिः पंक्तिः। मुक्ता रत्नम्। आजिर्युद्धम्। दर्विर्भक्तसाधनम्। सिकता वालुका।

**अजिनाजिरशैवालनलमृणालतुहिनोडुपाज्यशस्यानि।**
**द्वारास्पदकाष्ठानि च नपुंसकान्येव पटलञ्च ॥२८॥**

एते शब्दा नपुंसके भवन्ति। इदमजिनं मृगत्वक्। इदमजिरमङ्गनम्। शैवालं जलसम्भवम्। नलं सुवर्णभाजनम्। मृणालं पद्ममूलम्। तुहिनं तुषारः। उडुपं प्लवः। आज्यं घृतम्। शस्यं व्रीहिः। द्वारं गृहस्य। आस्पदं राज्ञाम्। काष्ठमिन्धनम्। पटलं गृहस्य तिमिरं वा। एवकारोऽवधारणे।

**त्रिष्वप्यक्षेष्विन्द्रियसंज्ञका ये तान् नपुंसकान् विद्धि§।**
**शेषाः पुंसि प्रोक्ताः श्रीपिष्टाद्याश्च निर्यासः ॥२९॥**

---

* धूट्—आ   † रुडावपि—आ०   ‡ पुंसि स्युः—मु०

§ संज्ञा या तां नपुंसके विद्धि—मु० पा०

त्रिष्वप्यक्षेपु मध्ये इन्द्रियसंज्ञकमक्षं नपुंसके विद्धि। इदमक्षमिन्द्रियम्। शेषास्त्वक्षाः पुंसि प्रोक्ताः। अयं देवानामक्षः। शकटाः श्रीपिष्टाद्याश्च निर्यासाश्च पुंसि भवन्ति। अयं श्रीपिष्टः सर्जरसः। गुग्गुलुरित्येवमादयः।

**विंशतिरा नवतेः स्त्री नपुंसके तालुहृदयकुड्यानि।**

विंशतिप्रभृतयो नवतिपर्यन्ताः स्त्रियां भवन्ति। इयं विंशतिः। त्रिंशत्। चत्वारिंशत्। पञ्चाशत्। षष्टिः। सप्ततिः। अशीतिः। नवतिः। एतानि शब्दानि (?) नपुंसके भवन्ति। इदं तालु वदनैकदेशः। हृदयं जीवितस्थानम्। कुड्यं भित्तिः।

**पार्श्वकुकुन्दरविण्यतलधनलवणराष्ट्राणि चावेहि*॥४०॥**

एतानि नपुंसकानि अवेहि अवगच्छेत्यर्थः। इदं पार्श्वं शरीरस्य। कुकुन्दरं निलम्बकूपद्वयम्। विण्यं द्रव्यम्। तलमधः। धनं द्रविणम्। लवणं रसविशेषः। राष्ट्रं जनपदस्थानम्।

**क्रोडाघाटाजिह्वाशिरोधराशष्कुलीस्पृहामाया विद्धि स्त्रियाम्।**

एताः स्त्रियां विद्धि। इयं क्रोडा अङ्कः। घाटा ग्रीवा। जिह्वा रसना। शिरोधरा ग्रीवा। शष्कुली खण्डस्य भक्ष्यद्रव्यम्। स्पृहा वाञ्छा। माया जनबन्धनेच्छा।

**शाखाशिखाकलामेखलारेखाराजिपंक्तीश्च† ॥४१॥**

**‡स्नायुश्चञ्चोल्काश्च स्त्रियां सखट्वत्रेताश्च॥**

---

* अवेहि—मु० पा०. † पङ्क्तौ च—मु० पा०

‡ स्नायुश्चञ्चोल्काश्च स्त्रियां खट्वा भवेत् त्रेता—मु० पा०.

स्नायुश्चश्रद्धोल्काश्च स्त्रियां खट्वा भवेत् त्रेता ।
ताणा वाणा प्राणा विश्वाणा संकुणा च ॥४२॥

एते शब्दाः स्त्रियां भवन्ति। इयं शाखा वृक्षस्य। शिखा चूडा। कला विज्ञानम्। मेखला काञ्ची। रेखा राजिर्वनस्य। पंक्तिर्दन्तानाम्। स्नायुः शरीरस्य नाडी। श्रद्धा आदरः। उल्का आकाशोत्पातः, ज्वाला च। खट्वा शयनीयम्। त्रेता युगम्। [ताणा सूत्ररचना। वाणा वाणी। प्राणा श्रद्धा। विश्वाणा लीला। संकुणा नासिका। विकोणा नेत्रविशुद्धिः।]

भयबीजसिध्मपद्बर्हशुक्रतक्रसुखदुःखशिखराणाम् ।
विद्यान्नपुंसकत्वमसृगित्यस्य सदैव ॥४३॥

एते शब्दा नपुंसके भवन्ति। इदं भयं त्रासः। बीजमङ्कुरोत्पत्तिकारणम्। सिध्मं कुष्ठविशेषः। पदं स्थानम्। बर्हं मयूरपिच्छः। शुक्रं रेतः। तक्रं मथितम्। सुखं भोगम(?)। दुःखं पीडा। शिखरं शृङ्गम्। असृक् रक्तम्। सदैवेतिवचनाद् भयादीनां व्यभिचारः। अयं भयः।

पाषाणोपलशृङ्गारप्रस्थभृङ्गारमस्तकस्तबकाः ।
रूपं मुक्त्वा शब्दगन्धादयश्चोक्ताः* पुंसि ॥४४॥

एते शब्दाः पुंसि भवन्ति। यथा—अयं पाषाणः प्रस्तरः। उपलः शिलापाषाण एव। शृङ्गारो विदग्धता। प्रस्थः परिमाणम्। भृङ्गारः सुवर्णमयः कलशः। मस्तकः शिरः। स्तबकः पुष्पोत्करः, पुष्पनिचयम्। ध्वनिः शब्दः। रसो माधुर्यादिः। स्पर्शो मृदुकर्कशादिः। गन्धो नासिकाग्राह्यः, कुसुमादेः। रूपं नपुंसके भवति। इदं रूपं चक्षुर्ग्राह्यम्।

( क्रमशः )

* ०चोक्ता० सदा पुंसि—मु० पा०

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम्॥

| | | |
|---|---|---|
| August, 1935. | १८५७ शकीये श्रावणे<br>१८श-वर्षस्य ४र्थ-संख्या | Vol XVIII No. 4 |


## भूप्रार्थना


[ निबन्धकः—कृष्णमूर्तिः ]


अशेषभुवनावनश्रमविलोपनाय स्वपन्
यथा त्रिजगतीपतिः फणिपतेः शिरोभूषया।
अनन्यमनसा मुहुः समवलोक्यते भाग्यत-
स्तनोत्वनवधिश्रियो वसुमती दयाशेवधिः॥१॥

धराधरशतं नदीरनलसाऽम्ब! धत्से चिरं
जनांश्च वहसे बहून् यदखिलैः क्षमेतीड्यसे।
निजाङ्कशयिताः सुताः किमु भवन्ति मातुर्भरा-
स्त्वदङ्कशयितान् परं किमिति निर्घृणोपेक्षसे॥२॥

न ते जडविपश्चितोर्धनिकनिःस्वयोर्वा भिदा
समं सुकृतिभिर्जनानवसि चापि पापीयसः।
अतोऽम्ब भवतीं जगद् वदति साधु सर्वंसहां
खलानपि सुतान् प्रसूः करुणया दृशैवेक्षते॥३॥

अगैः किल समुन्नतैर्लससि पावनी पावनी-
दिशि त्वमुपलालिता बहुभिरम्ब कोम्प्रापुरे ।
अतर्कितमथापि ते चलनवेगल्प्राम्यवो
जना बत ! नृशंसया किमिति ते निगीर्णास्त्वया ॥४॥

असत्य परवञ्चनादि बहुपापदुष्टात्मनां
न निग्रहविधौ मनागपि मतिं करोषि क्षिते ।
विदूरनरवासिनः स्वजठरावनायाऽऽगतान्
क्षणेन शमनातिथीन् कृतवती कथं सज्जनान् ॥५॥

असंख्यखलवर्धनोदितभराद् यदि क्लिश्यसे
पुराणविदिना विरिञ्चिसविधे हि ते प्रार्थना ।
किमम्ब ! वचनं न ते श्रुतिपुटेऽग्रहीदब्जभूः
स्वयं दहसि यज्जनानकरुणा स्म कोम्प्रापुरे ॥६॥

विदूरविषयेषु वाष्पशकटाटनायाश्मना
महीध्रशिखराणि निर्दयमिमे विभिन्दन्त्यहो ।
नदीषु बहुसेतुबन्धनमिमेऽश्मभिः कुर्वते
इतीव कुपिताऽसि चेत् किमधुना वयं कुर्महे ॥७॥

यथा हि तरुणी व्यथेत रमणी खलं रूपिणी
तथा शरसमार्दिताऽसि जनता भिना भारतीम् ।
अनागसि जने विधेहि करुणां च विश्रम्भरे
कदापि न पुनर्जगत्त्रय वृथा कथाशंपताम् ॥८॥

---

# प्रत्नतत्त्वम्

[ निबन्धकः—स्वर्गत इन्द्रनाथवन्द्योपाध्यायः ]

प्रेरितं पत्रम् ।

मान्यवर-श्रीयुक्तपञ्चानन्दमहोदयसमीपेषु

प्रिय महोदय,

अहं तावत् पश्यामि वङ्गदेशस्य वङ्गभाषायाश्च श्रीवृद्धिसम्पादनविधौ सविशेषमेव प्रयतन्ते भवन्तः । एतदर्थमवश्यमेवार्हन्ति भवन्तः साधुवादान् । परं कस्मिन् कस्मिन् विषयविशेषे विशेषेणावधातव्यम् , तस्य निर्णये भवतां प्रमादं पश्यन् नितरां विषीदामि ।

न खलु राजनीतौ दृष्टिर्निक्षेपणीया भवता, तदर्थं बह्वः संस्थाः संस्थापिताः, यावदपेक्षितं ततोऽपि प्रभूततरं कार्यं सम्पद्यते इत्यकामेनाप्यभ्युपगन्तव्यम् । राजनीतेरान्दोलनमिदानीं विलासवस्तु इत्युक्तिरपि न वैतथ्यमावहेत् ।

धर्मार्थमपि चिन्ता नैवापेक्ष्यते । यथा तावद् धर्मस्य संख्या प्रतिदिनमेव विवर्धते तथा प्रतीयते नचिरादेव भारतवासिनः प्रत्येकमेव पृथग् धर्ममनुसर्तुं प्रभवेयुः, न खल्वेकेनापरस्य धर्मस्य संविभागोऽपेक्ष्येत ।

समाजस्य पुनश्चर्चैव मम मतेन भद्रजनेन नैव कर्तव्या । समाजे तावदेतावन्तो भिन्नप्रकृतिका जना अन्तर्भूताः, तेषु चैतावत्यो विभिन्ना प्रथाः प्रचलितास्तदर्थं चैतावन्ति जघन्यानि कर्माण्याचर्यन्ते यत् तत्र लिप्तानां भद्राणां भद्रत्वसंरक्षणं दुःसाधमेव । तथाप्याहारनिद्रादि-नैसर्गिककर्मणां समुन्नतिविधानार्थमवश्यमेव कचित् किञ्चिद् वदेयुर्भवन्तः ।

भाषायास्तावदेक एवाभावः परिलक्ष्यते, तद्वर्जमन्यत् किमपि न्यूनत्वं परीक्ष्यापि न वीक्ष्यते । तच्चाभावमधिकृत्याग्रे सविस्तरं वक्ष्यते ।

प्रथमतस्तावद् दृश्यताम् इतिहासपुस्तकान्यत्र सुप्रचुराण्येव वर्तन्ते। केवलस्य मार्शमानप्रणीतस्य भारतेतिहासस्यानुवादतात्पर्यप्रश्नोत्तरादयो न्यूनकल्पेन दशैकादशा ग्रन्थाः सन्दृश्यन्ते। स्वल्पेनैव विमर्शेन प्रतिपन्नं स्यात् भवतां यदाङ्ग्लभाषायां यावन्तीतिहासपुस्तकानि विद्यन्ते वङ्गभाषायां ततो द्वादशगुणानि सन्तीति।

काव्यस्य तु कथैव नास्ति। काव्यं साम्प्रतं मुद्रायोगेण निष्पाद्यते यन्त्रसाहाय्येन वा विनिर्मीयते। आदिरसे तावत् प्रेम प्रणयिनी विरहिणी नवपल्लवानि निशातुषाराणि; करुणे भारतं जननी निद्रा सन्तानः; बीभत्से—भस्म, रौद्ररसे—आटोपः, गर्जनम्, महाभैरवी स्तनितम्, श्मशानम्; वीरे उत्तिष्ठत जाग्रत इत्यादीनि कतिचिद्वचनानि मानमात्रेणापाद्य द्रवीभावं मुद्रायां निःक्षिप्यते चेन्निष्पद्यते काव्यम्। अत एव नात्र दैशतोऽप्यभावः।

आख्याननिर्माणार्थमपि विद्यते यन्त्रम्। आङ्ग्लभाषातो यत् किमपि यन्त्रान्तः सन्निवेश्यते चेत् सरससरसान्याख्यानानि विनिर्गच्छन्ति।

नाटकानि तु ततोऽपि प्रभूततराणि। यत्रैव द्रक्ष्यन्ति भवन्तः द्वौ वा ततोऽधिका वा पुरुषा एकत्रावस्थानेन सममेव हसन्ति वा क्रन्दन्ति वा दीर्घं वा विनिःश्वसन्ति, यथासम्भवं च परस्परवक्षःसु छुरिकां निवेश्य म्रियन्ते तत्रैव नाटकमित्यवगन्तव्यम्। आपणेषु यथा भृष्टतण्डुला वङ्गेषु तथा नाटकानि।

विज्ञानार्थनीतिनीतिशास्त्रप्रभृति किमपि न परिह्रियते। यस्य कस्यापि पल्लीविद्यालयस्य नवदशवर्षीयस्यापि तरुणतरस्य बालस्य सर्वमेतत् कण्ठस्थमेव।

अतो भाषाविषयेऽपि तादृशः प्रयत्नो नापेक्ष्यते। एकैव त्रुटिर्वर्तत इत्युक्तम्, सा च प्रत्नतत्त्वविषयिणी। यानि तावत् प्राचीनानि वृत्तानि विलुप्तप्रायतामुपगतानि तेषां समुद्धरणमेव सुतरामावश्यकम्, तदर्थं प्रयतनमेव मनुष्यत्वस्य परिचायकम्, तत्र च निरन्तरं निमज्जनं माहात्म्यस्य संसूचकम्। अहं तावत् प्रत्नतत्त्वव्यसनी।

विषयमिममधिकृत्य विरचिता मया बहुतराः प्रबन्धाः सन्नद्धा वर्तन्ते । अन्तरान्तरा तेषां संप्रपणेन भवन्तमुपकर्तुं न मे कुण्ठा । इदानीं तावदेकः प्रेष्यते, पत्रे मुद्रणेनानुग्राह्योऽयं जनः ।

श्री र० रा०

## पाँची रजकी

अशोकस्तम्भविनिर्माणात् पूर्वं वा तत उत्तरं वा प्रादुर्भूता पाँची रजकी-त्यत्र गरीयसी विप्रतिपत्तिर्विपश्चिताम्[1] । सुप्रसिद्धात् चैनिकपर्यटकाद् हुयेन्थसाङ्गोऽपि पूर्वं कामश्चनटकानिवासिनः जिनिकृपिद्दामहोदयस्य[2] भारतभ्रमणावसरे न खलु पाँची रजकी जीवितासीदिति शक्यते एवानुमातुम् । जिनिकृपिद्दामहोदयस्य तस्याः समुल्लेखो नास्तीति विस्पष्टमेवोक्तं दायोदरस्-सेकुलम्[3] महोदयेन । एतस्माच्चानुमीयते यीशुख्रीस्तस्य जन्मतोऽष्टादश-शतकतः पूर्वं व्यतीतेषु वाऽष्टादशशतकेषु[5] जीवितासीत् पाँची रजकीति । पण्डितप्रकाण्डस्य बाबरस्येदमेवाभिमतम्[6] ।

1 Vide Keith Johnston's Atlas; also Ramayana Vol. V. pp. 49-72, by J. Talboys Wheeler.

2 Vide Gulliver's Travels, A Voyage to Houyhnhums, Chap. VI. p. 199.

3 Diod. Sec. fasc. IX fol. 320 महाभाष्यम्, शङ्कराचार्यप्रणीतम्, दशमः अध्यायः, त्रयोविंशश्लोकः ।

4 Chiomikron charasso datur Jinkriska phaino mannon non etc. leaf. 2 passim.

५ वाराणसीस्थं पुस्तकम्, द्राविडदेशस्थमूर्तये स्वामिनो हस्तलिखितो ग्रन्थः । Schlegel-मुद्रितं *Greek Recension*, *Ryehouse Plot* by Titus Oates—एतेषां पुस्तकानां पर्यालोचनयाऽपि न प्राभावि मया पाठान्तराणां संवादेन यथार्थं तत्त्वं प्रादुष्कर्तुम् । कस्मिंश्चित् पुस्तके 'पृथक' इति, अन्यत्र, 'पुर' इति अपरत्र 'पर' इति पाठ उपलभ्यते ।

6 Barbeu's *Aini-i-Akberi*, *Asiatic Recherche* vol. IX no. 1 passim.

परमार्थत एव पांचीरजकी नाम कोऽप्यासीन्न वेत्यत्रैव संशेरते बहवः। नामेदं पौराणिककल्पनाप्रसूतमित्याशेरते फतहुमखोल्डमहाभागाः[7]। यद्यपि मात्स्यपुराणे[8] पांचीरजकाख्या नामोपलभ्यते तथापि तत्र पांची रजकी स्त्रीत्युपवर्णिता, परं भारतवर्षस्य प्रधाननगरीषु पांचीरजकीनाम्ना स्थानस्य निर्देशो दृश्यते[9]। भारतवर्षस्य प्रधानां पर्यालोचनेनावश्यमेवाभ्युपगन्तव्यं न खलु स्त्रिया नाम्न ईदृशं प्रकाशनं सम्भवतीति। किञ्च भारतीयासु स्त्रीषु कापि कदाप्यनूढा नासीत्। पांचीधोपान्या विगतभर्तृकत्वमपि नानुमातुं शक्यते, तथात्वे तस्याः पांची धोपान्या इति नामप्रसङ्गात्। अद्यापि बङ्गेषु विधवानाममुकदेव्या अमुकदास्या इत्यादिषु नामसु प्रमाणमुपलभ्यते।

अत्र च प्रत्यवतिष्ठते [10]फ्रेडेरिक पेलिति महोदयः। तथाहि तन्मतेन महाभारतात् पूर्ववर्तिनि काले स्त्रीणां सर्वथा स्वातन्त्र्यमेवासीदित्येतस्य प्रत्यायकानि सुबहूनि कारणानि विद्यन्ते। अन्यथा स्वैरिणीस्वाधीनभर्तृकादिपदानामानर्थक्यं प्रसज्येत। वस्तुतस्तु पांचीधोपानी मादृशमतीया एव, अत एव तस्या उपाधेः परिवर्तनं न सञ्जातम्। विशेषतश्च धोपानीशब्दस्य

7 Hladden ver gottzginjen moller grahlerlunzig trunstopkter. An Liandder vrost mutod utan sultra och dhe j phos pho.. *Tandlucker Hohenzollern*, p. 99.

८ पांची प्रधानमतो ब्रह्मणो निर्माणपतुराणिकाशेत''—मात्स्यपुराणम् १०-अ-पद्मम १३-सूक्तम्। अपि च—

पञ्चिका पञ्चिका भेतामथो वाताधभांखका।

शारदा क्रौञ्चमालाभि नर्मदा पिण्डवासिनं ॥ ऋग्वेद। दशाग्रजमम् ब्राह्मणम्।

९ यथा कलिकातानगर्यां पांचीधोपानीरथ्या।

10 Sezoine Italien in dieiy Frederico Polity "Ecosa standy vel pruchere chi mon fun forado e mulatto par suza in etc. pp. 33-7.

(a) Cum cogiture nos interprationis Selucoe adhuc sunt smilibaris tam tandro mutando non alientibur parlos ; si dicunt inter rationes suum. Don Giovanni Ecloga novum. (b) Ass. Res. Bom. 99 MS. (c) M. Bardelot : Une marionette per fenetre jailignolles. Oenbres o.

प्रयोगो न खलु तस्या आर्यविधवावैपरीत्यं गमयितुमलम्। प्रतिपादितं हि प्रमाणबलेनाध्यापकमोक्षमूलरभट्टेन मित्रेत्युपनाम ब्राह्मणानामपि सम्भवतीति।

यथा तथा वा भवतु पाँचीरजक्यासीदिति निःसंशयम्[11]। परं सोऽयं पुरुषो[12] वासीद् योषिद्वेति दुःशकमेव निर्णेतुम्, भूयान् हि कालो व्यतिगतस्तस्य मृतस्येति। दृश्यन्ते हि बहवः पुरुषा ये स्त्रिय इति प्रतीयन्ते, दृश्यन्ते च बह्वो योषितो[13] या मुण्डितश्मश्रुज्येष्ठपितृवत् आभासन्ते। पाँचीरजकीभारवहनसमर्था योग्यतरा एव मनीषिणोऽत्र प्रमाणम्।

पाँचीरजकीगतानि विषयान्तराणि कालान्तरे आलोचयिष्यन्ते।

श्रीर. रा.

११ शिशुबोधकम्। श्रीअरुणोदयविश्वास एण्ड को० मुद्रितम् प्रकाशितञ्च। ३२७ संख्यकभवनम्, बटतला। अत्र चैतद्विष्यते सर्वं विश्वायेनेति। मूल्यं सार्द्धं रूप्यकमात्रम्।

१२ न स्त्री स्वातन्त्र्यमर्हति—मनु० १०।१३, अपि च

स्त्रियाश्चरित्रं पुरुषस्य भाग्यं देवा न जानन्ति कुतो मनुष्याः॥ विवादताण्डव ५।१७

१३ सर्वत्र यथा Amateur Theatrical Company, dassim.

# महाकविमांघः

[ निबन्धकः—श्रीकालीपदभट्टाचार्यः काव्यतीर्थः ]

यत्कारुण्यसुधारसस्य कणिकां तापत्रयोच्छेदिनीं
स्वादं स्वादमशेषदुःखजलधिं लोकास्तरन्ति क्षणात् ।
नित्यं कल्पलतेव या सुतगणायेष्टं महद् यच्छति
तां वाणीं करुणामृताब्धिनिलयां वन्दे जगन्मातरम् ॥

जयन्ति ते भारतवर्षीया महाकवयः, येषां रसवत्कवितारसनिषेवणेन सर्वदेशीयाः साहित्यरसनिष्णाता विबुधाग्रगण्या मानवाः प्रतिदिनमेव विस्मयरसे निमज्जन्ति, मुक्तकण्ठं प्रशंसन्ति च। येषामसीमधीशक्तिशालिनां कल्पनाचातुर्येण विद्वज्जनमानसमुल्लासयतां महाकवीनां निबन्धाः पदे पदे पाठकानां मनसि नवीनं कमपि भावमाविष्कुर्वन्ति, हृदयभूमिञ्च कवितापीयूषधारया समभिषिञ्चन्ति, येषां व्यासवाल्मीकिकालिदासप्रमुखाणां महाकवीनां ग्रन्थानधिकृत्य अद्याप्यनेके विपश्चितो बहूनि अतीन्द्रियाण्यपि वस्तूनि मानसनेत्रेणावलोकयन्तः परोक्षमपरोक्षमिव वर्णयन्तो महान्तं विस्मयमुत्पादयन्ति ।

येषां निबन्धसमालोचनेनाद्यापि बहवो विद्वांसो नानाविधानि तथ्यानि समुद्भावयन्तोऽपि न तेषां पारमधिगच्छन्ति । येषां काव्यरसस्रोतस्वती अधुनापि जननीव स्तन्यधारया भारतभुवं सञ्जीवयति, ते च कीदृशाः प्रतिभावन्त आसंस्तद् वयं कल्पयितुमप्यनीशाः । यस्मिंश्च देशे एतादृशा महाकवयः प्रादुरभवन् , तत्र महाकविमाघो जात इत्यत्र न किमप्यस्ति विस्मयकारणम् ।

( कविसमयनिरूपणम् )

महाकविरयं जन्मना कं देशमलमकार्षीत्, कस्मिन् समये च प्रादुर्बभूवेति दुरनुमेयम् एव नियतमनुसन्धानपरैरप्याधुनिकैः पण्डितवर्यैः । प्रायश एव

एतद्देशीया महाकवयः स्ववंशगौरवप्रख्यापने आत्मनः स्थिति-काल-निरूपणे च उदासीना एवासन्। अस्मिन् विषये महाकविः कालिदास एव प्रकृष्टमुदाहरणम्। प्रथमतो माघप्रणीते शिशुपालवधनाम्नि अस्मत्-समालोचनीये ग्रन्थे यादृशस्तस्य परिचयो लभ्यते तं विवृणोमि।

श्रीवर्मलाभिधेयस्य नरपतेर्निखिलकर्मस्थानाधिकृतो बहुगुणालङ्कृतः सुप्रभदेव-नामा कश्चन पण्डित आसीत्। महीपतिर्वर्मलस्तस्य सुप्रभ-देवस्याऽऽदेशेन सर्वाणि कार्याणि अन्वतिष्ठत्।

तस्य सुप्रभदेवस्य तनयो दत्तको युधिष्ठिर इव धर्मनिरत आसीत्। स सर्वेषामाश्रयभूत आसीदतः स सर्वाश्रय इति नाम्नाऽपि प्रसिद्धिमलभत। सर्वाश्रयापरनाम्नो दत्तकस्य पुत्रो माघः काव्यमिदं शिशुपालवधं नाम प्राणैषीत्। काव्यावसाने स्वपरिचयदानमुद्दिश्य वर्णितानां श्लोकानामन्ते कश्चन श्लोको विद्यते। यथा—

श्रीशब्दरम्यकृतसर्गसमाप्तिलक्ष्म
लक्ष्मीपतेश्चरितकीर्त्तनमात्रचारु।
तस्याऽऽत्मजः सुकविकीर्त्तिदुराशयाऽदः
काव्यं व्यधत्त शिशुपालवधाभिधानम्॥

अत्र श्लोके सुकविकीर्त्तिदुराशया इत्यस्य व्याख्यायां टीकाकृता वल्लभ-देवेनैवं व्याख्यातम्। यथा—

"सुकवीनां श्रेष्ठविदुषां वररुचि-सुबन्धु-सोमनाथ-भवभूति-क्रीडाचन्द्र-कालिदास-विह्लण-भारवि-बाण-मयूरादीनां या कीर्त्तिः ख्यातिर्यशस्तत्र या दुराशा दुरभिलाषस्तया महाकविकीर्त्तिलिप्सया इत्यर्थः" इति। एतेन व्याख्या-नेन एतेभ्यः कविभ्यो विशेषतो भारवेः परवर्त्तित्वञ्चास्य स्थिरीकृतं भवति। "उदिते नैषधे काव्ये क्व माघः क्व च भारविः" एतेन चास्य श्रीहर्षादपि पर-वर्त्तित्वं(?) सूचितं भवति। महाकविना शार्ङ्गधरेण विरचितायां शार्ङ्गधर-पद्धतौ सुकविप्रशंसनाध्याये—

राजशेखरविरचितायां सूक्तिमुक्तावल्याम्—

अपरञ्च—तावद्भा भारवेर्भाति यावन्माघस्य नोदयः।

उदिते नैषधे काव्ये क्व माघः क्व च भारविः॥

अन्यच्च—"नवसर्गगते माघे नवशब्दो न विद्यते" इति।

"काव्येषु माघः कविकालिदासः" इति च कस्यापि प्रथततरा सूक्तिः।

महाकविरयं गुर्जरप्रदेशमलङ्कृतवान् इति प्रत्नतत्त्वविदः समामनन्ति। अनेन विरचिते शिशुपालवधाख्ये काव्ये रैवतकपर्वतवर्णनं विद्यते। स च रैवतको गुर्जरदेशसमीपवर्त्ती। अधीते रैवतकवर्णने एवं प्रतीयते यत् कवे रैवतकपर्वतेन सह बहुशः संयोग आसीदिति।

चतुर्थसर्गे—"उदयति विततोर्ध्वरश्मिरज्जा-

वहिमरुचौ हिमधाम्नि याति चास्तम्।

वहति गिरिरयं विलम्बिघण्टा-

द्वयपरिवारितवारणेन्द्रलीलाम्॥"

इति श्लोकमिमं विरचयन् कविः "घण्टामाघ" इति ख्यातिं लेभे इति श्लोकस्यास्य व्याख्यायां वल्लभदेवेनोक्तम्।

केचन माघस्थितिसमयनिरूपणे व्यापृता भोजप्रबन्धे बल्लालकविकृतेन माघस्य भोजराजाश्रयप्राप्तिवर्णनेन माघम् एकादशशताब्दीसमुद्भूतस्य भोजस्य समकालीनमुदाहरन्ति। परं बल्लालेन कालिदासप्रभृतीनां सर्वेषां भोजराजाश्रयप्राप्तजीविकत्वं वर्णयता वर्णनमात्रकौतुकितया सर्वे विद्वांसः समकालीनतां प्रापिताः, अतस्तत्तत्कविसमयनिर्णयविषये भोजप्रबन्धो न प्रामाण्यमधिगच्छति।—एवं प्रबन्धचिन्तामणौ, प्रभावकचरिते च माघस्य भोजराजाश्रितत्वं वर्णितमस्ति।

अन्ये च विद्वांसः—अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना।

शब्दविद्येव नो भाति राजनीतिरपस्पशा॥

इत्यादिश्लोके न्यासग्रन्थस्य नामोल्लेखात् न्यासप्रणेतुर्जिनेन्द्रबुद्धेराधु-

निकोऽयं कविरिति निर्णयन्ति। तदपि न समीचीनतया प्रतिभाति, यतो जिनेन्द्रबुद्धेरन्योऽपि तत्पूर्वं न्यासकर्त्तासीदिति।

अन्यत्र च एतदपि —

"इदन्तु निर्विवादं शक्यते वक्तुं काश्मीरेषु पञ्चपञ्चाशदधिकाष्टशततमात् त्र्यशीत्यधिकाष्टशततमं यावद् राज्यं शासतः अवन्तिवर्मभूपतेः समये विद्यमानेन ख्रीष्टीयनवमशताब्द्यां जातेन श्रीमदानन्दवर्द्धनाचार्येण निर्मिते ध्वन्यालोकग्रन्थे माघश्लोकोपलब्धेर्माघः नवमशताब्दीतः पूर्ववर्त्तीति प्रतीयते। (१) अपरञ्च, माघस्य पितामहः सुप्रभदेवो वर्मलनामधेयस्य महीपतेः सभायां पण्डित आसीत्। तस्य वर्मलनरपतेः शिलालेखः कश्चन त्र्यशीत्यधिकषट्शतसमपरिमितवैक्रमाब्दीयः साम्प्रतमाधुनिकैरन्वेषकैरधिगतः। स च शिलालेखो वसन्तगढनगरे तैः प्राप्तः। एतेन शिलालेखेन त्र्यशीत्यधिकषट्शततमसमिते वैक्रमेऽब्दे पञ्चविंशत्यधिकषट्शततमे च ख्रीष्टाब्दे वर्तमानस्य समयस्तावत् सप्तमं शतकमित्यत्र न कोऽपि सन्देह एव। एवञ्च पितामहस्य सुप्रभदेवस्य समये स्थिरीकृते पितामहस्थितिकालात् पौत्रस्थितिकालेन हितेन स्वल्पसमय-व्यवधानमिति सप्तमशतकस्यान्ते अष्टमशतकस्यारम्भे वा माघकविरासीदिति निःसन्देहमेव वक्तुं शक्यते।

अन्यत्र भुवनचन्द्रवसाक-महोदयेन मुद्रापिते माघे कविवंशवर्णन-श्लोके "सुप्रभदेवः" श्रीधर्मनाभस्य नरपतेर्मन्त्री आसीदिति ज्ञायते। एतेन महान् संशयः समुत्पद्यते, यतः श्रीधर्मनाभः कस्मिन् काले कस्य देशस्याधिपतिरासीदिति दुरनुमेयम् एव। काव्यप्रकाशकारो मम्मटभट्टः

(१) आनन्दवर्धनकृतस्य ध्वन्यालोकस्य द्वितीयोद्द्योते—

त्रासाकुलः परिपतन् परितो निकेतान्
पुम्भिर्न कैश्चिदपि धन्विभिरन्वबन्धि।
तस्थौ तथापि न मृगः क्वचिदङ्गनाभि-
राकर्णपूर्णनयनेषु हतेक्षणश्रीः॥ ५।२६

रम्या इति प्राप्तवतीः पताका रागं विविक्ता इति वर्धयन्तीः।
यस्यामसेवन्त नमद्वलीकाः समं वधूभिर्वलभीर्युवानः॥ ३।५३

एतद् पद्यद्वयं शिशुपालवधादुद्धृतवान्।

एकादशशताब्द्यां स्थित इति कैश्चिन्निर्णीतम्। तत्प्रणीते काव्यप्रकाशे च माघस्य श्लोको विद्यते। अतो माघो मम्मटभट्टात् पूर्ववर्ती।

अन्यत्र कस्मिंश्चिन् पुस्तके एवमस्ति—

"अलङ्कारशास्त्रविद् वामनस्तस्य "काव्यालङ्कारसूत्रवृत्तौ" "कुथेन नागेन्द्र-मिवेन्द्रवाहनम्"· 'गिरेस्तडित्वानिव तावदुच्चकैर्जवेन पीठादुदतिष्ठदच्युतः"।

"सितं सितिम्ना सुतरां मुनेर्वपु-
　　विसारिभिः सौधमिवाथ लम्भयन्।
द्विजावलिव्याजनिशाकरांशुभिः
　　शुचिस्मितां वाचमवोचदच्युतः ॥"

"मुखेन त्रिलोचनः" इत्यादीनि पद्यानि शिशुपालवधादुदाहृतवान्। वामनः अष्टमशताब्द्यां प्रादुर्भूतः माघश्च सप्तमशतकस्यान्ते तस्य काव्यं विरचितवान्। अत एवमनुमीयते माघो भवभूतेः समकालीन आसीदिति।"

एतेषु प्रमाणेषु किं दृढतमं प्रमाणमिति विद्वांस एव विचारयिष्यन्ति। मया तु केवलं विदुषां समीपे समुपस्थापितम्। शिशुपालवधस्य टीकोपक्रमणिकायां टीकाकारो मल्लिनाथ एवमाह प्रशंसावचनम्—

नेताऽस्मिन् यदुनन्दनः स भगवान् वीरः प्रधानो रसः
　　शृङ्गारादिभिरङ्गवान् विजयते पूर्णा पुनर्वर्णना।
इन्द्रप्रस्थगमाद्युपायविषयश्चैद्यावसादः फलं
　　धन्यो माघकविर्वयन्तु कृतिनस्तत्सूक्तिसंसेवनात् ॥

निखिलशास्त्रतत्त्वज्ञो महाकविरयं माघः शिशुपालवधं नाम किमप्यपूर्वं काव्यं विरचितवान्। यद्यपि कविनाऽनेनान्यत् किमपि काव्यं न प्रणीतं तथापि एकेनैव काव्येन महाकविरयं भूयसीं कीर्त्तिं लेभे। परन्तु शिशुपालवधं विना कवेरस्य श्लोकास्त्रयः समुपलभ्यन्ते—

"बुभुक्षितैर्व्याकरणं न भुज्यते
पिपासितैः काव्यरसो न पीयते ।
न विद्यया केनचिदुद्धृतं कुलं
हिरण्यमेवार्जय निष्फलाः कलाः ॥"

पद्यमिदं क्षेमेन्द्रेण औचित्यविचारचर्चायां समुद्धृतं माघनाम्ना ।

सुभाषितावलौ वल्लभदेवश्च—

"शीलं शैलतटात् पतत्वभिजनः सन्दह्यतां वह्निना
माश्रौषं जगति श्रुतस्य विफलक्लेशस्य नामाप्यहम् ।
शौर्ये वैरिणि वज्रमाशु निपतत्वर्थोऽस्तु मे सर्वदा
येनैकेन विना गुणास्तृणलवप्रायाः समस्ता अमी ॥
नारीनितम्बफलके परिबध्यमाना
हंसीव हेमरशना मधुरं ररास ।
तन्मोचनार्थमिव नूपुरराजहंसा-
श्चक्रन्दुरार्त्तमुखरं चरणावलग्नाः ॥"

इति पद्यद्वयं माघनाम्ना समुद्धृतवान् । अतश्च कश्चिदन्योऽपि ग्रन्थो माघेन निर्मित आसीदित्यनुमीयते ।

बहुषु समालोचनाग्रन्थेषु माघस्य नामदर्शनाद् एकस्मिन् काले काव्य-जगति तस्य महती प्रतिपत्तिरासीदिति ज्ञायते । तथाहि प्रबन्धकोषे, प्रबन्ध-चिन्तामणौ, प्रभावकचरिते, भोजप्रबन्धे, शार्ङ्गधरपद्धतौ सूक्तिमुक्तावल्यां च माघस्य नाम विद्यते । सोऽयं शिशुपालवधप्रणेता माघः यस्य काव्य-सुधां निपीय सर्व एव सुधियः कवितारसनिष्णाता भवन्ति यस्मिंश्च काव्ये सर्व एव रसाः परं प्रावीण्यमुपगता विदुषां मानसे मानससरोवरे हंसा इव क्रीडामागता महान्तं हर्षतरङ्गं समुत्पादयन्ति । यस्य च काव्यं सदुपदेश-मिच्छते जनायोपदेशम्, काव्यरसपिपासवे सर्वान् रसान्, राजनीतिजिज्ञासवे नीतिज्ञानञ्च प्रयच्छति । यस्मिंश्च काव्ये भगवतः श्रीकृष्णस्य अनन्तं महिमानमुपवर्णयन् कविरयं महान्ति यशांसि समुपार्जितवान् । बहूनि

काव्यानि विरचयन्तोऽपि कवयो यशो न लेभिरे, महाकविरयं पुनरेकमेव काव्यं प्रणयन् अपरेषां महाकवीनां यशांसि निराकृतवान्। एवं सकल-सौन्दर्यवर्णनासमुपचितमिदं काव्यं कविकुलचूडामणेराधिपत्यं काव्यजगति प्रकाशयत्यनन्यसाधारणम्।

( भारवेः पूर्ववर्त्तित्वम् )

महाकविरयं माघात् पूर्वं प्रादुर्भूत इति मतं समीचीनतया प्रतिभाति। "तावद्भा भारवेर्भाति यावन्माघस्य नोदय" इत्यादिश्लोक एव तस्य प्रमाणम्। भारविकृतेन किरातार्जुनीयकाव्येन सह शिशुपालवधस्य महत् सौसादृश्यं वर्त्तते। महाकविरयं किरातार्जुनीयम् अनुकृत्यैव काव्यमिदं प्रणिनाय इति सम्भाव्यते। भारविर्ग्रन्थोपक्रमे श्रिय इति पदं प्रयुज्य यथा मङ्गलाचरणं कृतवान् तथा माघोऽपि। किरातार्जुनीयस्य सर्गावसानश्लोको लक्ष्मीशब्दाङ्कितः, अस्य चान्तिमः श्लोकः श्रीशब्दाङ्कितः। एवं बहुषु स्थलेषु सादृश्यमनुभूयते।

कविरयं स्वेनैव नाम्ना काव्यस्य नाम प्रणीतवान्। "कवेर्वृत्तस्य वा नाम्ना नायकस्येनरस्य वा" इत्यादिविधानात्। काव्येऽस्मिन् साहित्यदर्पणकृता विहितानि महाकाव्यस्य "सर्गबन्धो महाकाव्य"-मित्यादीनि सर्वाण्येव लक्षणानि घटन्ते। अत्र शिशुपालवधाख्ये काव्ये नायकः पवित्रयदुवंशोद्भवः श्रीकृष्णो धीरोदात्तः। तस्य लक्षणमाह विश्वनाथः—

अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः।
स्थेयान्निगूढमानो धीरोदात्तो दृढव्रतः कथितः॥

जगदीश्वरे श्रीकृष्णे सर्वं एवैतेगुणा विशेषेण वर्त्तन्ते। श्रीकृष्णः कदाचिदपि आत्मनोऽहङ्कारं न प्रकटितवान्। भृशमुत्पीडितः सन्नपि दुर्विनीतेन शिशुपालेन स्वकीयमसाधारणं धैर्यं रक्षितवान्। गाम्भीर्येण समुद्रादपि महत्तरः श्रीकृष्णः शतापराधक्षमारूपामात्मनः प्रतिज्ञां न मात्सर्योपहतचित्तः शिशुपालो यथा कठोरया गिरा सर्वेषां

समीपे तं निनिन्द, धैर्यमनुत्सार्य तदिदानीमधिचरित्रेन चेतसा तत् सर्वं सहमानः श्रीकृष्णः स्वं महिमानमुद्भावयन् । परमेश्वरमपि श्रीकृष्णं मनुष्यरूपेणावर्णयत् कविः । नारदभीष्मादयस्तं भगवन्तमेव मेनिरे । किन्तु श्रीकृष्णो मनुष्यरूपेणावतीर्य मानुषाणां किं तावत् कर्तव्यं तदेव प्रदर्शितवान् । नो चेत् सङ्कल्पमात्रेणैव स शिशुपालं हन्तुं समर्थः । श्रीकृष्णः शिशुपालस्य पितृस्वसुः समीपे "सहिष्ये शतमागांसि सूनोस्त" इति प्रतिश्रुतवान् । भगवतः प्रतिच्छन्दकोऽसावलौकिकगुणाधार एवासीत् । सत्सु येषु गुणेषु लोकेषु जनानामादरो जायते ते सर्वे गुणा विशेषेण श्रीकृष्णे विद्यमाना आसन् । "निगूढमानः" -विनयप्रच्छन्नगर्वः । यद्यपि स्वशक्तिबलेन सर्वं कर्तुं प्रभवति तथापि लौकिकरीत्या गुरुजनसन्निधौ सर्वं कृत्यजातं विज्ञायानुतिष्ठेदिति शिष्टाचारपरिशुद्धमनीषां विदुषा माशयं मनसि विचार्य उद्धवबलरामयोः समीपमागत्य विनयेन पप्रच्छ । यदा च महर्षिर्नारदः श्रीकृष्णस्य समीपमजगाम जगत्प्रभुरपि भगवांस्तदा तस्य मुनेर्यादृशीमतिथियोग्यामभिवन्दनामाचचार, तेनाऽऽचरणेनास्माकं महान् विस्मयो जायते । केन प्रकारेणातिथयः पूजनीया तत् तस्य व्यवहारेणैव प्रकटितम् । यदा च युधिष्ठिरः श्रीकृष्णायार्घ्यं ददौ तदाऽवमानकलुषितचेताः शिशुपालः श्रीकृष्णं बहुधा भर्त्सयामास । तैरपि दुर्वचोभिस्तस्य मनसि कोऽपि विकारो न सञ्जातः । एवं समुत्तीर्णप्रतिज्ञश्च श्रीकृष्णः शिशुपालं युधि निजघान । काव्येऽस्मिन् महाकविर्यादृशं नायकमुपस्थापितवान् अन्यत्र काव्ये एतादृग्गुणमण्डितो नायको नैव लक्ष्यते । नायकस्यास्य चरितं सर्वैरनुकरणीयम् । तथाच उद्धवबलरामौ नायकस्य सहायौ, उद्धवः श्रीकृष्णस्य पितृव्यः, बलरामश्च ज्येष्ठभ्राता ; उभावेव तस्य गुरुवत् पूजनीयौ इति विचिन्त्य तयोर्वाक्येनैव स सर्वमनुष्ठितवान् । युवजनोचितशौर्यादिगुणमण्डितस्य बलरामस्य युद्धे मतिरासीत् । विचक्षणो धीशक्तिसम्पन्नो राजनीतिज्ञ उद्धवस्तु तस्यैतावन्मननस्य साफल्यमवलोकयन् विहस्याब्रवीत् । भद्र सततमस्थिरमनसां जनानां मतिः

कस्मिन्नपि कर्मणि सिद्धिं न लभते, तस्मान्ममापि वाक्यमाकर्ण्य तद् यदि युक्तिभिरूपेतं स्यात् तर्हि तदुचितं पन्थानमनुसर। राजसूययज्ञसमये निमन्त्रितान् युष्मान् तत्रोपस्थितान् विलोक्य श्रीकृष्णञ्चार्घ्यभाजं दृष्ट्वा शिशुपालो युष्मभ्यं कोपिष्यति। तेन सह कलह एव तस्य वधोपायः। कविर्द्वितीयसर्गे उद्धवबलरामयोः परिचयं विशेषेण ददौ। राजनीतिविषयमवलम्ब्यास्मिन् सर्गे गूढानि रहस्यानि प्रकटितानि। यद्यपि सर्गोऽयं दुःश्रवत्वादिदोषेण दुष्टो दुर्बोधश्च तथापि विषयगौरवेण मनोरम एव।

प्रतिनायकश्चात्र शिशुपालः। प्रतिनायकस्य लक्षणञ्च साहित्यदर्पणे "धीरोद्धतः पापकारी व्यसनी प्रतिनायक" इति। दुराचारस्य शिशुपालस्य पूर्वजन्मवृत्तान्तं कविः प्रथमसर्ग एव वर्णितवान्। अयञ्च दुर्वृत्तः शिशुपालः सर्वस्मिन्नेव जन्मनि भगवद्विद्वेषी बभूव। ईदृशः प्रतिनायकोऽन्यत्र काव्ये न लक्ष्यते। भारवौ यः प्रतिनायको विहितः स तु किरातरूपी महादेवः। न तु तस्य ईदृशप्रतिनायकत्वं सम्भवति।

( शिशुपालचरितम् )

पुरा हिरण्यकशिपुनामा कश्चन देवध्रुग् दैत्याधिपतिरासीत्। तस्य तनयः प्रह्लादो भगवदर्पितहृदयो नियतं कृष्णनामानुकीर्त्तने रत आसीत्। पुत्रस्य परमेश्वरे परामनुरक्तिं पश्यन् क्षुभितचित्तो हिरण्यकशिपुः सततमुत्पीडयामास प्रह्लादम्। तदा करुणापरवशो हृषीकेशो भक्तस्य रक्षणाय नरसिंहरूपेणावतीर्य दानववरिष्ठं हिरण्यकशिपुं जघान। स एव हिरण्यकशिपुः परस्मिन् जन्मनि रावणनाम्ना जन्म परिजग्राह। स च तपोबलेन नरवानरवर्जमन्येषामजेयो भूत्वा देवानत्यर्थमुद्वेजयामास। तदापि भगवान् रामरूपेण नरपतेर्दशरथस्य गेहेऽवतीर्य रावणमवधीत्। पुनरपि स एव रावणः शिशुपालसंज्ञया समाख्यातो दर्पोद्धतमानसः श्रीकृष्णेन सह वैरमाचचार। अयञ्च दमघोषस्य पुत्रस्त्र्यक्षश्चतुर्भुजश्च। अयं जन्मकाले रासभसदृशमारावं कृतवान्।

चेदिराजकुले जातस्त्र्यक्ष एष चतुर्भुजः।
रासभारावसदृशं रुराव च ननाद च॥ महा० सभा०

# मेघनादवधम्

पञ्चदशः सर्गः

[ निबन्धकः—श्रीनित्यगोपालविद्याविनोदः ]

नाकः सहास उडुभिर्निशि देवधामा
शक्रस्तु कानर अमुप्रगुरात्मसौधे ।
पौष्पं विहाय शयनं कनकासनञ्च
तूष्णीं स्थितः सुरगणश्च जगाम निद्राम् ॥१॥
देवी सुरेशगृहिणी समुवाच मानाद्
दास्यास्तवाङ्घ्रि कमले घटितो नु दोषः ।
नायासि केन शयनालयमद्य देव
पश्य प्रियाप्सरस ईक्षणमुक्तनिद्राः ॥२॥
भीता विराम-जनिका नहि याति निद्रा
नाथान्तिकं तव भयं न कुतोऽस्ति तस्याः ।
जागर्त्ति कः कथय कुत्र निशीथकाले
दैत्या निरुन्धत इहाथ दिवः प्रवेशम् ॥३॥
हर्यश्व आह दयिते परिचिन्तयामि
शूरं दशाननसुतं नहि जय्यमन्यैः ।
सौमित्रिराजिशिरसि प्रहणिष्यतीमं
केनाथ वा विधिविधानमवश्यभाव्यम् ॥४॥
इन्द्राण्युवाच दयित त्वमवाप उग्रं
शस्त्रं यदीयबलतो न्यवधीद् विशाखः ।
दुर्दान्ततारकमसंख्यसुरारिसंघं
भाग्येन ते पशुपतिश्च सहाय आस्ते ॥५॥

दुर्गा स्वयं समवदन्मयि सुप्रसन्ना
सम्पूजिता तव भवेत् सफला समीहा ।
माया वदिष्यति विधिं सुकरं वधस्य
तन् केन वल्लभ वृथा समुपैपि चिन्ताम् ॥६॥
इन्द्रोऽवदत् सुनयने वचनं त्वयोक्तं
सत्यं तदस्त्रमखिलं रिपुराजधान्याम् ।
संप्रेषितं वद कथं तुमुले तु युद्धे
माया च लक्ष्मणमिमं परिरक्षिता वा ॥७॥
सौमित्रिशौर्यमतुलं विदितं ममैव
किन्त्वत्र सिंहविजयी द्विरदः श्रुतः किम् ।
वज्रध्वनिं घननिनादमिरम्मदञ्च
संश्रृण्वतोऽपि हृदयं मम वेपतेऽत्र ॥८॥
देवीन्द्रजिद् युधि रुपाऽनलकल्पबाणां-
श्चापे निधाय कुरुते यदि सिंहनादम् ।
ऐरावतोऽपि मम याति भयं बलीयो
वीरः क एव समरे पुरतोऽस्य तिष्ठेत् ॥९॥
खिन्नः समास्त मघवा गुरुदुःखमौनी
देवेश्वरी च निकषाऽमुदिताऽलमास्त ।
रम्भादयोऽपि परितोऽसुखिताः समासन्-
ज्योत्स्नेव मुद्रितदलं नलिनञ्च रात्र्याम् ॥१०॥
किं वाऽम्बिकासनतले शरदुत्सवाहे
दीपावलीव मुदिता मनुजा भवन्ति ।
वङ्गेषु दुर्लभशुभागमनां भवेशीं
लब्ध्वा तदा समगमच्च वरेण्यमाया ॥११॥
देवालये मणिविभा द्विगुणा बभूव
मन्दारहेमसुषमा रविभानुदीप्ता ।

प्राप्नोति वृद्धिमतुलामिव हृष्टचित्ता-
विन्द्रः शची च नमतः स्म पदेऽतिभक्त्या ॥१२॥
कृत्वाशिषः सुकनकासन आस्त माया
पप्रच्छ देव-मघवा प्रकृताञ्जलिस्ताम् ।
किं वाञ्छसीह कृपया वद किङ्कराय
प्रत्याह सा च दशशीर्षपुरं व्रजन्ती ॥१३॥
पूर्णं भविष्यति तवेप्सितमल्पकालाद्
दुर्वृत्तरावणमहं यमसद्म नेष्ये ।
पश्याङ्क दुःखरजनी भवति प्रभाता
स्मेरानना परिपतत्युदयाद्रिभूपा ॥१४॥
लङ्कारविन्दमिहिरोऽस्तगिरिं प्रयाता
सौमित्रिमिष्टिभवनं गमयामि नूनम् ।
मायाभिरस्तपनृपं निहतं विधास्ये
निःशस्त्रदुर्बलरिपुर्निधनं हि यायात् ॥१५॥
जालान्तरे हरिरिवाशु निपातमेता
युद्धेऽभ्रवाहनजयी न विधिर्निवार्यः ।
वार्त्ता यदाशरनृपश्रुतिमेष्यतीयं
संत्रास्यसे रघुवरं वद शक्र केन ॥१६॥
रामानुजं रघुसखाऽथ विभीषणेन
सार्द्धं शुगर्त्तिविकलाद् दशकन्धराद् वा ।
वीरोत्तमाद् यमनिभादतिभीमबाहो
रक्षिष्यसीन्द्र समरे तुमुले कथं वा ॥१७॥
प्रत्यब्रवीच्छतवितानशचीविनोदो
देवीन्द्रजिच्छरहतो यदि लक्ष्मणः स्यात् ।
संग्रामभूमिमनुविश्य सुपर्वसैन्यैः
संत्रास्यते स हि मया त्वदनुग्रहाच्छुः ॥१८॥

भीतिं न यामि नृपते रजनीचराणां
मातस्त्वदङ्घ्रि-कमलाश्रितकिङ्करोऽस्मि ।
जालं वितत्य नव कापटमाशु हिन्धि
दुर्दान्तरावणिममुं त्वरितं महेशि ॥१९॥
रामः परप्रिय प्रभुप्रवरस्य मातः
प्राणान् विहातुमपि देवगणास्तदर्थम् ।
युक्ता युधि स्वयमहञ्च भुवं प्रगम्य
धक्ष्यामि कर्बुरमिरम्मदवर्षणेन ॥२०॥
वज्रिंस्तवेदमुचितं सकलं हि कर्म
मायाऽब्रवीत्तव गिरि प्रमुदं लभेऽहम् ।
आज्ञां विधेहि बलभिन् समुपैमि लङ्का-
मुक्त्वेत्यगात कृतशुभोक्तिरसौ महेशी ॥२१॥
निद्रास्ततः सुरपतिर्धृतपाणिपद्मः
शच्याः स्वसुप्तिभवनं प्रविवेश रम्यम् ।
रम्भादिदेवललनास्त्वरितं विमुच्य
काञ्चनादिमण्डनमगुः कुसुमाढ्यशय्याम् ॥२२॥
वायुर्ववौ सुरभितो विधुवक्त्रबिम्बे
किं वाऽलकेषु कुचयोर्विलसन मनोज्ञम् ।
फुल्लप्रसूननिचये विपिने यथाऽलिः
क्रीडन्नतीव रुचिरं मधुपानमत्तः ॥२३॥
मायेश्वरी गतवती कनकप्रवेशं
मुक्तश्च स प्रनिनदं त्वरया तदैव ।
निर्गत्य सा सुमधुरं समुवाच निद्रां
सौमित्रिमन्दिरमरं रुचिरं प्रयाहि ॥२४॥
लङ्कापुरेऽस्ति शिबिरे स हि वीरवर्यो
वेशं तदीयजननी-क्षममादधाना ।

मूर्ध्नः समीप उपविश्य वदिष्यामि त्व-
मुत्तिष्ठ वत्स रजनी विरतिं समाप्ता ॥२५॥
द्वारेऽस्ति फुल्लनलिनं सर उत्तरस्मि-
ल्लँङ्कापुरस्तटभुवि प्रचकास्ति दिव्यम् ।
चण्डीगृहं कनकशीर्षसुचारुदृश्यं
स्नात्वाऽत्र चित्रकुसुमैर्यज दैत्यहन्त्रीम् ॥२६॥
आढ्यम्भविष्णुरतुलैरमलैर्यशोभि-
र्देवीप्रसादवलतो निहनिष्यसि त्वम् ।
शत्रून् रणे बलवतोऽपि सहायहीनः
क्लेशं विनेव कदलीं मदमत्तदन्ती ॥२७॥
एकः प्रयाहि प्रियनन्दन काननं त-
दुक्त्वा तदाशु चलिता: स्वपनस्य देवी ।
पश्य क्षपा विरतिमत्र समेति भद्र
कालं वृथा क्षपितमीश्वरि मा विधेहि ॥२८॥
निद्रा ययौ गगनमुज्ज्वलवर्त्म कृत्वा
तारेव भूमिपतिना निजकक्षमुक्ता ।
सौमित्रिधाम चपलं धृतमातृवेशा
गत्वा स्थिताह्वयदिमं मधुरोक्तिवृष्ट्या ॥२९॥
श्रुत्वैव चोत्थित इतस्तत ईक्षणार्थी
वक्षः समार्द्रमकरोन्नयनाम्बुवर्षैः ।
मातः कथं नु कृपया रहिताऽसि दासे
साक्षाद् भवार्चनमहं विदधे पदोस्ते ॥३०॥
मातस्तवाङ्घ्रि रजसो ग्रहणेन पूर्णं
कुर्वे मनोरथमहं सफलं चिराय ।
स्मृत्वा तवार्त्तिरुदितं वनयानकाले
चित्तं सुदुःखमुपयाति विदीर्णतां मे ॥३१॥

मृष्ट्वाऽश्रु वीरतिलको गजलीलगामी
वव्राज तत्र रघुनाथ उवास यत्र ।
नत्वाऽनुजः पदयुगे प्रियपूर्वजस्य
बद्धाञ्जलिः समवदच्चकितं सुपुप्तिम् ॥३२॥
स्वप्नोऽद्भुतो रघुकुलेश मयेक्षितोऽङ्ग
मातोपविश्य शिरसः सविधे सुमित्रा ।
प्रोवाच तात जहि सुप्तिमगात्तमिस्रा
लङ्कोत्तरालयगतां गिरिजां यजस्व ॥३३॥
तस्याः प्रसादमहिमाचितशक्तिरुग्रान
रक्षोगणान युधि भवांस्त्ववलीलयाशु ।
संनेष्यते यमगृहं भविता यशस्वी
यात्वेक एव जननी चलितेयदुक्त्वा ॥३४॥
क्रन्दन समाह्वयमहं जननीं कृपार्द्रां
नापं तदुत्तरमतः करवाणि कार्यम् ।
किं वाऽधुना रघुमणे त्वनुशाधि भृत्यं
दासो भवेत् प्रभुनिदेशपथानुवर्त्ती ॥३५॥
मित्रं विभीषणमुवाच विदेहराज-
कन्यापतिर्वद सखे रघुवंशरक्षिन् ।
रक्षःपुरे त्वमिह मे शरणं वरिष्ठं
सूर्यं विना क इह वा शमयेत्तमिस्रम् ॥३६॥
प्रत्याह ऋक्ष-ऋषभो विपिनेऽस्ति सत्यं
तत्रैव मन्दिरमुमापदपद्मपूतम् ।
तीरे सरोवरवरस्य निशाचरेन्द्रो
यत्र स्वयं गिरिसुतां यजतेऽतिभक्त्या ॥३७॥
कश्चिन्न तत्र विपिने भयसङ्कुले तु
यातुं समर्थ इति चापि मया श्रुतं यत् ।

देवः स्वयं पशुपतिर्भ्रमति त्रिशूलं
धृत्वा जयी स हि भवेद् यजते स ईशम् ॥३८॥
सौमित्रिरेति यदि तद्विपिनं सुघोरं
निर्भीकचित्त इत आशु समृद्धसत्त्वः ।
तत्ते महारथिवरेप्सितमादधानं
सिद्धिं परां सफलतामणिमण्डितं स्यात् ॥३९॥
सौमित्रिराह नितरामहमस्मि दासो
रामस्य निर्जितशशाङ्कमुखस्य जिष्णोः ।
तस्याज्ञया वनमहं सुखतो विशेयं
कः शक्नुयान्मम गतिं जगतीह रोद्धुम् ॥४०॥
प्रत्याह राघव इह प्रचुरो मदर्थः
क्लेशस्त्वया प्रियतमाङ्ग महान् विसोढः ।
नाहं नियोजयितुमिच्छुरतः पुनस्त्वां
कृच्छ्रेषु यानि नितरां स्मृतितस्तुदन्ति ॥४१॥
कुर्यान्त्वहं किमिह दैवबलेन युक्तं
भ्रातः प्रयाह्यवहितः सुकृतैर्बलिष्ठः ।
देवप्रसाद इव लोहमयं भवन्तं
वर्मावतु प्रतिपदं शुभकर्मयत्तम् ॥४२॥
सौमित्रिरङ्घ्रिकमले रघुकुञ्जरस्य
नत्वा विभीषणपदे च तथाऽतिभक्त्या ।
सासिर्जगाम बलवांस्त्वरितं विशङ्को
निर्भीकचित्त उदधिप्रतिमोऽतिभीमः ॥४३॥
सुग्रीव उत्तरदिशि प्रतिबुद्ध आस्ते
द्वारे यतोऽगमदसौ श्रुतपादनादः ।
गर्जन्नुवाच स हि वीर इतो निशाया-
मायासि कः कुत इदं वद मृत्युदास ॥४४॥

चूर्णं शिलाभिरहमद्य शिरः करोमि
नोचेद्ददासि कुलनामनिदर्शनं ते ।
प्रोवाच सस्मितमयं रघुनाथदासो
रक्षोऽन्ववायनिधनोदितधूमकेतुः ॥४५॥
तूर्णं व्रजन् स हि पुरः पदवन्दनार्थी
सुग्रीव आह च सखे रघुशूरभृत्यः ।
यादृग् भवान् अहमपि प्रथितस्त्रिलोक्यां
तादृक् क्षमस्व मम दोषमबोधजातम् ॥४६॥
सम्भाष्य तं मधुमुखं रघुनाथमित्रं
सौमित्रिरुत्तरमुखं चलितश्च भूयः ।
दण्डैः कियद्भिरुपगम्य वनप्रवेशं
द्वारं ददर्श चकितः स्वतिभीममूर्त्तिम् ॥४७॥
बालेन्दुभालसुभगं फणिरत्नदीप्रं
शीर्षे जटावलिधरं सुरनिम्नगायाः ।
फेनोक्षितं शरदि नैशघनाग्रभागे
ज्योत्स्नां यथा धवलिताङ्गवरं विभूत्या ॥४८॥
शूलं करे स्थविरशालविशालदीर्घं
निर्वर्ण्य स प्रबुबुधे तमुमाऽसुबन्धुम् ।
निष्कृष्य भीषणमसिं समुवाच वीरो
वन्दे तवाङ्घ्रियुगलं रघुनाथदासः ॥४९॥
मुष्वायनं वनमितो गिरिजां प्रयक्ष्ये
दुष्कर्मरावणकृते यदि योत्स्यसे त्वम् ।
शम्भो मया सह विधेहि रणं यथेच्छ-
मिष्टार्थयत्नहृदयो न सहेत कालम् ॥५०॥
धर्मस्य मे विदितमस्तु समग्रकृत्य-
माकारयामि युधि बालशशाङ्कभालम् ।

नीतिर्भवेद् यदि दृढा सुकृतस्य लोके
नूनं भवन्तमतिघोरमृधे विजेष्ये ॥५१॥
प्रत्याह्वयेन शिखरीव घनैर्निनादं
प्रत्याह भूतनिचयेश उदात्तकण्ठम् ।
शंसामि साहसमहं तव शूरसिंह
सौमित्र आत्थ भवता मम युत् कथं स्यात् ॥५२॥
त्वयि तोषमिता गिरिराजसुता
सुभगेति स्तुतिं विदधे सुगमाम् ।
इति वाचमुदीर्य शिवोऽन्तरधात्
प्रविवेश वनं स च रामसखः ॥५३॥

इति श्रीमेघनादवधे महाकाव्ये लक्ष्मणस्य वनप्रवेशो नाम
पञ्चदशः सर्गः ।

# लिङ्गवृत्तिः

(पूर्वतोऽनुवृत्ता)

**शेखरयूपपुरोडाशकूपसूपलवशष्पाः ।**
**धर्ममखमयवासोदशा दाराः पुंसि बहुत्वं चैषाम् ॥४५॥**

एते शब्दाः पुंसि भवन्ति । अयं शेखरः पुष्पसंहातः, उत्तुङ्गो वा । यूपो यज्ञभाण्डम् । पुरोडाशो यज्ञपिण्डकः । कूपोऽवटः । सूपो व्यञ्जनम् । लवो लेशः । शष्पो बालतृणम् । धर्म उपवासादिः । मयो वेश्म । वासांसि वस्त्राणि । तेषां दशाः । दाराः पुंसि भवन्ति । बहुत्वं चैषां सदा भवति । इमे वासोदशाः वस्त्रान्तसूत्रम् । इमे दाराः स्त्रियः । वास इति किम् ? दशाऽवस्था ।

**मांसविवराभिधानं नपुंसके विद्धि तीर्थतुण्डे च ।**

मांसाभिधानं विवराभिधानं च तीर्थतुण्डे च नपुंसके विद्धि जानीहि । यथा · मांसं पललं क्रव्यमित्यादि । इदं विवरं बिलं छिद्रम् । रन्ध्रं कुहरं सुषिरम् इत्यादि । इदं तीर्थं पुण्यस्थानम् । तुण्डं वक्त्रम् ।

**यवमाषाद्या व्रीहयः पुंसि प्रियङ्गवश्च स्त्रिया-मेव ॥४६॥**

यवमाषाद्या व्रीहयः पुंसि भवन्ति । यथा—इमे माषाः मुद्गाः । कुलत्थकाः । गोधूमाः । तिलाः । कलायाः । मसूराः । सर्षपाः । प्रियङ्गवश्च स्त्रियामेव । इमाः प्रियङ्गवः ।

**पल्लव उक्तः पुंसि तु नपुंसके किशलयं स्त्रियां लाक्षा ।**

पल्लवशब्दः पुंसि भवति। अयं पल्लवः। इदं किशलयम्, प्रवालम्। लाक्षा स्त्रियां स्यात्। इयं लाक्षा जतु।

**ऋग्रोचना *पिण्डिकाकण्डूक्षपाश्च ॥**

ऋगादयः शब्दाः स्त्रियां भवन्ति। इयम् ऋग् वेदः। रोचना गोपिच्छम्। पिण्डका प्राण्यङ्गम्। कण्डूः खर्जूः। क्षपा रात्रिः।

**कललकफपूयकुल्माषकल्ककल्पगेहमखलौहित्याः।**
***झर्झरपुंखचषालाश्च पुंसि कटाहमत्स्यौ च ॥४८॥**

एते शब्दाः पुंसि भवन्ति। कललो गर्भाशयः। कफः श्लेष्मा। पूयः शोणितविकारः। कुल्माषः शस्यजातिः। कल्कः सर्षपादीनां चूर्णम्। कल्पः कालपरिमाणम्। गेहो गृहम्। मखो यज्ञः। लौहित्यो नदविशेषः। झर्झरो वादित्रविशेषः। पुङ्खः शरस्य। चषालो यूपाग्रम्। कटाहो लोहभाजनम्। मत्स्यो मीनः।

**शवपलल†तल्पसद्मबलिशामिषाणि निमित्त-पित्तचित्तानि। किल्बिषवृजिनानि च तथा नपुंसके पीठपापे च ॥४९॥**

एते शब्दा नपुंसके भवन्ति। यथा—इदं शवं मृतशरीरम्। पललं मांसम्। तल्पं शयनीयम्। सद्म निवासः। बलिशं मत्स्यवेधनम्। आमिषं मत्स्यमांसम्। निमित्तं कारणम्। पित्तं धातुविकारः। चित्तं मनः। किल्बिषं पापम्। वृजिनं कुटिलम्। पीठमासनम्। पापं पातकम्।

## वल्बजलाजासूनां पुंयोगः स्याद् बहुत्वं च ॥

वल्बजादयः शब्दाः पुंसि भवन्ति बहुत्वं चैतेषां सदैव। इमे वल्बजाः तृणजातिः। इमे लाजा भृष्टधान्यानि। असवः प्राणाः।

## स्थलशाद्वलशिबिराणां नपुंसकत्वम्

एते शब्दा नपुंसके भवन्ति। इदं स्थलमरण्यप्रदेशः। शाद्वलं हरितस्थानम्। शिबिरं शकटस्थानम्।

## स्त्रियां पृतना च ॥५०॥

पृतनाशब्दः स्त्रियां भवति। इयं पृतना सेना।

## ईर्ष्यारुचिस्फुलिङ्गाः शय्या निःश्रेणीकुटिकोटिवाणी पेशी वरूथिनी स्त्रियां कुथा नाडिका कन्था च ॥५१॥

इयमीर्ष्या अक्षमा। रुचिः दीप्तिः, अभिलाषो वा। स्फुलिङ्गोऽग्निकणः। शय्या शयनीयम्। निःश्रेणी अधिरोहणी। कोटिः संख्या। कुटिर्गृहम्। वाणी वाक्। पेशी मांसस्य। वरूथिनी सेना। कुथा ऊर्णकृता। नाडिका कालपरिमाणम्। कन्था जीर्णवासः, कुड्यश्च।

## नाड्युपपदं व्रणं पुंसि वृक्षजनपांशुकन्दुकलशाश्च।

नाडीपूर्वं व्रणं पुंसि भवति। अयं नाडीव्रणः। नाड्युपपद इति किम्? दुष्टव्रणम्। अयं वृक्षः। अयं जनो लोकः। पांशुश्चूर्णम्। कन्दुः कान्दविकपाकस्थानम्। कलशो घटः।

**पञ्जरपलितद्वन्द्वाक्षराणि विद्यादितरजातौ ॥५२॥**

पञ्जरादीनि इतरजातौ नपुंसके जानीयात्। इदं पञ्जरं शकुनिबन्धनम्। पलितं जरा।...अक्षरं वर्णः।

**मेधारसनानिद्रातन्द्रातन्त्र्यः स्त्रियां समञ्जिष्ठाः।**
**मदिरा मन्दुराकुशरे स्यातां *वाक्षदुन्दुभिश्च ॥५३॥**

एते स्त्रियां भवन्ति। इयं मेधा धारणशक्तिः। रसना रसज्ञानशक्तिः(?), मेखला च। निद्रा सुषुप्तिः। तन्द्रा आलस्यम्। तन्त्रीः वाद्यविशेषः। मञ्जिष्ठा रागद्रव्यम्। स्यातां भवेतामित्यर्थः। इयं मदिरा सुरा। मन्दुरा वाजिशाला। कृशरा तिलयवागूः। अक्षर्दीव्यते(?)। अक्षग्रहणं वादित्रसम्बन्धिनिवृत्त्यर्थम्। वाद्यदुन्दुभिरित्यर्थः।

**धान्यविदलांशुकवितानवलयरत्नमिथुनश्मशानानि।**
**बिसतिमिराणि विद्यान्नपुंसकमभ्रनभ्वं चैव ॥५४॥**

एते शब्दा नपुंसके भवन्ति। इदं धान्यं शस्यम् विदलं मुद्गादीनाम्। अंशुकम्, वस्त्रम्। वितानं वस्त्रमयमावरणम्। वलयं स्वर्णादीनाम्। रत्नं मणिः। मिथुनं स्त्रीपुंसद्वन्द्वम्। श्मशानं भूतस्थानम्। बिसं पद्ममूलम्। तिमिरं तमः। अभ्रं मेघम्। नभमाकाशम्।

**पुञ्जाद्रिकोणकरीषकषायतरलपिण्याकगर्भदर्भार्भाः। पुंसि स्युः**

अयं पुञ्जः सङ्घातः। अद्रिः पर्वतः। कोणो गृहादीनाम्। करीषो गोमयविकारः कषायो रसविशेषः तरलो हारमध्यगः। पिण्याकस्तिलविकारः। गर्भ उदरः। दर्भः कुशः। अर्भो बालकः।

---

* वाद्य—मु० पा०

## पत्तनसुल्वचापनाम्नां नपुंसकता ॥५५॥

पत्तनादीनां ये पर्यायाः शब्दास्तेषां नपुंसकता। इदं पत्तनं नगरम्। पुरमित्यादि। सुल्वं म्लेच्छमुखम्। ताम्रम्। उदुम्बरमित्यादि। चापं धनुः कार्मुकमित्यादि।

## विडवर्णा स्त्री ज्ञेया सास्नावीथ्यौ च नीवीभेर्यौ च।
## मञ्जूषागण्डूषामूषापरिषद्गुहाश्चैव ॥५६॥

विट्शब्दो यदा अवर्णस्तदा स्त्रियां भवति। इयं विट् विष्ठा। अवर्ण इति किम्? अयं विट् वैश्यः तृतीयो वर्ण इत्यर्थः। सास्नादयः स्त्रियां भवन्ति। इयं सास्ना गलकम्बलः। वीथी गृहावयवः। नीवी मूलबन्धनम्। भेरी वाद्य-विशेषः। इयं मञ्जूषा काष्ठमयी। गण्डूषा हस्तजलम्। मूषा सुवर्ण-धमनिका। परिषत् सभा। गुहा पर्वतस्य कन्दरा।

## तृष्णाकृपापताकारथ्याकृषयश्च काकिन्यः।
## एते स्त्रियां स्युः प्रतिशीरा धारा च नेमिश्च ॥५७॥

एते तृष्णादयः शब्दाः स्त्रियां भवन्ति। इयं तृष्णा पिपासा। कृपा दया। पताका चिह्नम्। रथ्या मार्गः। कृषिर्वैश्यवृत्तिः। काकिनी पणचतुर्भागः। प्रतिशीरा तिरस्करणी। धारा प्रपतनम्। ऊर्णामयी पर्वतस्य रेखा। नेमिश्चक्रपिण्डिका।

## ❀चतुष्पथयुगलच्छलचेलखोलधिष्ण्यार्गलशफानाम्।
## विद्धि नपुंसकभावं पण्यस्य च पिच्छपलयोः ॥५८॥

चतुष्पथादीनां नपुंसकभावं विद्धि जानीहि। इदं चतुष्पथम्। युगलं युग्मम्। छलं व्याजः। चैलं वस्त्रजातिः। खोलं भग्नभाण्डम्। धिष्ण्यं गृहम्। अर्गलं द्वारपिधानम्। शफं खुरः। पण्यं विक्रेतव्यम्। पिच्छं मयूरस्य। पलं चतुष्कर्षपरिमाणम्।

**रयमण्डपनरककपालगुडमणिमेढ्रदर्दुरकुशूलाः।**
**युग्माकाशव्रतशृङ्गवर्जिताः पुंसि मश्चश्च ॥५६॥**

एते शब्दाः पुंसि भवन्ति। अयं रयो वेगः। मण्डपो जनाश्रयः। नरकः अवीच्यादिः असुरश्च। कपालः शिरोऽवयवः, भिक्षाभाजनञ्च। गुडः इक्षुविकारः। मणिः रत्नम्। मेढ्रः शिश्नम्। दर्दुरो भेकः। कुशूलो धान्यादिस्थित्याधारः। युग्माकाशव्रतशृङ्गवर्जिता इति युग्मादयश्च नपुंसके भवन्ति। इदं युग्मं युगलम्। आकाशं नभः। व्रतं नियमः। शृङ्गं विषाणम्, पर्वतस्य च। मश्चः काष्ठकृतः।

क्रमशः

**संस्कृतसाहित्यपरिषत्**

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

September, 1935. | १८५७-शकीये भाद्रे १८श-वर्षस्य ५म-संख्या | Vol. XVIII No. 5

# मतिमञ्जरी

कस्य वा न विदितः पण्डितप्रकाण्डः श्रीमान् पञ्चाननतर्करत्नमहोदयः। यो ह्यनतिक्रान्तबालभाव एव देवभाषया विरचय्य पद्यानि विस्मयस्तिमितमिव विदधे जनकस्यान्तःकरणम्, यमेवोपष्टम्भमवलम्बमानाऽद्यापि समुच्छ्वसिति वङ्गेषु सनातनो धर्मः, येन खलु निर्मायमेव तूलोतक्षेपं समुत्क्षिप्तमखिलजनस्पृहणीयं महामहोपाध्यायविरुदम्, यस्मै च स्वप्ने प्रादुर्भूय स्वयं भगवती कालिकादेवी शास्त्रार्थमन्वशात्, यस्माच्च समुद्विजन्ते सनातनधर्मसमुन्मूलनव्यसनिनः संस्कारकम्मन्याः स्वैरिणः, यस्य च मरमङ्गलादिभिरनुपमैः काव्यरत्नैर्विमण्डिता देवी सरस्वती, यस्मिंश्च पाण्डित्यधार्मिकत्वयोरपूर्वं सामानाधिकरण्यमुपलभ्यते, स्वजन्मानुग्रहपवित्रितवसुन्धरस्याऽऽर्यवंशपुण्यपुञ्जायमानस्यास्य महात्मनो नाम कस्य वा नानुप्राप्तं श्रवणसरणिं भारतीयस्य। अमुना किल महात्मना वङ्गवासिसमाख्ये समीचीनतमे वङ्गभाषामये वृत्तान्तपत्रे 'वेदश्च वेरिवेरि च'-शीर्षकः कोऽपि प्रबन्धः प्रकाशितः। तस्य च सुमनोहरस्य समयोचितस्य प्रबन्धस्य सारोऽत्र सन्निवेश्यते।

"व्यतीतसंवत्सरत आरभ्य वाराणस्यां 'बेरिबेरि' रोगस्य प्रादुर्भावो विशेषेणानुभूयते। अस्य च प्रभावो वङ्गीयेष्वेव सविशेषमुपलक्ष्यते। यन्त्रसंस्कृततण्डुला एव निदानमामयस्यास्य समुत्पत्ताविति चिराच्छ्रुतमस्माभिः। इदानीं जनवादस्यास्य सत्यतायामेव प्रवणीभवति मानसम्।

धार्मिकाणां यन्नित्यभोजनं तदपि प्राणाग्निहोत्रमेव। न खलूदरपूरणलक्षणलौकिककर्मणे वा रसनातर्पणरूपभोगनिष्पत्त्यै वा विहितं भोजनम्। तदपि धर्मार्थमेव सम्पादनीयम्, अयमपि यज्ञविशेष एव। ये तावत् पञ्च महायज्ञाननुतिष्ठन्ति तेषामपि यदन्नदानादिकम्, तस्य यज्ञत्वे भूयांसि प्रमाणान्युपलभ्यन्ते। यथा तथा वा भवतु, शिष्टजनानां तण्डुलस्य यज्ञसाधनरूपेणैव सदा व्यवहार्यत्वे नास्ति लेशतोऽपि संशयावकाशः।

यज्ञीयतण्डुलनिष्पादनविधौ च वेदेष्वाम्नातौ "व्रीहीन् प्रोक्षति" इति, "व्रीहीन् अवहन्ति" इति। प्रथमतस्तावत् प्रोक्षणीया व्रीहयः—उत्तानितेन पाणिना व्रीहिषु जलबिन्दुप्रक्षेपः कार्यः। ततश्च प्रोक्षणसंस्कृतास्ते व्रीहयोऽवहन्तव्याः। अवपूर्वाद्धन्तेरवघातशब्दो निष्पन्नः। अवशब्दस्तावन्निम्नार्थे वर्तते। ऊर्ध्वदेशतोऽधोनिपातितेन मुसलादिना य आघातः स एवावघातशब्दवाच्यः। उदूखलमुसलयोर्मुसलेन वङ्गेषु प्रचलितया काष्ठन्या वा धान्येषु य आघातः स ऊर्ध्वदेशतोऽधोनिपातितद्रव्येण निम्नस्थव्रीह्यवघात इति कृत्वा अवघात एव। धान्येषु प्रोक्षणमवघातश्च नियमविधी एव।

यदा तावदन्यथाविधानमपि स्वेच्छया सम्भवति, तदा नियमविशेषबलेन अन्यथा विधानाद् यद् व्यावर्तनं स एव नियमविधिरित्युच्यते। कुसुमाञ्जल्यध्ययनावसर एव नियमविधिना साकमस्माकं प्राथमिकः परिचयः समजनि। न खलु तदानीं व्याख्यातृव्याख्यानेन मनसस्तोषः समजायत। तत् खलु व्याख्यानमतिमात्रं क्लिष्टमसम्भवप्रायमित्येवासीन्मतिरस्माकम्। तथाहि, प्राञ्चः खलु "तण्डुलनिष्पादनं तावदवघातेनापि सम्भवति, नखविदलनेनापि सम्भवति, अत एव समबलयोरनयोर्विकल्पयोः प्राप्तयोरेकतरस्य नियमः क्रियते—अवघातेनैव निष्पादनीया यज्ञीयास्तण्डुलाः

तेनैव तत्र संस्कार आधीयते, नखविदलननिष्पादितैस्तण्डुलैर्विहितो यागो नालमस्त्यपूर्वं सञ्जनयितुम्, विहितसंस्कारविरहितत्वात्। अत एव तादृशास्तण्डुला नोपयुज्यन्ते यागादिषु।" इति व्याचख्युः।

अत्रेदमवधेयम्। न खल्ववघात-नखविदलनयोर्विकल्पः कथमपि सम्भवति। को वाऽनुन्मत्तः सुदीर्घसमयसाध्येन नखविदलननिष्पन्नेन तण्डुलेन प्रवर्तेत स्वत एव यागाद्यनुष्ठाने। स्मर्यतां तावल्लौकिकानामाभाणकः 'अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्" इति। अत एवेदृशस्येच्छाविशेषस्यैवानुत्थानोपहतत्वात् तन्निवारणाय अजागलस्तनायमाननियमविधिकल्पनं सर्वथा न समीचीनम्।

ईदृशश्चेन्नियमविधिः प्रामाणिकस्तर्हि पद्भ्यां व्रजेदित्यत्रापि नियमः कल्प्यः, हस्ताभ्यामपि गमनस्य कथञ्चित् सम्भवात्। अत एव हस्ताभ्यां गमनस्य निवारणार्थमवश्यमत्र नियमपक्षः कक्षीकर्तव्यः। वस्तुतस्तु नैव युज्यते नियम एवंविधस्थले, पाणिभ्यां प्रचलने मनुजानां सहजप्रवृत्त्यनुपलम्भात्। एवमेव व्रीहीनवहन्तीत्यत्रापि समानन्यायेन नखविदलनस्याप्राप्तिरेव। प्रथमतस्तावन्नखेन प्रयत्नातिरेकत एकैकस्य धान्यस्य वितुषीकरणम्, ततश्च तण्डुलानां निष्पत्तिः, ततश्च तथाविधेन तण्डुलेन यज्ञार्थमन्नस्य पाकः। को वा प्रकृतिस्थ ईदृशे प्रयाससहस्रसाध्ये कर्मणि स्वत एव प्रवर्तेत। कृतं मम छात्रावस्थायामीदृशसंशयेन मनसि पदम्।

व्यतिगतो भूयान् कालः। श्रुतं मया तण्डुलनिष्पादनयन्त्राणि विनिर्मीयन्त इति। ततश्च प्रत्यक्षीक्रियन्त इदानीं सर्वत्रैव तादृशयन्त्राणि। उदूखलमपि बहोः कालात् पूर्वमन्तर्हितं वङ्गीयधान्यकण्डनव्यापारात्, कण्डन्यपि जिगमिषुरेव वर्तते। तदानीमेव विस्पष्टमेवानुभूतं न खलु वैदिको नियमविधिर्निरर्थकः, न वा पद्भ्यां व्रजेदित्यनेन तुल्ययोगक्षेमः।

अन्तरेणाप्यवघातं शक्यन्ते निष्पादयितुं तण्डुलाः—न केवलं निष्पादयितुं शक्यन्ते, समधिकं विनिष्पाद्यन्ते। ईदृशे स्थले वैदिकोऽवघातनियमो जीवानां कल्याणायैवाभिप्रवृत्तः।

प्रतिपन्नमेव वेदस्य सर्वज्ञत्वे यानि प्रमाणान्युपलभ्यन्ते—तेष्वेवागमन्यतमोऽवघातनियमविधिः। कामं व्याख्यातारो विशेषज्ञा आसन्, तथापि तेषां सर्वज्ञत्वाभावादुत्तरकाले तण्डुलयन्त्रसद्भावमनाकलय्यैव मुसलविदलनेनैव वितुषीकरणेन तण्डुलनिष्पत्तिरूपफलिना। वेदस्तावत् सर्वज्ञवचनम्, अत एव तण्डुलयन्त्रस्याङ्कितमपि तत्र वर्तत एव। तस्य तण्डुलस्य सर्वथाऽनुपादेयत्वमपि नियमविधिना प्रतिपाद्यते।

परं को वा वैदिकं वचनमिदानीं प्रमाणीकुर्यात्! तथापि, अपि नाम 'वेरिवेरि'व्याधिः पुनरपि व्रीहीनवहन्तीति नियमविधिं प्रभवेत् प्रबोधयितुम्!"*

## रत्नमयी

सप्तमः परिच्छेदः।

खुल्लतातमहोदयः कुत्रचिद्भ्रमणाय विनिर्गतो व्यतीतायां सन्ध्यायां गृहं प्रत्यावृत्तो विदितद्वितीयपत्रवृत्तान्तोऽवदत्, दृश्यतां वत्स क्षेत्र, व्यतिकरोऽयं क्रमेणैव गरीयस्त्वं भजते, काममिदानीं प्रतिरुध्यतां तावदुद्वाहः। मम मतेन पूर्णे परिवत्सरे गयां गत्वा प्रदीयतां पिण्डः—तस्या उद्धारः स्यात्। न खलु तावद् भूयान् कालोऽवशिष्यते वत्सरस्य पूर्त्यै—प्रायेण मासैनैव सर्वं सम्पन्नं स्यात्, ततश्च निष्प्रत्यूहं शुभकर्म निर्वर्तयिष्यते।

क्षेत्रमहोदयेनोक्तम् "भवतु, तदेव सम्यक्।" कन्यायाः पिता अनुनीतः,

---

* एतद्विधिविषये बाहुल्येन विचारः *Indian Historical Quarterly* पत्रिकायाः चतुर्थे भागे चतुर्थ्यां संख्यायां ८४१-४८ पृष्ठे विहितः संस्कृत-साहित्यपरिषत्-पत्रिका-सम्पादकेन।

विवाहदिवसश्च पर्यावर्तितः, प्रत्याहृतानि निमन्त्रणपत्राणि, गयाश्राद्धं परिसमाप्य परिणेष्यति क्षेत्रमहोदय इति सर्वतः प्रसृता वार्ता।

क्षेत्रमहोदयस्योपरि कस्यचन कूटपत्रव्यवहारस्य महान् भारः समर्पित आसीत्। न खलु तस्मिन्ननिर्व्यूढे प्रभवत्यसौ गयां गन्तुम्। स्वपक्षसाक्षिणस्तावद् अनुदिवसं शिक्ष्यन्ते।

व्यवहारदिवसात् पूर्वस्मिन् दिने सायं धर्माधिकरणात् प्रत्यावर्तनावसरे समधिगतं क्षेत्रमोहनमहोदयेन रसमय्यास्तृतीयं पत्रम्। तत्र चेदमन्यच्च विलिखितमासीत्—

"श्रुतं मया, गयायां मे पिण्डप्रदानार्थं गन्तुमुद्युक्तोऽसि। मोन्यसे तावत् पिण्डप्रदानेन ममोद्धारः स्यात्, तदानीं स्वच्छन्दं विवाहं करिष्यसि। गयां गच्छसि चेत् चौरस्य वेशम् आस्थाय बाष्पीयशकटं प्रविस्य तव वक्षसि छुरिकां निवेशयिष्यामि।"

न खलु क्षेत्रमहोदयस्यातः परं सञ्जातं गृहगमनम्। अधिकरणोचित-वेशेनैव मनोहरमहोदयस्य गृहं गत्वा प्रदर्शितमनेन तस्मै पत्रम्।

अनुवाच्य पत्रं मनोहरमहोदयेनोक्तम्, अहो! महतीयं विपत्; विवाह-कल्पना परित्याज्यैव भवता इति।

क्षेत्रमहोदयेनोक्तम्, पृच्छामि तावद् भद्र, अपि प्रभवत्यशरीरी आत्मा जनस्य वक्षसि छुरिकां निखनितुम्। किमत्राभिमतं भवदीयस्य थियजफी-शास्त्रस्य।

मनोहरमहोदयेन स्थूलमेकं पुस्तकं पुस्तकपेटिकातो निष्कृष्योद्घाट्योक्तम् —अत्र तावदेवमेव मतं थियजफीशास्त्रस्य। मुक्तात्मानो हि सामान्यतः शरीररहिताः। अन्तरान्तरा पुनस्त आत्मानं (Materialised) जड-देहसम्पन्नं विदधति। तेषां हि तथाविधं सामर्थ्यं येन ते पवनात् पादपात् भूमितः सन्निहितनरदेहतोऽपि समपेक्षितं पदार्थजातं समाकृष्य देहान् विनिर्माय शरीरिणः सम्पद्यन्ते। एवञ्च, तदवस्थैस्तैर्वक्षसि छुरिकाया विनि-वेशो न खलु लेशतोऽपि विस्मयाय कल्पेत। एतदपि विमृश्यताम्—यो नाम

हस्तो लेखनीं विधृत्यालं पत्रविलिखनाय, कथं वा न प्रभवेदसौ तूलिकां विधर्तुमिति ।

क्षेत्रमोहनमहोदयेन कियन्तंचन कालं विचिन्त्यानन्तरमुक्तम्—दृश्यताम्। पत्राणीमानि कूटानि वा न वेति सम्यग् निर्णेतव्यमिदानीम्, अहं तावद् ब्रवीमि यो हि हस्तलिपिविशारदः कलिकातातः साक्ष्यप्रदानाय समागच्छति, तेनैव पत्राणीमानि परीक्ष्यन्ते चेत् सम्यक् स्यात् ।

थियजफिष्टमहोदयः क्षेत्रमोहनस्य संशयेनानेन अन्तर्विरक्तः प्रकाशमवदत्—भवतु, इच्छति चेद् भवान् परीक्षयतु ।

परेद्यवि प्रारब्धस्तावत् प्रादेशिकाधिकरणे कूटपत्रव्यवहारः । हस्तलिपिविशारदेन सफूटेमारमहोदयेन साक्ष्यं दत्तम् । ततश्च दिवसावसाने अधिकरणनिरोधानन्तरम् क्षेत्रमोहनमहोदयो राजपुरुषनिवासभवनमुपसृत्य सफूटेमारमहोदयाय मौलिकं पत्रत्रितयं प्रदत्तवान् । संवादार्थं रसमय्याः कानिचित् पुरातनानि पारमार्थिकानि पत्राण्यपि समर्पितवान् । युरोपीयेणोक्तम् , श्वः प्रातर्निर्णयफलं विज्ञापयिष्यामीति ।

परेद्यवि प्रातराजकीयव्यवहाराजीवः मनोहरमहोदयेन सार्कं समुपस्थितो राजपुरुषभवनम् । तत्र च युरोपीयेणोक्तम्, परीक्षाधीनानि त्रीण्येव पत्राणि एकेनैव पाणिना विलिखितानि ।

एतच्छ्रवणेन म्लानिमानमुपगतं क्षेत्रमहोदयस्य वदनमण्डलम् । मनोहरमहोदयेनोक्तम्, आर्य, कृपया भवदभिमतं पत्रे निवेश्य समर्पयितुमर्हति भवान् । आङ्गलेन चिन्तितम्, नूनमेतद्गतो व्यवहारो भविष्यति । पुनरपि साक्ष्यदानाय समागतेन मया शुल्कं लप्स्यते अत एव सानन्दं तेन विलिखितमपेक्षितं पत्रम् ।

स्वावासप्रतिगमनसमये मनोहरमहोदयः क्षेत्रमहोदयमवदत्, पत्राणामेषां प्रतिलिपीः सफूटेमारमहोदयस्य चाभिमतमस्मदीये थियजफिष्ट्याल्र्रिभिउसमाख्ये मासिके पत्रे मुद्रणार्थं प्रेषयितुमिच्छामि । अत्र वर्तते वा

भवतः काऽपि विप्रतिपत्तिः । यत् खल्वस्माभिः Spirit writing इत्युच्यते, तस्यालिसमीच्चोनमप्रकम्प्यं प्रमाणं स्यात् ।

क्षेत्रमहोदयेनोक्तम् नात्र मे विप्रतिपत्तिः।

थियजफिक्याल्रिभिउपत्रस्यानन्तरसंख्यायां मुद्रितानि सप्रशस्तिपत्राणि पत्राणि । नानादिग्देशतः थियजफिष्टप्रकाण्डाः क्षेत्रमोहनमहोदयाय पत्राणि प्रेषयितुमुपचक्रमिरे । केचन हुगलीमागत्य स्वयमेव पत्राणि प्रत्यक्षीकृत्य विस्मयविमूढा अभवन् ।

## अष्टमः परिच्छेदः

थियजफिष्टानां मध्ये क्षेत्रमहोदयस्य निःसीमा प्रतिपत्तिरजृम्भत । परं न खलु व्यतिकरेणानेन तेन लेशतोऽप्यलम्भि सान्त्वनम् । पत्राणि चेत् कूटानीति प्रमाणितमभविष्यत् तर्हि निर्वर्त्य विवाहविधिं स निर्वृतोऽभविष्यत् । नापि त्रासेन गयां गत्वा पिण्डदानमप्यनुष्ठातुं प्राभवत् । मन्ये तस्य भागधेयं विवाहपरिपन्थि ।

समागतो मधुमासः । प्रवहति मलयानिलः । होलाकामहोत्सवेन निरुद्धं धर्माधिकरणम् । क्षेत्रमोहनः स्वभवने अवस्थायाऽऽत्मीयं दुरदृष्टं चिन्तयन्नास्ते । अवसरे चास्मिन् केनचिदागत्योक्तम्—हालिसहरे त्वदीये श्वशुरगृहे गरीयसी विपदुपनता । होलाकामहोत्सवेऽग्निक्रीडा-प्रदर्शनावसरे 'वोम'स्फुटनेन भवदीयः कनिष्ठ-श्यालकः सुबोधः विशेषत-आहत इति । स च हुगलीस्थारोग्यशालामानीत इति ।

एतदाकर्ण्य न खलु क्षेत्रमहोदयः प्रबभूवागत्वा स्थातुम् । तदात्व एव भाटकित्वा शकटमारोग्यशालाभिमुखं धावितवान् । गत्वा चापश्यत् बाल-स्तावद्विषमावस्थायां वर्तते । शय्याया अधस्ताद् भूमावुपविष्टा विधवा विनोदिनी रोदिति । क्षेत्रमोहनं दृष्ट्वा समधिकमेव रोदितुमसौ प्रचक्रमे ।

समग्रमेव दिवसं प्रयुक्तं भेषजम्, विहिता च शुश्रूषा । अनुसायमुक्तं भिषग्भिः, नेदानीं वर्तते जीवितशङ्केति ।

क्षेत्रमोहनः श्यालिकामवदत्, भद्रं दारिके, समागता सन्ध्या, गृहमिदानीं गन्तव्यम् ।

विनोदिन्याऽभिहितम्—न खलु मयोचितं निशागमेऽस्मिन् गृहं गन्तुम् ।

विदितवृत्तान्तं रायोव्यशालीयचिकित्सकेनोक्तम्, गन्तव्यमेव भवत्या गृहम् । न खल्वत्र रात्राववस्थातुं प्रभविष्यसि । श्वः प्रातः पुनरत्रागमिष्यति भवती । न खल्विदानीं लेशतोऽपि विपत्तेर्भयम् । विपत् तावद् व्यतीतैव । सेवाशुश्रूषादिकमस्माभिरेव विधास्यते । तदर्थं न मनागपि चिन्ता कार्या भवत्या । गच्छतु भवती गृहम् ।

बहुशो बोधिता विनोदिनी तदैव प्रतिपन्ना । अवदच्च क्षेत्रमोहनम्, त्वमेव तर्हि मां हालिसहरं प्रापय । रात्रौ तावत् तत्रावस्थास्ये । प्रत्यूषागमेनैव सज्जया पुनरपि त्वयाऽहमत्राऽऽनेयेति ।

क्षेत्रमोहनेन तथैव कृतम् । हालिसहर एव व्यतिक्रान्ता विभावरी ।

प्रत्यूषसि समुत्थाय स्वेनैव हस्तेन तमाखुं प्रगुणीकृत्य धूम्रपानमुपक्रमते तावद् गृहाद् बहिर्महान् कलकलोऽश्रूयत । ससम्भ्रमं धूमपानयन्त्रं भूमाववस्थाप्य बहिर्निष्क्रम्यापश्यत् लोहितोष्णीषैः परिवेष्टितं भवनम् । आरक्षिकपुरुषाध्यक्षः स्वयमेव गृहद्वारि तुरगारूढस्तिष्ठति । सार्धं तेन केचनोपाध्यक्षाः प्रधानरक्षिपुरुषाश्च विलसन्ति ।

परिचितचरोऽयमिति क्षेत्रमहोदयोऽवनतपूर्वकायस्तमभिवादितवान् । धूमवर्तिकाविभूषितवदनेन चाध्यक्षमहोदयेनोक्तम्—हलो मुखुज्जियार, इमद् किं खरोटि ?

क्षेत्रमहोदयेनोक्तम्, आर्य, इदं तावन्मदीयं श्वशुरगृहम् ।

"एटद् टव श्वशुरगृहं वर्टटे । उद्दम् हामि टोमार श्वशुरबाड़ी साचं खड़िबे ।" (अहं ते श्वशुरगृहं निरीक्षिष्यसि) ।

"किमिति स्वामिन् ।"

"अट्र स्फुटनास्त्राणि निर्मीटे वा न वा मया द्रक्ष्यटि । एटद् साच ओयारेन्ट् असटि ।" इत्युक्त्वा साचं ओयारेन्ट क्षेत्रमहोदयस्य हस्ते

प्रदत्तवान्। क्षेत्रमहोदयोऽपि तद् आवर्त्य पर्यावर्त्य निरीक्ष्य तस्मै प्रत्यर्पितवान् ; उक्तवांश्च, आर्य एवाधिकारी। प्रभवत्यार्यः सर्वं विधातुम्।

अध्यक्षमहोदयेनोक्तम्, स्त्रियोऽन्यद् निगूढा रक्ष्यन्ताम्।

प्रविष्टा भुवनाभ्यन्तरं रक्षिणः। स्त्रीषु तावद्विनोदिन्येकैव। न खलु सा रक्षिभयेन कुत्रापि निलयनमावश्यकमाकलयत्। अक्षमालां पाणौ गृहीत्वा प्राङ्गने तुलसीपादपमूले समुपविष्टा।

प्रवृत्तमन्वेषणम्। नालिकास्त्राणि, आग्नेयचूर्णानि, डिनामाइट्, स्फुटनास्त्राणि, "वर्त्तमानरणनीतिः" "युगान्तरम्" भगवद्गीता, "देशेर कथा" "रिभिउ अव् रिभिउज्" प्रभृति किमपि नाधिगतम्। अधिगतं तावत् हिन्दुसत्कर्ममाला, गुप्तप्रेसपञ्जिका, काशीदासविरचितं महाभारतम्, छिन्नं चाख्यायिकापुस्तकमेकम्। कस्यापि देशनायकस्य किमपि चित्रं न प्रादुष्कृतम्। प्रादुष्कृतानि तावत्—कतिचित् कालीघाटस्थकालीमूर्त्तिचित्राणि, एकं च आर्टस्टुडियोतः प्रकाशितं गणपतिचित्रम् ; भूस्वामिनः कतिचित् शुल्कप्राप्तिस्वीकारपत्राणि धूलिमलिनश्च पत्राधार एकः विनिर्गतानि। विनोदिन्याः पेटिकातो विनिर्गतानि पत्रस्तूपमेकम् कतिचन च विलिखितबाह्यनामानि पत्रकोषाणि।

सर्वाणीमानि प्राङ्गने समानीय स्तूपीकृतानि। रक्षिप्रवेकः पत्रादीनां सूचिनिर्माणे व्यापृतः। क्षेत्रमोहनोऽपि तत्रैवोपविष्टः। सोऽपश्यत्, सर्वेष्वपि पत्रकोषेषु तस्यैव नाम विलिखितमासीत्, हस्ताक्षराणि च रसमय्या एव! अध्यक्षमहोदयमनुमान्य क्षेत्रमोहनमहाशयः पत्राणि पत्रकोषांश्च परीक्षितुं प्रवृत्तः। आसन्नविंशानि पत्राण्यासन्, सर्वाण्येव सान्द्रनीलवर्णमस्या रसमय्या हस्ताक्षरेण विलिखितानि। कतिचिच्च पत्राण्युद्घाट्य वाचितान्यपि क्षेत्रमहोदयेन। तांस्तानवस्थाविशेषाननुमाय विलिखितान्येतानि पत्राणि। केषुचिच्च वटवृक्षे निवासस्य समुल्लेखोऽपि वर्तते ; एकत्र च लिखितम् "गयायां दत्तः पिण्ड इति नालमस्मि तवानिष्टमाचरितुमिति मैवं मंस्थाः। इदानीमपि रसीब्राह्मणी प्रभवति मोट्टयितुं ते स्कन्धम्" इति। अपरस्मिन्-

लिखितम् "श्रुतं मया विवाहदिनमपि निर्धारितम्। इदानीमपि सावधानो भव।" अन्यस्मिन् लिखितम्, "श्वस्ते विवाहः। इयन्मया निषिद्धं तथापि कथमपि न श्रुतं त्वया। भवतु कौतुकगृहे प्रज्वाल्यानलं त्वां त्वदीयवधूं च धक्ष्यामि" इत्यादि।

तदानीमखिलं वृत्तान्तजातं दिवसालोक इव विस्पष्टं सञ्जातं क्षेत्रमोहनस्य।

विनोदिनी तुलसीमूले समुपविष्टा सर्वं निरीक्षते स्म। क्षेत्रमोहनेनोक्तम्, भर्त्तृदारिके! किमिदं सर्वम्?

भर्त्तृदारिका तावत स्वमनसाऽक्षमालां जपितुं प्रवृत्ता।

# मेघनादवधम्

षोडशः सर्गः

[ निबन्धकः—श्रीनित्यगोपालविद्याविनोदशर्मा ]

घोरं सिंहरवं श्रुत्वा शशाङ्के वीरकेशरी।
चकम्पे च वनं सर्वं परितो मर्मरायितम् ॥१॥
हर्यक्ष आययौ क्षिप्रं दन्तान् दद्भिर्भृशं दशन्।
रक्ताक्षोऽसकृदास्फाल्य पुच्छं कोपातिपीवरम् ॥२॥
रामजयोऽस्त्विवति ध्वानैः खड्गमुन्मुक्तवान् रथी।
मायासिंहः पलायिष्ट वीक्ष्याग्निं तामसं यथा ॥३॥
मन्दं मन्दं ययौ धीमान् घनैश्चन्द्रः समावृतः।
वायुर्ववौ सहुङ्कारं स्वनाध्मातदिगन्तरम् ॥४॥

क्षणप्रभाऽस्फुरद् व्योम्नि समुज्ज्वले निखिलां भुवम् ।
क्षणमुद्भास्य तेजोभिस्तदैव तमसाऽवृणोत् ॥५॥
अजस्रमपतद् वज्रं भूतले कड्कडायितम् ।
प्रभञ्जनो बभञ्जानोकहान् समूलपाटितान ॥६॥
ददाह काननं दावो लङ्काऽकम्पत निर्भरम् ।
जगर्ज्ज जलधिर्दूरे लक्षं कम्बूनि दध्वनुः ॥७॥
सघर्घरमभूद् घोरचापटङ्कारडम्बरः ।
दृष्ट्वा श्रुत्वा च सर्वं स तस्थाविवाचलोऽचलः॥८॥
दावाग्निर्निरवात् सद्यो वात्या शान्ति समागमत् ।
भूयः समुदिते चन्द्रे व्योम्नि ताराः प्रकाशिताः ॥९॥
प्रसूनकुन्तला पृथ्वी जहास हर्षविह्वला ।
सौरभेण दिशः पूर्णा ववौ मन्दं समीरणः ॥१०॥
प्रतस्थे सुमतिस्तत्र शनैः शनैः सुविस्मितम् ।
पूरितश्चाभवत् सर्वं काननं मधुरैः स्वरैः ॥११॥
स्त्रीकण्ठसम्भवं गीतं वीणावेणुस्वराश्रितम् ।
चेतोविमोहनं जातं संपूरितदिगन्तरम् ॥१२॥
लक्ष्मणः पुरतोऽद्राक्षीत् पुष्पितायां वनावनौ ।
कान्तास्तारा यथा व्योम्नः पतिता भूतले स्थिताः ॥१३॥
काश्चित् सरोवरे स्वच्छेऽवगाहन्त कलेवरम् ।
निशीव कौमुदी तीरे स्थापितात्मवरांशुकम् ॥१४॥
वपुस्तासां सुललितं विरराजामले जले।
मानसे सरसि स्वर्णसरसीरुहसन्निभम् ॥१५॥
आचिन्वन् कुसुमश्चान्याः काश्चिदलङ्कृतालकाः ।
दान्तकोलम्बकेऽराजत्तन्त्रीः सङ्गीतवल्लरी ॥१६॥
नृत्यन्ति सुखिताः काश्चिन्मध्ये पीनपयोधरौ ।
स्रग्विणौ चलतश्चालं नूपुरौ रणतः पदोः ॥१७॥

पीने नितम्बफलके हेमनिर्मितमेखला ।
रारस्यते सुललितं हंसीव द्वीपमूर्द्धनि ॥१८॥
म्रियन्ते जन्मिनो दंशात् फणिन्याः किन्तु दर्शनात् ।
आसां वेण्या मणीमय्याः कामज्वालास्तुदन्त्यसून् ॥१६॥
यमदूतमहिं दृष्ट्वा भीता यान्ति समन्ततः ।
को न वष्टि गले बन्धुमिमां शूलीव भोगिनीम् ॥२०॥
मधुमित्राणि गायन्ति रसालेषु सुपञ्चमम् ।
क्रीडन्ति जलयन्त्राणि मुक्तादभ्रजलानि च ॥२१॥
कौतुकीव जगत्प्राणः प्रसूनागारकोपतः ।
हरन् सौरभरत्नानि वात्युल्लासविचञ्चलः ॥२२॥
तूर्णं वामाः समावेष्ट्य परन्तपमगासिपुः ।
स्वागतं रघुवंशेन्दो देव्यो न राक्षसस्त्रियः ॥२३॥
वासो नो नन्दनारण्ये सुवर्णमयसद्मनि ।
सुधां पिबाम आमोदविह्वला मर्त्यदुर्लभाम् ॥२४॥
सर्वर्त्तुमधुरुद्भाति यौवनोद्यान उत्थिते ।
उरोजकमले फुल्लेऽधरः सरसकोमलः ॥२५॥
भवन्तं वृणुमो देव्यः पतित्वेन व्रजाऽऽलयम् ।
अस्माकं प्रियवीरेन्द्र पूरयाऽऽशु मनोरथम् ॥२६॥
तपस्यन्ति नरास्तीव्रं यत्सुखार्थं युगे युगे ।
तत् समग्रं प्रदास्यामस्तुभ्यं सर्वगुणाकर ॥२७॥
रोगशोकादयः कीटाः कृन्तन्ति यत्र नित्यशः ।
जीवपुष्पाणि भूलोके सन्ति ते नैव नो दिवि ॥२८॥
शूरः कृताञ्जलिः प्राह क्षमध्वं देवयोषितः ।
ममाग्रजो रथिश्रेष्ठो राघवो भुवि विश्रुतः ॥२६॥
नाम्ना सीता प्रिया तस्य हृतैका सा वनान्तरात् ।
रावणेनोद्धरिष्यामस्तां हत्वा तं रणे रिपुम् ॥३०॥

प्रतिज्ञाब्धिं तरीष्यामो वरं दत्त सुराङ्गनाः ।
लक्षणं हि महत्त्वस्य प्रतिज्ञासिन्धुलङ्घनम् ॥३१॥
समुत्तीर्णप्रतिज्ञाब्धिर्मानवः क्षितिभूषणः ।
रत्नगर्भा क्षितेर्नाम तेन याति यथार्थनाम् ॥३२॥
जन्म मे मानवे वंशे यूयं मे जननीसमाः ।
इत्युक्त्वोतक्षिप्तनयनः सोऽपश्यद् विजनं वनम् ॥३३॥
स्वप्नदृष्टा यथा रामा बुद्बुदा वा विनश्वराः ।
लीना निमेषमात्रेण मायानार्यस्तडिन्निभाः ॥३४॥
शरदम्बुधरच्छाया गत्वरेऽस्मिन् भुवस्तले ।
उन्मज्जन्ति निमज्जन्ति जीवाः सिन्धोरिवोर्मयः ॥३५॥
बीजाद् वृक्षस्तथा वृक्षाद् बीजमुत्पद्यते यथा ।
ज्ञेयस्तथा पितापुत्रक्रमो मायाविजृम्भितः ॥३६॥
शयानोऽज्ञानपर्यङ्के मोहनिद्राविचेतनः ।
पश्यन् स्वप्नान् कथं जीवो मायातत्त्वं बुभुत्सते ॥३७ ॥
जाग्रतामपि या निद्रा पश्यतामपि याऽन्धता ।
ज्ञानिनामपि या भ्रान्तिः सा माया केन बुध्यते ॥३८॥
यदि मूकः पठेद् वेदान् पङ्गुर्वा तरेदम्बुधिम् ।
मृतश्चेत् प्राप्नुयात् प्राणान् माया वेद्या न कस्यचित् ॥३९॥
हेमसोपानसम्पन्नसरस्तीरेऽथ राजितम् ।
क्षणैः कतिपयैर्वीरो ददर्श चण्डिकालयम् ॥४०॥
तत्रैक्षत बलेर्दीपान् दीप्यमानान् सहस्रशः ।
पीठाधः पुष्पवैचित्र्यं गुञ्जन्मधुव्रताकुलम् ॥४१॥
शङ्खघण्टाकांस्यवाद्यं श्रूयते सजलो घटः ।
शोभते धूपगन्धेन दिश आमोदिता दश ॥४२॥
वगाह्य सलिलं वीरः स्नात्वा चित्वोत्पलानि च ।
प्रविश्य चण्डिकासद्माऽऽनम्य देवीं यथाविधि ॥४३॥

अष्टाङ्गी प्रणतः प्राह प्रसीद किङ्करे शिवे ।
हन्तास्मि कृपया रक्षःशूरं त्वां प्रार्थये वरम् ॥४४॥
अन्तर्यामिनि जानासि नृणां मानसवासनाः ।
दुर्बला रसना नैताः कदापि रसितुं क्षमा ॥४५॥
सर्वशक्तिमयि देवि शरणागतवत्सले ।
परया कृपया साध्वि पूरयास्मन्मनोरथम् ॥४६॥
जगर्जाऽऽराद् वारिवाहः कृतस्त्रा लङ्काऽशनिध्वनेः ।
सद्योऽकम्पत भूकम्पाद् यथा स वनमन्दिरा ॥४७॥
पुरो ददर्श सौमित्रिः स्वर्णसिंहासनस्थिताम् ।
महामायां तेजोराशिलुप्तदृष्टिक्रियः क्षणम् ॥४८॥
जहास जननी हास्यप्रभाभिर्विद्रुतं नमः ।
चक्षुर्वीरोऽदधाद्दिव्यं सुधीर्व्योम्नि चमत्कृतः ॥४९॥
महादेव्यब्रवीद् वत्स सुप्रसन्नास्तवोपरि ।
देवा देव्यस्तथैवाहं शुद्धभक्तिवशीकृताः ॥५०॥
प्रेरितं दैवमस्त्रं त इन्द्रेणाहमुपस्थिता ।
साधयितुं स्वयं कार्यं व्योमकेशेन नोदिता ॥५१॥
गृह्णन् देवायुधमिदं सार्द्धं विभीषणेन च ।
नगरं गच्छ यत्राऽऽस्ते रावणिर्यज्ञदीक्षितः ॥५२॥
निकुम्भिलेष्टिभवने यजतेऽग्निमतर्कितम् ।
व्याघ्र इव तमाक्रम्य व्यापादय निशाचरम् ॥५३॥
अदृश्यौ मद्वरेण द्वौ करिष्यामि निरन्तरम् ।
पिधान इव निस्त्रिंशं मायाभिरावृणोम्यहम् ॥५४॥
मुहूर्त्तेऽतिशुभे गर्भं सुमित्राऽधाद् भवादृशम् ।
वीररत्नं सुतं वाणी व्योम्नोऽभूत् पूर्णभूतला ॥५५॥
नत्वा शूरमणिर्मायापादपद्मे द्रुतं ययौ ।
यत्र स्थितो रामचन्द्रोऽकूजन् विहङ्गमाः सुखम् ॥५६॥

तूर्यमन्नन् यन्त्रिसंघा नगरं परितः शुभैः ।
निस्वनैरभवत् पुष्पवृष्टिर्लक्ष्मणमूर्धनि ॥५७॥
यशोगीतिभिराकीर्णं भवेत्तव त्रिविष्टपम् ।
वच्मि त्वां सुरदुःसाध्यं कृतं कर्म त्वयाऽधुना ॥८॥
अमरस्त्वमभूरद्यावनौ वीरेन्द्र लक्ष्मण ।
उक्त्वेयद् जोषमापन्ना भारती प्रीतिनिर्भरा ॥५९॥
पुष्पिते कुञ्जभवने गुञ्जद्भृङ्गालिमञ्जुले ।
सौरभाभृतदिग्भागे ललितं विहगा जगुः ॥६०॥
यत्रेन्द्रजिद् बली रेजे कौसुमे शयने गृहे ।
हैमे तत्र सुखाधारे कूजनध्वनिराविशत् ॥६१॥
वीरनागो जजागार गीतैः कुञ्जवनोत्थितैः ।
प्रमीलापाणिपद्मं स धृत्वोवाच मधुस्वरम् ॥६२॥
मूलेऽब्जिजन्याः श्रुतेर्भृङ्गः प्रेमालापमिवाक्षिणी ।
उन्मीलयाह स तां नेत्रे उन्मील्य प्रेयसि शृणु ।
उत्तिष्ठाऽऽनन्दचिन्मूर्त्ते खगैः सम्बोध्यसे शृणु ।
सूर्यकान्तमणिप्रायाः प्राणा मे त्वं रविच्छविः ॥६४॥
त्वयि मुद्रितनेत्रायामहं म्लानच्छविर्भृशम् ।
सौभाग्यपादपे त्वं मे पक्वं रत्नफलं वरम् ॥६५॥
तारका नेत्रयोस्त्वं मे हृदि मन्दिर इन्दिरा ।
उत्तिष्ठ पश्य पुष्पाणि कथं पुष्प्यन्ति कानने ॥६६॥
उत्तस्थौ चकिता वामा गोप्यो वेणुरवैर्यथा ।
त्रपयाऽङ्गान्यपिदधे सत्वरं चारुभाषिणी ॥६७॥
युवराजः पुनः प्राह तमिस्राऽऽपगताऽधुना ।
नान्यथा त्वं कमलिनि भवेर्विकशितेदृशी ॥६८॥
स्निग्धे मे नयने जाते गच्छ नन्तुं प्रसूपदे ।
ततो यक्ष्यामहे वैश्वानरं देवं वरप्रदम् ॥६९॥

तव कल्याणकामा सा विनिद्राहारसंयता ।
आशुतोषं तोषयति पूजया वीरपुत्रिका ॥८३॥
त्वादृशो वीरपुत्रः कस्तादृशो का च वीरसूः ।
मातेत्युक्त्वा गता दूती सौदामनीत्वरान्विता ॥८४॥
गायिकाली जगौ यन्त्रस्वरसङ्गतिपूर्वकम् ।
पश्य हैमवति पुत्रं कार्त्तिकेयं सशक्तिकम् ॥८५॥
देवसेनान्वितं द्वारे त्विषा देदीप्यमानया ।
वध्वा साकं विराजन्तमकलङ्कविधूपमम् ॥८६॥
सौभाग्यशालिनी देवी त्रैलोक्यविजयी सुतः ।
जगद्विमोहिनी कान्ता त्रयी रत्नस्य सङ्गता ॥८७॥
शिवालयान्निर्गतां तां जननीं दम्पती पदोः ।
साष्टाङ्गं नेमतुर्माता चुम्बन्ती शिर आरुदत् ॥८८॥
सौरभस्येव कुसुमं शुक्तिर्मुक्ताजनिर्यथा ।
रत्नानामाकर इव प्रेम्ण उत्सः प्रसूमनः ॥८९॥
शारदेन्दुर्यथा पुत्रो वधूः शारदकौमुदी ।
ताराकिरीटिनी रात्रिः स्वयं रक्षःकुलेश्वरी ॥९०॥
नयनाम्बुतुषाराणां धारा मुक्ताफलश्रियः ।
कपोलपर्णगलिता लेभिरे सुषमां पराम् ॥९१॥
वीरर्षभोऽवदद्देवि देह्याशिषोऽमृतोक्षिताः ।
पूर्णयज्ञो हनिष्यामि राघवं समरे रिपुम् ॥९२॥
मातः पदरजो देहि भ्रातुर्मे घातकं शिशोः ।
नेष्ये यमालयं दुष्टमीक्षे को मां निषेधयेत् ॥९३॥
विधास्ये ते प्रसादेन लङ्कां कण्टकवर्ज्जिताम् ।
शितैः शरशतैर्बद्ध्वानेष्यामि तं विभीषणम् ॥९४॥
राजद्रुहमसिष्यामि सुग्रीवमङ्गदं तथा ।
सागरस्यातलस्पर्शजले देव्यनुमन्यताम् ॥९५॥

वस्त्राञ्चलेन नेत्राम्बु विमृज्य प्राह गद्गदम् ।
राज्ञी वत्स कथं दास्येऽनुमतिन्ते युयुत्सवे ॥९६॥
हृदाकाशं तमश्छन्नं कृत्वा पूर्णशशी मम ।
कथं यास्यसि संग्रामं तुमुलं वीरसङ्कुलम ॥९७॥
यत्र वीरो रघुशूरः कालाहिकल्पलक्ष्मणः ।
विभीषणः कृपाहीनो घ्नन्ति वीरान् महाबलान् ॥९८॥
प्रमत्तो राज्यलोभेन बन्धून् हन्ति विभीषणः ।
क्षुत्क्षाम इव शार्दूलः स्वापत्यानि निरङ्कुशम् ॥९९॥
कुक्षावयं धृतः पापः श्वश्र्वा मे समयेऽशुभे ।
नष्टा स्वर्णपुरी लङ्का यस्य दुर्मन्त्रणादिभिः ॥१००॥
विहस्याह बली मातः कथं त्रस्यसि राघवान् ।
सविभीषणसौमित्रेरल्पस्माद् वा द्विपद्बलात् ॥१०१॥
पित्रादिष्टोऽजयं तौ द्वौ द्विरहं तुमुले रणे ।
आग्नेयबाणनिक्षेपैस्त्वदाशीर्वर्मरक्षितः ॥१०२॥
त्वदङ्घ्रिरेणुमाहात्म्याद् देवदैत्यनरैः समम् ।
सर्वत्र विजयी युद्धे पुत्रस्ते पादसेवकः ॥१०३॥
वेत्ति विभीषणो देवि तव पुत्रपराक्रमम् ।
देवैः सह सहस्राक्षो नागेशश्च रसातले ॥१०४॥
हेतुना केन भीतासि देवि जननि कथ्यताम् ।
रामं तृणाय मन्येऽहं त्वदाशीर्बलबृंहितः ॥१०५॥
चुम्बन्ती सादरं शीर्षं महिषी पुनराह तम् ।
मायावी मानवो वत्स वैदेहीहृदयेश्वरः ॥१०६॥
सहाया देवतास्तस्य नागपाशेन संयतौ ।
कथं त्वयाऽन्यथा मुक्तौ हतौ वा जीवितौ कथम् ॥१०७॥
रजन्यां भीषणे युद्धे सर्वमेतन्मया नहि ।
बोद्धुं शक्यं कदा केन दैवी माया विलङ्घिता ॥१०८॥

श्रुतं मया तदादेशाच्छिला तरति वारिणि ।
निर्वात्यग्निर्वृष्टिरेति न रामो मानवो भवेत् ॥१०६॥
साकं तेन कथं तात नियोक्ष्ये त्वां महाहवे ।
धातुः सूर्पणखा मातुः कुतो नाम्रियतोदरे ॥११०॥
एतदाख्याय साऽरोदीत् तूष्णीमिन्द्रजिदब्रवीत् ।
पूर्ववृत्तं स्मरन्त्यम्ब विलापं कुरुषे वृथा ॥१११॥
तिष्ठत्यरिः पुरद्वारि कथं भुञ्जे सुखं प्रसु ।
कः शक्नुयाद् गृहे स्वप्तुं वह्निज्वालासमाकुले ॥११२॥
विश्रुतं राक्षसकुलं देवदैत्यादिभीषणम् ।
कलङ्कयिष्यति कुलं राम इन्द्रजितः कथम् ॥११३॥
मयो मातामह इदं श्रुत्वा किं वा वदिष्यति ।
मातुलश्च तथा विश्वं धिक् करिष्यति माऽधमम् ॥११४॥
आकर्णय वने हृष्टाः कूजन्ति विहगालयः ।
प्रभाता शर्वरी देहि निदेशं समराय मे ॥११५॥
इष्ट्वेष्टदेवं दुर्द्धर्षरक्षोबलसमन्वितः ।
समरं सम्प्रवेक्ष्यामि प्रविशाम्ब निजालयम् ॥११६॥
सत्वरं प्रतिसङ्क्रम्य पूजिष्यामि सभक्तिकम् ।
पदराजीवयुग्मं ते जयलक्ष्म्याऽभिनन्दितः ॥११७॥
प्राप्तवं जनकादेशं त्वमप्याज्ञां विधेहि मे ।
स्पर्द्धिष्यते क इह मां त्वदाशीर्वरवर्द्धितम् ॥११८॥
मृष्ट्वाऽञ्चलेन नेत्राम्बु प्रोवाच राक्षसेश्वरी ।
यास्यन्तं त्वां विरूपाक्षोऽवतु भीमे महारणे ॥११९॥
भिक्षामिमां पदे तस्य याचेऽहं वच्मि किं पुनः ।
हीनतारकनेत्राऽहं तिष्ठामि त्वां गृहे विना ॥१२०॥
प्रमीलां रुदती प्राह देवी तिष्ठ मया सह ।
उद्भास्य भवनं कृष्णपक्षे तारेव भूतलम् ॥१२१॥

अभ्यर्च्य जननीपादौ महाबाहुर्ययौ गृहान् ।
रुदती स्नुषया साकं देवी वेश्म विवेश सा ॥१२२॥
विहाय शिविकां पद्भ्यां युवराजः शनैः शनैः ।
अभ्ययात् कानने यज्ञशालां पुष्पास्तृताध्वना ॥१२३॥
नूपुरध्वनिमश्रौषीत पश्चादतर्कितं रथी ।
श्रुतपूर्वं प्रियापादस्वनं यद्वद् प्रियश्रुतौ ॥१२४॥
हसित्वा वीरवृन्दिष्ठो बाहुपाशेन सुन्दरीम् ।
प्रमीलां वेष्टयामास विकचेन्दीवराननाम् ॥१२५॥
कान्तोवाच वल्लभाऽहं यज्ञं द्रष्टुं सह त्वया ।
यास्यामीति विजानत्या श्वश्र्वा रुद्धा गृहान्तरम् ॥१२६॥
स्थातुं तत्राप्यशक्ताऽहमदृष्ट्वा त्वत्पदाम्बुजम् ।
सौरकरोज्ज्वला चान्द्री कलेवाहं त्वयोज्ज्वला ॥१२७॥
भो रक्षोऽन्वयतिग्मांशो त्वां विना निखिलं जगत् ।
स्याद् गाढतमसाच्छन्नं सत्यमेतद् ब्रवीम्यहम् ॥१२८॥
मुक्तामण्डितवक्षोजोपरि वारि दृशोऽपतत् ।
मुक्ताशुभ्रतरं पद्मपर्णोद्भासितुषारवत् ॥१२९॥
प्रत्युवाच वीरसिंहः प्रत्यायास्यामि सत्वरम् ।
व्यापाद्य राघवं युद्धे लङ्काश्रीः प्रतिगम्यताम् ॥१३०॥
सुधांशोः पुरतः साध्वि रोहिणी दीप्यते भृशम् ।
नयने असृजत् किं ते मोक्तुमश्रु चिरं विधिः ॥१३१॥
दीप्तिमन्दिरमेतत् ते केनाच्छन्नं घनावनैः ।
त्वां मत्वोषामिता रात्रिरनुमोदस्व यामि माम् ॥१३२॥
हित्वा रतिं भङ्क्तुकामो ध्यानं शम्भोर्यथात्मभूः ।
तथाऽगच्छद् बली मेघनादस्त्यक्त्वा सतीं प्रियाम् ॥१३३॥
कुलमङ्गलसंयात्रः पुष्पधन्वेव कुक्षणे ।
प्रतस्थे मेघनादोऽपि राक्षसाशालताङ्कुरः ॥१३४॥

द्वारं हि भवितव्यस्य रोद्धुं कः शक्नुयादिह ।
प्रमीला व्यलपत् साध्वी गते कामे रतिर्यथा ॥१३५॥
राक्षसान्वयहर्यक्षं दृष्ट्वा वीक्षेत कस्तव ।
कृशां कटिमतो दुःखात्त्वञ्चाप्यटसि काननम् ॥१३६।
क्षणेन कियताऽश्रूणि मृष्ट्वा रक्षोवधूः पतिम् ।
दूरे दृष्ट्वाह मधुरं समाहूयैकहस्तिनम् ॥१३७।
वंभ्रम्यसे वने केन वेद्मि दन्तिन् विलज्जितः ।
गतिं वीक्ष्य कथं मानिन् वदनं दर्शयिष्यसि ॥१३८॥
हंसि त्वं वारणं किन्तु वीरसिंहोऽस्त्रपातनैः ।
इन्द्रमैरावतपतिं प्रत्यक्षमुखयति क्रुधा ॥१३९॥
उक्त्वेत्यदारुदत् साध्वी वीक्ष्याऽऽकाशं कृताञ्जलिः ।
दुर्गे लङ्कां रक्ष दासी प्रमीला ते कृपामयि ।१४०॥
वीरवर्यं रक्ष युद्धे करुणावर्मसंवृतम् ।
त्वदाश्रितलताप्राणः प्राणित्यस्मिन्ननोकहे ॥१४१॥
पश्य स्पृशेन्न परशुरिमं किं वाधिकं ब्रुवे ।
अन्तर्यामिनि काऽन्या वा रक्षेदेनं त्वया विना ॥१४२॥
यथोह्यते समीरेण सौरभं राजमन्दिरम् ।
कैलाससदनं निन्ये व्योम्ना तत्प्रार्थना तथा ॥१४३॥
इन्द्रो भीतश्चलिततनुको वीक्ष्य तं वायुराज-
स्तामानैषीद् द्रुततरजवो दूरमुत्पातयन् सः ।
मृष्ट्वा नेत्रे विजनभवनं साप तीव्राधिदूना
श्यामं हित्वा तपनतनयारोधसीव स्वजन्यः ॥१४४॥

इति श्रीमेघनादवधे महाकाव्य उद्योगो नाम
षोडशः सर्गः ।

# देवभाषा-देवनागराक्षरयोरुत्पत्तिः

( पूर्वतोऽनुवृत्ता )

[ निबन्धकः—श्रीद्विजेन्द्रनाथ-गुहचतुर्धुरीणः । ]

इह खलु सर्वासां भाषाणां संस्कृतभाषा प्राचीनतमा तथा शीर्षस्थानीया अभवत् इति भूयसां विदुषां मतम्। केषाञ्चिन्मते सा निखिलानां भाषाणां जननी ।

कश्चित् शार्मण्यदेशीयो गुणदोषविवेककुशलः सूरिः भणत्येव—"Sanskrit is the mother of Greek, Latin and German languages, and that it has no other relation to them." (Quoted in *Hindu Superiority*, p. 173.) अन्येऽपि च—"Dr. Ballantyne is inclined to support the theory that Sanskrit is the mother of all Aryan (Indo-European) languages." (Ibid., p. 172).

Mons. Dubois महोदयस्यापि मते—"Sanskrit is the original source of all the European languages of the present day." (*Bible in India*).

ग्रीक्भाषा संस्कृतभाषायास्तनयेति W. Scott Elliot महोदयेनोच्यते "Greek is the offspring of Sanskrit." (*Historians of India*). "आटलान्टिष्" पुस्तके च एवं प्रतिपादितम् । न किं सत्यवादी श्रीमान् ।

Lord Monboddo महाभागोपि इत्थं ब्रवीति—"There is a language, still existing, and preserved among the Brāhmins of India * * * I shall be able clearly to prove that the Greek is derived from the Shanscrit." (*On the Origin and Progress of Language*, vol. vi, p. 97; Quoted in Max Müller's *Science of Language*, Vol. I, pp. 225-226, foot-note). युरोपमहादेशे Charles Wilkins महोदयेन देवभाषादेवनागराक्षरयोरुत्पत्तिः इत्थमेव वर्णिता । एकदा तु संस्कृतभाषा इह जगति सर्वैरेव सर्वत्र 'व्यावहारिकी भाषा' न्यस्ता । यथा Franz Bopp मते—"At one time Sanskrit was the

one language spoken all over the world." (*Edinburgh Review*, Vol. xxxiii, p. 43). अन्यत्रापि च दृश्यते—"Sanskrit is more perfect and copious than the Greek and the Latin and more exquisite and eloquent than either." (Ibid). स हि कोविदः तुलनामूलकभाषातत्त्व-(Comparative Philology)-शास्त्रस्य समुद्भावकः। * विदग्धप्रधानेन William Jones महोदयेन ध्वनितमेव —"Sanskrit language is of a wonderful structure, more perfect than the Greek, more copious than the Latin, and more exquisitely refined than either." (*Asiatic Researches*, Vol. I, p. 422) † प्रसिद्धप्रत्नतात्त्विक-Max Müller-महाभागस्तु प्रकाशयत्येव—"Sanskrit, the language of languages." पुनश्च प्रख्यातगुणागुणज्ञेन शार्मण्यदेशजपण्डिताग्रगण्येन Schlegel महाशयेन वर्ण्यते —"Judged by an organic standard of the principle elements of language, the Sanskrit excels in grammatical structure, and is indeed, the most perfectly developed of all idioms, not excepting Greek and Latin." (*History of Literature*, p. 106).

यथा पालिप्राकृतमहाराष्ट्रीशौरसेनीगौडीलाटीमागधीप्रभृतयो भाषाः संस्कृतप्रभवा अवरजाश्च, तद्वत् ग्रीकुलाटिन्जार्माणप्रभृतयोऽपि प्रतीच्यदेशीया प्रसिद्धा भाषाः संस्कृतप्रभवाः। जेन्दभाषाऽपि संस्कृतभाषाविकारसम्भूतैव। किं न अध्यापक Heeren एवमवदत्—"In point of fact, the Zind is derived from the Sanskrit." (*Historical Researches*, Vol. II, p. 220). यद्यपि पह्लवी देवनागरवर्णानां विकारेण सञ्जाता, तथापि जेन्दभाषा संस्कृतभाषाविकारतया आगता एव। वेदानां पठनपाठनविषये तुलनामूलकभाषातत्त्वग्रन्थ (Comparative Philology) पक्षेऽपि च आवे-

---

* "Ueber das Conjugations-system der Sanskrit Sprache in Vergleichung mit jenem der griechischen, lateinischen, persischen und germanischen Sprache." (1816). The foundation of the science of Comparative Philology was laid by the first publication of Franz Bopp's *Comparative Grammar* in 1848 A.D.

स्तानुशीलनं परमावश्यकमस्ति। तत्र न कोऽपि सन्देहः। केषाञ्चिन्मते जेन्दभाषा संस्कृतभाषाया दुहितृपदवाच्या स्यात्। वस्तुतस्तु, जेन्दावेस्ता अखिलवेदेभ्यः अतितरामेव कनीयसो इति बहूनां विदुषाम् अभिमतम्। भूयस्यः खलु परकीया भाषाः (foreign languages) संस्कृतभाषातः प्रादुर्भूताः भाषाणामासां संवादोऽपि बाहुल्येन परिलक्ष्यते। तत्र कतिपयानि उदाहरणानि—

संख्यावाचकशब्दः (Numerals)—

| Sanskrit | Avestā | Greek (Doric) | Latin | Gothic |
|---|---|---|---|---|
| Prathamā | Frat'hema | Prota | Prima | Fruma |

| Sanskrit | Latin | Greek | Lithuanian | Welsh |
|---|---|---|---|---|
| Tri | Tri | Tri | Tri | Tri |

आख्यातम्

| Sanskrit | Avestā | Greek | Latin |
|---|---|---|---|
| Dadāmi | Dadhemi | Dido-mi | Do |

तुमुन्प्रत्ययान्तशब्दः (Supines and Infinitives)—

| Sanskrit | Latin |
|---|---|
| Dātum | Datum |
| Etum | Itum |
| Stratum | Stratum |

अन्ये शब्दाः—

| Sanskrit | Avestā | Latin | Greek | Slavonians | Lithuanian |
|---|---|---|---|---|---|
| Mitra | Mithra | ... | ... | ... | ... |
| Agni | ... | Ignis | ... | Ogni | Ugnis |
| Varuṇa | ... | ... | Ouranos | ... | ... |
| Yama | Yima | ... | ... | ... | ... |
| Asura | Ahura | ... | ... | ... | ... |
| Sapta | Hapta | Septus | ... | ... | ... |
| Kratu | Khratu | ... | Kratos | ... | ... |
| Soma | Haoma | ... | ... | ... | ... |
| Sāmi (Pān. 2.1.27) | ... | Semi | ... | ... | ... |

'साम्मि त्वर्धे जुगुप्सिते'—अमरः।

| Sanskrit | Pāli | Bengali |
|---|---|---|
| Gabî | Gābî | Gābhī |
| Duhitā* | Dhītā | Jhi |

| Old French | French | Italian | Latin | Greek | Old Persian | Arabic |
|---|---|---|---|---|---|---|
| Ris | Riz | Riso | Oryza | Oryza | [as preserved in the Pushto Afhgan Wrijzey, Wrijey, Wrijzh'h]¶ | Uruzz ruzz |

Spanish or Allied forms—
Arroz    Persian Birinj    Sanskrit Vrīhi
Armenian Brinj
Avesta Birinj

तुलनामूलकभाषातत्त्वग्रन्थे (Comparative Philology) ईदृशानां परस्परसम्बद्धानां शब्दानां विचारा वर्त्तन्ते ।‡ अनुसन्धित्सापरवशैर्विपश्चिद्भिस्तत एवावगन्तव्याः—

अथ केचिदाहुर्मिश्रदेशस्य हाइरोग्लीफिक् (Hieroglyphic( इत्याभिधेया भाषालिपिश्च (written characters) देवभाषायाः प्राचीनतरा अभूत्। मैशरदेशीय (Egypt) नागरिकसभ्यता (Civilisation) भारतवर्षीयनागरिकसभ्यतायाश्च बहुकालव्यवधानं प्रभेदं प्रतीयते । नैतत् सम्यक् । प्राक् भारतवर्षीया लोकाः बहुलजनाकीर्णाः आसन्, ततस्तत्रत्याः पुरुषा महार्ण-

* (दोग्धि अपहरति सर्वस्वं मातृकत्वात् इति । यद्वा, दूरे हिता भवति)
Vide, *Calcutta Oriental Journal*, Vol. II, 3, p. 77 (*Popular Etymology*),

¶ अशेषशास्त्रज्ञानसम्पन्नप्रतीच्यप्राच्यदेशीयनानाभाषाविशारदप्रकृष्टशब्दतत्त्ववित्प्रत्नतात्त्विकप्रकृष्टप्रज्ञश्रीयुक्तअविनाशचन्द्रगुहचतुर्धुरीणेन एम्-ए, बि-एल इत्युपाधिमण्डितेन व्यवहाराभिज्ञेन पितृदेवमहाभागेन उक्तविषये लिखितः प्रबन्धो द्रष्टव्यः ।

( "नव्यभारत" इत्याख्याते मासिकपत्रे, २८शखण्डे. १३१८ वङ्गाब्दे, फाल्गुने, ६२२-६२३ पत्रद्वयं निरीक्षणीयम् ) ।

‡ *Grundriss der indo-arischen philologie und Altertumskunde*" (Encyslopædia of Indo-aryan Philology & Archæology—1987, Ed. by Dr. Georg Bühler, afterwards, F. Kielhorn, now edited by H Lüders & J. Wackernagel). Christian Lassen's "*Indische Altertumskunde*" (1843-1862).

वादि उल्लङ्घ्य मिश्रदेशं गत्वा इथियोपियान् (Ethiopians) जाता प्राप्ता एव। तावदेव मिश्रदेशीयमनुष्याः आरबभूमिभागं, केचित्तु* पल्लीस्थानं (Palestine), अपरेऽपि ग्रीसभूखण्डं प्रस्थिताः। कथं तर्हि मिश्रदेशीया मानवाः भारतीयेभ्यः प्राचीनतराः भवेयुः? पुनश्च, बेबिलनमेषपटेमिया (Babylon-Meso-potamia) प्रभृतयो देशाः भारतवर्षीयसभ्यतापेक्षायाः प्राचीनतरा भवन्ति वा? न कथमपि।

संस्कृतभाषाया लेखनप्रणाली वैदिकयुगादेव प्रचलिताऽस्ति। उक्तञ्च पण्डितप्रवर S. K. Varma महाभागेन—"I feel no hesitation in saying that there are words and phrases occurring in the Saṃhitās of the Vedas, in the *Brahmaṇas* and in the sutra works, which leave no doubt as to the use of the written characters in ancient India. It may be confidently asserted that the systematic treatises in prose which abounded at and long before the time of Paṇini could never have been composed without the help of writing." Oriental Lectures, Balliol College, Oxford, a paper read before the International Congress of Orientalists, Leyden, 1883, on "The use of Writing in Ancient India." *Acts Du Sixieum Congres International Des Orientalistes tenuen 1883 a Leide*, p. 305). याज्ञवल्क्यनारदादयो मुनयः लेख्यपत्राणि (written documents) ऊचुः। कात्यायनोऽपि तद्वत्—"यत्रपवन्वमपत्रा लेखकः सहसादिभिः"। बहुयुगव्यापी पुनः पुनः सामाजिकसंघर्षो धर्मसंस्कारश्च ततः वैदेशिकाक्रमणेऽपि च संस्कृतचर्चा किञ्चिन्मात्रमपि न स्खलितं शिथिलतां वा प्राप्ता। Max Müller वर्णयति स्म—"Yet such is the marvellous continuity between the past and the present in India, that inspite of repeated social convulsions, religious reforms and foreign invasions, Sanskrit

* Pococke महोदयस्य मते—"Its other name, Palestine, is derived from the term "Pallistan" (*India in Greece*, p. 214). अस्य च नामान्तरं—"प्यालेष्टाइन्" इति पल्लीस्थानत एव निष्पन्नम्।

may be said to be still the only language that is spoken over the whole extent of that vast country." (*Idia, What can it teach us* ? pp. 78-79). पुनश्च—"Even at the present moment, after a century of English rule and English teaching, I believe that Sanskrit is more widely understood in India than Latin was in Europe at the time of Dante." (Ibid).

'संस्कृतभाषा मृता' इत्येवं वक्तुं कः शक्नोति ? प्रत्युत, नितरां भारत-विद्वेषकसंस्कृतभाषानभिज्ञनिरक्षरस्वजातिस्वधर्मविहीनमहापातकतथाकथिता-भिजात्यसम्प्रदायमूढजनमुखराणां मुखरवविशेषः 'सा मृतेति' क्वचिदेव श्रूयते। परन्तु, अध्यापक M. Winternitz महोदयस्य मतेऽपि तावत्तु कदापि न—"Sanskrit is not a "dead" language even to-day. There are still at the present day a number of Sanskrt periodicals in India, and topics of the day are discussed in Sanskrit pamphlets. Also, the Mahābhārata is still today read aloud publicly * * * *

To this very day poetry is still composed and works are still written in Sanskrt, and it is the language in which Indian scholars even now converse upon scientific questions. Sanskrit at the least plays the same part in India still as Latin in the Middle Ages in Europe, or as Hebrew with the Jews." (*History of Indian Literature*, vol. I, p. 45).

देवभाषां (संस्कृतभाषां) समालोक्य महापुरुषः श्रीमान् मोहनदासकरमचाँदगान्धी जलभृतमेघस्तनितगम्भीरमांसलभारती-निर्घोषेण विवृणोति—"A Hindu's education must be regarded as inadequate without a knowledge of the rudiments of Sanskrit. Hinduism would be extinct without Sanskrit learning and Sanskrit scholarship being cultivated on an adequate scale." (*Young India*, 1924-1926, Ed. by S. Ganesan, Madras, p. 1306). केनचित् प्राच्यदेशजविदुपा संस्कृत-भाषायाः प्रगाढभक्तिजनकतया अधस्तात् पङ्क्तिभिः उपन्यस्तम्—"No country except India and no language except the Sanskrit can boast of a possession so ancient or venerable. No nation

except the Hindus can stand before the world with such a sacred heirloom in its possession, unapproachable in grandeur and infinitely above all in glory. The Vedas stand alone in their solitary splendour, serving as a beacon of divine light for the onward march of humanity." (Hindu *Superiority*, p. 180). इति शम् ।

---

वररुचिविरचिता

# लिङ्गवृत्तिः

स्तूपालक्तककर्पाससूर्यकूर्पाससारथितरङ्गाः ।
अलकसमुद्गवराटकनूपुरकङ्कणाः पुंसि ॥६०॥

एते शब्दाः पुंसि भवन्ति । स्तूपो राशिः । अलक्तकः पादादिरागद्रव्यम् । कर्पासः सूत्रद्रव्यम् । सूर्यो रविः । कूर्पासः कञ्चुकम् । सारथिः सूतः । तरङ्गः कल्लोलः । अलकः केशरचना । समुद्गः सम्पुटकः । वराटः कपर्दकः । नूपुरः पदाभरणम् । कङ्कणः करभूषणम् ।

सैन्यायुधमङ्गलनगरवृन्तहरितालबिम्बमुकुटकुड्मलानि । विद्धि *तृतीयप्रकृतौ

सैन्यादीनि तृतीयप्रकृतौ* जानीहि । सैन्यं बलम् । आयुधमस्त्रम् । मङ्गलं प्रशस्तम् । वृन्तं प्रसवबन्धनम् । फलं मूलम् । हरितालं प्रसिद्धमेव । बिम्बं प्रतिरूपम् । मुकुटं शिरोभूषणम् । कुड्मलं कलिका ।

---

* 'तृतीयाप्रकृतौ' इत्यादर्शे ।

## पुंस्यवसथस्तथोद्गीथः* ॥६१॥

अवसथ-उद्गीथ*शब्दौ पुंसि भवतः। अयमवसथः परिव्राजकः। अयमुद्गीथः* साम।

## दर्पणमृदङ्गजठराः पुंस्युक्ताः कुन्तकुतपधूमाश्च।

एते शब्दाः पुंस्युक्ताः। अयं दर्पणः आदर्शः। मृदङ्गो मुरुजः। जठरः कुक्षिः। कुन्तः प्राशः। कुतपः शस्त्रम्, कालविशेषश्च[1]। धूमो बह्निसम्भवः।

## व्रातह्रददण्डाङ्कुशकटाक्षसंग्रामविटपाः पुंसि† ॥६२॥

एते शब्दाः पुंसि भवन्ति। अयं व्रातः सङ्घः। ह्रदः सरः। दण्ड आकुडा लकुटश्च। अङ्कुशः शृणिः। कटाक्षः अपाङ्गदृष्टिः। संग्रामो युद्धम। विटपो लतागुल्मः।

## पामा स्त्रियां निगदिता‡ पुंसि वेमा वै कुणपकूर्चौ च।

पामा-शब्दः स्त्रियां कथितः। इयं पामा विचर्चिका। कच्छुः। वेमादयः पुंसि। अयं वेमा निष्पन्नवस्त्रवेष्टनदण्डः। कुणपो मृतशरीरम्। कूर्चः श्मश्रु।

## कन्दरयूथप्रोथाश्च वंशरेणुध्वजाश्चैव§ ॥६३॥

कन्दरादयः शब्दाः पुंसि भवन्ति। अयं कन्दरः पर्वतस्यैकदेशः।

---

* उद्गाथ इत्यादर्श।

[1] दिवसस्याष्टमे भागे मन्दीभवति भास्करः।
स कालः कुतपो ज्ञेयः पितॄणामन्नमव्ययम्॥

† विटपाश्च—मु० पा० ‡ विगदिता—आ० § ध्वजाश्च—आ०

यूथः सङ्घातः। प्रोथः अश्वनासिकाविवरयोरुपरिदेशः। वंशो वेणुः। रेणुः पांशुः। ध्वजः केतुः।

**केदारखण्डप्रशमाश्च पुंसि नित्यं कपाटश्च।**

एते पुंसि भवन्ति। अयं केदारः क्षेत्रम्। खण्डः इक्षुविकारः। प्रशमो धान्यच्छेदनः। कपाटो द्वारि पिधानम्।

**हेलाकाञ्चीलालासुधायुधाः स्युः स्त्रियां प्रवेणी च ॥६४॥**

एते स्त्रियां भवन्ति। इयं हेला अनादरः। काञ्ची मेखला। लाला श्लेष्मविकारः। सुधा अमृतम्। युधा युद्धम्। प्रवेणी केशरचना।

**हानिग्लानिवापीविपणीशार्यश्च स्वाहा च।**

एते स्त्रियां भवन्ति। इयं हानिरपचयः। ग्लानिरशक्तिः। वापी पुष्करिणी। विपणी पण्यवीथिका। [ शाटी कटिप्रावरणम्। ] शारी पटोलिका। स्वाहा मन्त्रावसानम्।

**लक्ष्मीमनःशिलोपानहः स्त्रियां स्थाण्वणुज्वराः पुंसि ॥६५॥**

लक्ष्म्यादयः स्त्रियां भवन्ति। इयं लक्ष्मीः श्रीः। मनःशिला धातु-द्रव्यम्। उपानत् पत्रद्वी। स्थाण्वादयः पुंसि भवन्ति। अयं स्थाणुः शिवः कीलश्च। अणुः स्वल्पः। ज्वरो रोगः।

**पुंसि स्यात् प्राग्वंशस्त्रिषु लिङ्गेषु शृङ्खलं विद्धि।**

प्राग्वंशशब्दः पुंसि भवति। अयं प्राग्वंशो यज्ञकुटी। शृङ्खलं त्रिषु-लिङ्गेषु जानीहि। अयं शृङ्खलः। इदं शृङ्खलम्। इयं शृङ्खला।

स्थाल्यादीनां स्त्रीत्वं भवति। इयं स्थाली रन्धनभाण्डम्। सभा गोष्ठी। जरा वृद्धत्वम्। स्थली उच्चनिर्जलो देशः। वीची तरङ्गः। छविर्लावण्यम्। कटिः श्रोणिः। मञ्जरी वृक्षस्य। वल्ली लता।

**शिल्पच्छर्दिरन्नसमलमरकतपलालकृच्छ्राणि*।**
**मन्दिररिक्थे† नपुंसके मन्दुरां स्त्रियां विद्धि ॥७०॥**

एते नपुंसके भवन्ति। इदं शिल्पं कलादिकं कर्म। छर्दिर्वान्तिः। अन्नं भक्ष्यम्। समलममेध्यम्। मरकतं रत्नम्। पलालं धान्यादीनाम्। कृच्छ्रं कष्टम्। मन्दिरं गृहम्। ‡रिक्थं द्रव्यम्। मन्दुराशब्दं स्त्रियां जानीहि। इयं मन्दुरा वाजिशाला।

**कल्ककृमिमुन्यङ्गारवप्रग्रहहोमर्षियक्ष्मरेफाः।**
**मण्डकरण्डवरण्डाश्च पुंसि शपथाम्बरीषौ च ॥७१॥**

एते पुंसि भवन्ति अयं कल्कः पापं दम्भश्च। कृमिः कीटः। मुनिस्तपस्वी। अङ्गारः काष्ठस्य। वप्रः प्राकारः केदारः क्षेत्रम्। ग्रह उपरागः। होमो मन्त्राहुतिः। ऋषिस्तापसः। यक्ष्मा रोगः। रेफो वर्णविशेषः। मण्डोऽन्नविकारः। करण्डः कुशाभाण्डः। वरण्डः काष्ठविशेषः। शपथः प्रत्ययकरणम्। अम्बरीषो भ्राष्ट्रः।

क्रमशः

---

* शिल्पं छर्दि रत्नवनं समलं—मु० † मक्थं—श्रा०
‡ मक्थम—श्रा०

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| October, 1935. | १८५७-शकीये आश्विने<br>१८श-वर्षस्य षष्ठ-संख्या | Vol. XVIII No. 6 |


## मतिमञ्जरी

पराधीनजातीनां प्रायेण द्वयी परिस्थितिः परिदृश्यते। एकतस्तावदस्माकं प्राचीनसमाचारादिकं सर्वमतिमात्रमकिञ्चित्करं वर्वरोचितमिदानीन्तनजीवननिर्वहणे लेशतोऽपि सामर्थ्यं न बिभर्ति, अन्यथा कथमस्माकमीदृशी समवस्था समुद्भवेदिति मन्यमाना वहवः पितृपितामहादिनिषेवितं मार्गं दूरतः परिहरन्तः काममभिनवामेव विदेशीयालोकसम्पातसमुज्ज्वलां सरणिमनुसरन्ति। अपरे पुनः, न खलु विजितविजेत्रोस्तुल्यकक्षत्वं स्वप्नेऽपि नाम सम्भवति, विजितानां राष्ट्रगतं स्वातन्त्र्यं लेशतोऽपि नावशिष्यते, विजितानां राजनीतितन्त्रानुशीलनं पङ्गोर्गिरिलङ्घनप्रयासमनुहरति, अत एव शून्यस्य जीवितस्य परिपूरणार्थं सर्वथा साम्प्रतिकसमवस्थामविगणय्यैव परम्परागतः समाचार एव परिपालनीयः, पूर्वपुरुषक्षुण्ण एव मार्गोऽनुसरणीयः, सर्वमप्याधुनिकं ज्ञानविज्ञानशिल्पादिकं विषवद् वर्जनीयमिति समुद्घोषयन्ति। विवेकिनः पुनः कूपमण्डूकतामपि न कामयन्ते नापि वैदेशिकाचाराद्यनले शलभायितुमीहन्ते, परं स्वदेशीयसंस्कृतौ प्रत्ययमादधानाः पूर्वपुरुष-

समाचरितव्रतनियमादिषु श्रद्दधानाः स्वदेशीयमतीतवृत्तान्तं समालोचयन्ति, पूर्वजोपनिबद्धानि शास्त्राणि समनुशीलयन्ति, पूर्वपुरुषक्षुण्णं मार्गं विचरन्ति, साम्प्रतिकविज्ञानप्रभावसमुद्भावितनवनवानपि विषयान स्वायत्तीकुर्वन्ति, एवं सर्वतः सारं समाहरन्तः शनैः शनैरुन्नतिसोपानमधिरोढुं समीहन्ते। अत एव पूर्ववृत्तान्तस्य सम्यगनुशीलनमवश्यमेव विधातव्यं भारतवर्षीयैरित्युक्तं महीशूरराष्ट्रस्य प्रधानप्राड्विवाकेन 'रील'महोदयेन 'मीथिक्सोसाइटी'समाख्यस्य संस्थानस्य वार्षिकेऽधिवेशने। तस्यातिमनोरमस्य भाषणस्यायं निष्कर्षः—

प्रथमं तावदिदमेव परं सन्तोषस्थानमस्माकं यत पुरावृत्तसंस्थाया अस्या ये तावद्विषयाः प्रधानतयाऽनुशीलनीयत्वेन निर्दिष्टास्तेष्वेवेदमन्यतमं स्थापत्यं नाम। स्थापत्यं तावद् गौरवेणेतिहासमप्यतिशेते। न खलु इतिहासे तथ्यानां समावेशः समुपलभ्यते, परं तत्तत्समयमधिकृत्यैति-हासिकस्य मनसि यो यो भावः समुत्पन्नस्तस्यैवोपवर्णनं सन्दृश्यते। ऐतिहासिकेऽपि मानुष्यकसुलभा भ्रमप्रमादविप्रलिप्साकरणापाटवादयो दोषा न किल न विद्यन्ते। अत एवेतिहासाध्ययनावसरे सावधानेन मनसैति-हासिकस्य भावः परीक्षणीयः। स्थापत्यं तु सर्वथा विभिन्नमेवेतिहासात। न हि प्रस्तरफलकादीनां प्रत्नवस्तूनां विलसति मानुषी भावः यथा मनुजजनं विज्ञापयेद्वा विप्रलभेत वा। ते हि स्वनिष्ठं सत्यमेव प्रतिपादयन्तः समवस्थिताः। स्थापत्यविशारदास्तु स्वकपोलकल्पितान विषयान बहुश आविष्कुर्वन्तीति तेषां दूषणमेव।

यदा तावद्व्यतीते शतके समागताऽहं भारतं वर्षम्, तदानीं प्राचीनशिल्प-शास्त्रात् प्राचीनेतिवृत्ताच्च पराङ्मुखाण्येवासन् बलवदपि शिक्षितानां चेतांसि। दक्षिणापथं परिभ्रमतो मे बहुश्रुतानामपि जनानां प्रथिततमदेवायतनविषये प्रख्याततमप्रासादविषये चाज्ञातासन्दर्शनेन विस्मयविमूढमासीन्मानसम्। सुप्रसिद्धदेवालयाध्यक्षा अपि कदा तावत प्रतिष्ठितानीमानि देवायतनानि, केन प्रतिष्ठितानि, केन परिरक्षणोपयोगिद्रव्येण योजितानि, केन संस्कृतानि

इत्येवं पृष्टास्तत्रत्यं स्वीयमज्ञत्वं वाऽल्पज्ञत्वं वा प्रकटयामासुः। अतोऽपि शोचनीयतरमेतत् यत्ते स्वेषु समर्पितभाराणां देवायतनानां योगक्षेमवहने नितान्तत एवौदासीन्यमवालम्बन्त। बहुशः खलु ते सुमनोहरं प्राचीनं मण्डपं भूमिसात् कारयित्वा तस्य स्थान आधुनिकत्वेन सम्भाव्यमानं किमपि मन्दिरादिकं निर्मापितवन्तः। अनेकशः खलु शिलाफलके समुत्कीर्णा लेखा नामशेषतां नीयन्ते, न च तेषामालोकचित्रग्रहणे लेशतोऽपि प्रयस्यते। कतिचिदैतिहासिकशिलालिपय इत्थमेव प्रनष्टाः, यत्र राजपुरुषैः प्रसार्य पाणी निरोधो विहितस्तत्रैव ताः परिरक्षिताः।

अद्यत्वे पुनर्न केवलं भारते वर्षे, पृथिव्याः सर्वत्रैव प्राचीनमण्डपादिषु सविशेषः समादरः परिलक्ष्यते। सिन्धूपत्यका-मध्यैश्या-मध्यामेरिकाप्रभृतिषु तेषु तेषु भूभागेष्वतिमात्रं विचित्राणि खननकर्माणि संसाधितानि, तेभ्यश्चात्यद्भुतानि तथ्यानि समधिगतानि। सभ्यता संस्कृतिश्चास्माभिर्यावत् पुराणत्वेन सम्भाविताऽऽसीत् ततोऽपि परःशतेभ्यः परःसहस्रेभ्यश्च संवत्सरेभ्यः पूर्वं तयोरभूत् समुद्भव इत्यवगतमस्माभिः। किं बहुना प्राचीनभास्कर्यादिसमालोचननिष्णाता अन्तरान्तरा प्रायेण ज्योतिर्गणितादिप्रसिद्धसंख्याशब्देन संव्यवहरन्ति।

चीनेषु मिशरेषु च प्राधान्येन स्थापत्यादिसन्दर्शनेन प्राचीनसंस्कृतेः सत्त्वादिकमूहितुं शक्यते इत्येवासीन्मतं पूर्वेषामैतिहासिकानाम्। अद्यत्वे तु सर्वथा भ्रान्तमेवेदमभिमतमिति प्रतिपन्नं सर्वैः। सहस्रवत्सरेभ्यः पूर्ववर्तिनि भुवो वृत्तान्ते चेद्विनिक्षिप्यते चक्षुः, सर्वेषामेव भूमण्डलवर्तिनां मनुजानां बहुविषयकमैक्यमेव नयनपथमवतरेत्। आर्यसभ्यतार्यसंस्कृतिश्च बहुतर एव भूभागे प्रसारितासीत्। न खलु पूर्वमीदृशार्यप्रभावप्रसारे प्रत्ययोऽभूत् प्रामाणिकानाम्, इदानीं पुनः प्रतिदिनमेव प्राचीनदेवालयादिभ्यः खननादिनाऽहमहमिकया प्रादुर्भूतानि प्रमाणानि बलादनिच्छतोऽपि प्रत्याययन्ति।

बहु किल विज्ञेयमस्त्यस्माकं प्राचीनमण्डपादिनिर्माणशास्त्रतः।

विज्ञानञ्च तदखिलं पारमार्थिकं ज्ञानमिव विनयमेवादधाति। वर्तमान एवास्माकं बहुमानः, वर्तमान एवास्माकं गौरवबुद्धिः, परमतीतस्य समुत्कर्षस्य पुरतः सर्वथा निष्प्रभत्वमेवापद्यते वर्तमानं सर्वमेव। अनेकानि वस्तूनि मनुजजातिसाधारणान्येव, अत एव सर्वथा परिहरणीय एव स्वगौरवाभिमानः। जीवितविषये च समुदारैव दृष्टिर्विधेया। प्राचीनतमेऽपि समये तासां तासां जातीनां मध्ये व्यवहारादिकं प्रवृत्तमासीदिति ह्यवगम्यते शिल्पशास्त्रतः।

न, खल्वेतावता शुष्कैः सार्वजनीनैरस्माभिर्भवितव्यमिति बोद्धव्यं भवद्भिः। सर्वसाधारणमैत्र्यादिसमुन्मेषेण तत्तज्जातिगतानि वैलक्षण्यानि कालक्रमेण क्षीणतामापादयितुं शक्ष्येरन्, परं तथाविधेन व्यापारेण जातिगतवैशिष्ट्यस्य मूले कुठारश्चेत् समर्प्यते तर्हि किं वा ततः शोचनीयतरमापद्येत। सर्वात्मना जातिगतवैशिष्ट्यस्य संरक्षणमेवास्माकं परो धर्मः। न खलु मदार्यैतदपेक्ष्यते, परं परमेश्वरेण मनुजजनस्य परिचर्यार्थं ये तावदुत्कर्षा अस्मभ्यं प्रसादीकृतास्तेषां संरक्षणमवश्यमेव विधातव्यमित्यावश्यकमेतत्।

अहञ्चेद् भारतीयोऽभविष्यम् सर्वथा भारतवर्षस्य गौरवेण, भारतस्य माहात्म्येन, भारतस्य वैशिष्ट्येन, भारतस्य शिल्पेन, भारतस्य स्थापत्येन, भारतस्य विद्यया च गौरवान्वितमात्मानमाकलयिष्यं गर्वं च श्लाघां चान्वभविष्यम्।

यथा किलास्या भारतभूमेः पुत्रा दुहितरश्च पूजनीयाया भजनीयायाश्च जन्मभूमेरितिवृत्तं च वैशिष्ट्यं चावबुध्येरन्, सम्यक्तया च बहु मन्येरंस्तदर्थं भारतभूमेरितिवृत्तभास्वतः समन्ततः प्रसारिकुज्झटिकाजालस्यापसारणाय सर्वात्मना प्रयतितव्यं सर्वैरेव भारतवर्षीयैः।

महान् खलु देशो भारतवर्षम्। अत्र चान्तर्भवन्ति बहवः प्रदेशा जातयश्च, परं किं नश्छिन्नं तावता। न खलु भारतवर्षे भक्तिः स्वप्रदेशभक्त्या स्वदेशप्रीत्या च विसंवादमासादयति। न खलु महीशूरीय इति कस्यापि भारतीयत्वं हीयेत। स्वप्रदेशभक्तिमूलैव समग्रभारतवर्षे भक्तिः फलं प्रसुवीत।

---

विदितमेवैतत् प्रायेण संस्कृभाषाप्रणयिनामशेषाणाम् यत् पाश्चात्त्यैः प्रत्न-तत्त्वविशारदैः प्राचीनेऽर्वाचीने च काले समाकृष्यमाणाः कालिदासादयो भारतीयमहाविप्रकाण्डा लोकान्तरेऽपि जर्जरशरीराः कण्ठगतप्राणा वर्तन्ते। एतत् पुनरिदानीं परमं प्रमोदस्थानमस्माकं यद् भारतवर्षीयैरपि विपश्चिद्भिः पाश्चात्त्याः कविप्रवरा इतस्ततः समाकृष्यन्ते। तथाहि पाश्चात्त्येषु कविप्रवरेषु यस्तावत् समस्तैरेव श्रेष्ठतया स्वीक्रियते सर्वैः स एव कविकुलचूडामणिः शेक्सपीयरमहोदयः खृस्तीयषोडशशतकतः पूर्वमेव समुत्पन्नः कालिदासादि-कविप्रजापतीनां कृतिषु दत्तावधानः समुपजातकविभावः प्रणिनाय शाकुन्त-लादिच्छायायोनीनि ह्यामलेट् प्रभृतीनि काव्यरत्नानीत्याशयिष्ट माद्राजपत्त-नस्थः कश्चन समुद्रलङ्घनसंलब्धविचक्षणभावः पुरुषधौरेयः। इयन्तं कालं यावन्नाव उपरि शकटमासीदिदानीं शकटस्योपरि नौर्दृश्यते।

---

पुरातत्त्वविद्भिः प्रतिदिनमेवाश्रुतचराणि तथ्यानि समुद्भाव्यन्ते। तेषां विचारशैली श्रावणसंख्यायां प्रकाशितात् 'पाँचीरजकिनी'प्रबन्धत एव स्फुटी-भवति। पुरातत्त्वविषये च सर्वथा शार्मण्यानामेव प्राधान्यमित्यवश्यमेवा-भ्युपगन्तव्यम्। रटन्त्वन्ते नामैतिहासिकाः खृस्तजन्मत ऊनविंशतितमे शतके धूमशकटस्य प्रादुर्भावम्, केनचन शार्मण्यसुधिया पुनः खृस्ताविर्भावतः षोडशशतके समधिगतजन्मनः शेक्सपीयरमहोदयस्य धूमशकटेन साकं निबिडः परिचयः प्रमाणोपन्यासपुरःसरं प्रतिपादितः। तथाहि निदाघ-निशीथेषु कोलाहलमयानि यन्त्राणि निद्रालूंश्च नागरिकानधिकृत्योक्तम्—

> Thou......in complete steel
> Revisit'st thus the glimpses of the moon,
> Making night hideous.
>
> *Hamlet* i. 4

"आपादचूडमयोमयस्त्वं निशां भीषणतामापादयन् पुनरपि क्षणदृष्टनष्टं चन्द्रमसमुपसर्पसि।"

पुरातनानि यन्त्राणीदानीं बाहुल्येन क्रीयन्ते धनिभिः। तेषां च चालने क्लेश इत्थमुपवर्णितः—

Which much enforced shows a hasty spark,
And straight is cold again.

*Julius Caesar*, iv. 3.

"यत् किल पुनः पुनर्बलात् प्रणुन्नं मुहूर्तकं शिखामेकां प्रदर्शयति पुनरपि च जडिमानं भजते।"

अतिमात्रं परिचालितस्य यन्त्रस्याकाण्डे निश्चलतयाऽवस्थितिमधिकृत्योक्तम्—

So quick bright things come to confusion.

*Midsummer Night's Dream*, i.1.

"एवमेव त्वरिततरं समुज्ज्वलानि वस्तूनि विपर्यासमायान्ति।"

यच्च धूमशकटाधिरूढा आरक्षिकपुरुषाः पश्यतोहराननुसरन्ति तस्यापि वर्णनमुपलभ्यते—

When night-dogs run, all sorts of deer are chased.

*The Merry Wives of Windsor* v. 5.

"यदा नैशसारमेया धावन्ति सर्वविधा मृगा ग्रहणमुपयान्ति।"

यन्त्राणामतितैलावसेक इत्थं विनिन्द्यते—

The rankest compound of villainous smell that ever offended nostril.

*The Merry Wives* iii. 5

"घ्राणोद्वेजकेषु दुष्टगन्धेषु सर्वथा कटुतममेव।"

चतुष्पथे सन्निवेशितानां रथ्यारक्षिणाम् उत्क्रान्तमर्यादान् धूमशाकटिकान् प्रति समाचरणमधिकृत्योक्तम्—

.........All his faults observed,

Set in a note-book,learned and conned by rote.

*Julius Caesar* iv. 3

'तस्य सर्वे दोषाः परिलक्षिताः, दोषनिर्देशपुस्तके सन्निवेशिताः, यत्नेन च कण्ठे कृताः।"

धूमशकटयान्त्रिकस्तावदित्थमुपवर्णितः—

Another lean, unwashed artificer.

*King John* i. 2

"अपरः कृशोऽनिर्वर्तितस्नानः शिल्पी ।"

धूमशकटसमाहतः पादचर्यारोग्यशालायां शयान इत्थं प्रलपति—

Those clamorous harbingers of blood and death.

*Macbeth*, v. 6.

"शोणितमोक्षणस्य मरणस्य च कोलाहलकारिणोऽग्रदूताः ।"

चक्रनेमिपरिधानीयगतः क्लेशोऽपि कटाक्षितः—

Let me not burst.

*Macbeth*, i. 4

"नाहं स्फुटेयमिति ।"

अपि च

My high-blown pride
At length broke under me.........
Vain pump (some foolish emendations
prefer 'pomp' )...I hate ye.

*Henry VIII*, iii. 2

"अन्ततश्च भग्नो मेऽत्यन्तसमुच्छ्रितोऽभिमानः । वृथाभस्त्रे [कैश्चिन्मूर्खैः शोधकैरत्र pomp इति पठ्यते] द्वेष्मि त्वाम् ।"

इश्यनां तावच्छोभनपार्थिवतैलस्य विज्ञापनम्—

A rarer spirit never
Did steer humanity.
*Antony and Cleopatra* v, 1.

"न खलु कदापीतो दुर्लभतरेण स्नेहेन चालितपूर्वा मनुजाः ।"

The spirit of time shall teach thee speed.

*King John* iv. 2

"कालस्य रसस्त्वां जवं शिक्षयिष्यति ।"

पार्थिवतैलाशये यदा सलिलस्य सद्भावस्तदा यन्त्रं शब्दायते—

These foolish drops do something drown my mainly spirit.

*Merchant of Venice*, ii. 3.

"इमे मूढा बिन्दवो निमज्जयन्तीव मे प्राधानिकं रसम् ।"

दृश्यतां तावद्धूमशकटोपकरणानां विज्ञापनम्—

You have the start of me.........
Use me as you will.

*Merry Wives of Windsor* v. 5

"यथेच्छं मामुपयुङ्क्ष्व ।"

बहूनां शकटानां संमर्देन यदा रथ्यायां शकटा निश्चलप्राया अवतिष्ठन्ते, तादृशीं समवस्थां मनसि निधायोक्तम्—

"Why, one that rode to his execution
Could never go so slow." *Cymbeline*, iii. 2

"अहो ! वध्यभूमिं प्रचलितोऽपि नर एवं शनैर्न गच्छेत् ।"

शकटादीन् नागरिकरीत्या महताडम्बरेण परिचालयतो रथ्यारक्षिण उद्दिश्योक्तम्—

Look with what courteous action
It waves you on. *Hamlet*, i. 2.

"दृश्यताम् कथं दाक्षिण्येन त्वां दूरतः सञ्चालयति ।"

धूमशकटेऽतिमात्रं बद्धपक्षपातेन केनचन निर्निशाकरासु विभावरीषु सह सखिजनेन परिभ्रमता स्वशकटसम्पतितं ज्योतिरित्थमभिष्टूयते—

Twenty glow-worms shall our lanterns be,
To guide our measures round about the tree.—

*Merry Wives* v. 5.

"वृक्षस्य समन्तादस्माकं गतेः परिचालनाय विंशतिः खद्योताः प्रदीपायेरन् ।"

निशायां पर्यटद्भ्यो धूमशकटेभ्य आलोकनिदर्शनमेवमुपवर्ण्यते—

(Line clear—Pass)

The ground is tawny,

Yes, with a green eye in't.

*Tempest*, ii. 1.

(Danger—Stop).

Making the green one red.

*Macbeth* ii. 2.

( निराबाधः, पन्थाः—गम्यताम् )

पिशङ्गी भूमिः, वाढम्, तत्र च विलसति हरितं नयनम् ।

( बाधा—स्थीयताम् )

"हरितं लोहिताययन् ।"

हरितस्य लोहितस्य चालोकस्य शेक्सपीयरस्य समयेऽपि तात्पर्यं-साम्प्रतिकमिवासीत् ।

एतैरेवोद्धृतरंशैर्विस्पष्टमेव प्रतीयते शेक्सपीयरमहाभागस्य धूमशाकटिकत्वम् । किञ्च पादचारिपु तस्य भावपर्यालोचनयात्र लेशतोऽपि संशयो नावशिष्यते ।

You are not the dust which the rude wind

Blows into your face

*King Lear*, v. 2.

"न खलु त्वं तद्रजो यत् किल दुर्दान्तोऽनिलो विकिरति ते वदने ।"

यथा किल विपश्चिताऽध्यापकप्रवरेण सावेगमुच्यते—न खल्विदं सन्दिग्धतमस्यापि चेतसि न प्रभवेत् प्रत्ययमाधातुम् ।

उपसंहार एतदेव वक्तव्यं यत् सत्स्वप्यानुषङ्गिकेषु दोषजातेषु

Though in this city he
Hath widow'd and un-childed many a one
Which to this hour bewail the injury,
Yet he shall have a noble memory.

*Coriolanus* v. 5.

"यद्यपि वर्तन्त एवात्र नगरे बहवस्तथाविधाः प्रमदा याः किलानेन वैधव्यं

प्रतिपादिताः, सन्तानैश्च वियोजिता अद्यापि परिदेवयन्ते तत्तद्वियोगम्, तथाप्युदात्ततमेन स्मृतिचिह्नेन संयोजनीय एवायम्।"

स हि निःसंशयं शेक्सपीयरमहाभागस्य प्रियपात्राणां मञ्जुले महति च गणेऽन्तर्भवति।

---

# मेघनादवधम्

सप्तदशः सर्गः

[ निबन्धकः—श्रीनित्यगोपालविद्याविनोदशर्मा ]

सौमित्रिरुद्यानमदो विहाय रामस्य यातः शिबिरं सुशीघ्रम्।
मृगेन्द्रमालोक्य यथा मृगावि-स्तथाऽगमद् यज्ञगृहं सशत्रुम् ॥१॥
ग्रहीतुकामोऽस्त्रगृहेऽतिशातं भीमे मृधे शस्त्रवरं प्रवीरः।
ययौ यतो राघव आस्त तत्र महायशाः शौर्ययशःकिरीटी ॥२॥
नत्वा सुधी रामपदे सभक्तिर्विभीषणं मित्रवरं बभाषे।
तवाऽऽशिषा पूर्णमनोरथोऽयं श्रीपादपद्माश्च नतप्रदासः ॥३॥
स्मरन पदोः काननमध्ययातोऽयक्षि प्रभो स्वर्णगृहे भवानीम्।
परीक्षितुं दासमिमं कतीशा ततान माया गदितुं न शक्तः ॥४॥
दौवारिकं भूतपतिं त्वपश्यं द्वारे ददौ वर्त्म विना रणं मे।
पुण्येन ते देव यथा महाहिः पलायते भेषजनष्टवीर्यः ॥५॥
वनात्ततः सिंह इयाय गर्जन् निरस्तवानेनमहं तदैव।
वात्योत्थिता भैरवनिस्वनेन दावेन देशश्च विदह्यते स्म ॥६॥
दग्धं वनं तेन शशाम वह्नि-राराद्गच्छत् पवनः क्षणेन।
ऐक्षे पुरः स्वर्गललामभूता देवाङ्गनाः कुञ्जविहारमत्ताः ॥७॥
बद्धाञ्जलिस्ता अयजे वरश्चायाचे ततः प्रस्थितिमाशु दूरम्।
गतासु देवीषु ततः समीप उदज्वलन्मन्दिरमेकमग्र्यम् ॥८॥
सरोऽवगाह्यार्चितवान भवानीमिन्दीवरैर्भक्तिविशुद्धचेताः।
साक्षाद् भवित्री वरदा कृपार्द्रा प्राचाच्च तुष्टा मधुवर्षिवाग्भिः ॥९॥

भो लक्ष्मणाद्यामरवृन्दमासीत्त्वयि प्रसन्नं प्रहितञ्च शस्त्रम् ।
मरुत्वताऽगच्छमहं स्वयञ्च त्वत्कार्यसिद्ध्यै गिरिशेन दिष्टा ॥१०॥
दिव्यास्त्रमादाय विभीषणेन बलिन् प्रतिष्ठस्व निकुम्भिलायै ।
अर्च्चन्तमग्निं सहसा विगृह्य व्यापादयेन्द्रारिमतुल्यवीर्यम् ॥११॥
मायावृतो मे भयमुक्त मृच्छ किमिच्छसि ब्रूहि यशस्विमुख्य ।
प्रभातकल्पा रजनी नरेन्द्र कुर्विन्द्रजिन्नाशविधान आज्ञाम् ॥१२॥
उवाच रामः प्रसमीक्ष्य दूतं यमस्य दूराद् महिषप्रतीकम् ।
प्रयान्ति भीताः सुरदैत्यलोकास्त्वां प्रेषयाम्यङ्ग कथं तदास्ये ॥१३॥
उद्धृत्य सीतामलमृद्धसत्त्व भ्रातर्मुधा बद्धमहार्णवोऽहम् ।
रक्षोगणञ्चानयमङ्ग लङ्कां बद्ध्वा मृधे सैन्यगणैः सनाथम् ॥१४॥
सिक्ता मही शोणितधारयेव वर्षाजलैर्नष्टमभूत् समग्रम् ।
राज्यं धनं जन्मदबन्धुवर्गा भाग्यस्य दोषैर्मम जीवबन्धो ॥१५॥
एकाऽस्ति सीता भवने प्रदीपो ध्वान्ते मदीये निरवाप्त सोऽपि ।
को वाऽस्ति विश्वे वद तात यस्य पश्यन् मुखं जीवितुमिच्छुरस्मि ॥१६॥
प्रतिव्रजारण्यनिवासहेतोर्भ्रातः पुनः प्रेष्ठ कुलघ्न आगाम् ।
आशाविमुग्धो रिपुराज्यमेतत्त्वया समं मद्गतजीवितेन ॥१७॥
सौमित्रिरूचे कथमार्य भीतिमेवं समाप्नोषि बली बलेन ।
दैवस्य थस्त्रस्यति किं त्रिलोक्यां कुतोऽपि शक्रश्च यदात्मनीनः ॥१८॥
शैलात्मजा शम्भुरुभौ सहायावीक्षस्व लङ्कां सुरकोपमेघैः ।
वृतां यथा स्वर्णमयी च शोभा वृणोति दृष्यं तव देव हास्यम् ॥१९॥
प्राज्ञप्रभो भृत्यमिमं नियुङ्क्ष्व सदेवशस्त्रं प्रविशामि गेहम् ।
रात्रिञ्चराणां तव पादपद्मप्रसादलेशेन निहन्मि तेषाम् ॥२०॥
केनावजानासि दिवौक-आज्ञां यथा हि धर्मस्य सदा गतिस्ते ।
करोष्यकार्यं कथमार्यगृह्य, भनक्ति कः शान्तिघटं पदाभ्याम् ॥२१॥
विभीषणश्चाह सखे यदुक्तं तथ्यं तदेवातुलविक्रमोऽसौ ।
कृतान्तदूतोपममेघनाद इन्द्रार्तिकृद् वीरगणैकजिष्णुः ॥२२॥

वृथाऽत्र तस्माद् भयमाप्नुयाम स्वप्ने पिशाचेश्वरभाग्यलक्ष्मीः ।
स्थित्वाऽन्तिके मे शिरसः प्रसन्ना जगाद मां द्योतितदृप्यधामा ॥२३॥
विभीषणास्मिन्नगरेऽतिपापे ज्येष्ठोऽतिगर्वेण तव प्रमत्तः ।
आस्ते कथं पापसमूहहन्त्री किं पद्मिनी भाति मलीमसाप्सु* ॥२४॥
मेघावृते खे न हि दृश्यते भं किन्तु त्वयि प्रीतिमती सुपुण्यैः ।
नृपासनं प्राप्स्यसि सातपत्रं राज्येऽभिषेक्ष्यामि भवन्तमाशु ॥२५॥
सौमित्रिरासाद्य तवाऽऽनुकूल्यं त्वद्भ्रातृपुत्रं निहनिष्यति श्वः ।
विधेहि गीर्वाणनिदेशमर्थ्यं भो भाविरात्रिञ्चरलोकपाल ॥२६॥
सुप्तोत्थितोऽपश्यमहं स्ववेश्म देदीप्यमानं विभृतञ्च दिव्यैः ।
गन्धैस्तथा तूर्यनिनाद आराद् मृदु श्रुतो व्योम्नि मयाऽतिहृद्यः ॥२७॥
ऐक्षे प्रतीहारमुखे विमुग्धः सौन्दर्यमूर्त्तिं स्मरगर्वहन्त्रीम् ।
कादम्बिनीकृष्णमनोज्ञकेशीं श्रियं समेघामिव चञ्चलाञ्च ॥२८॥
अन्तर्हिता सा सहसैव लक्ष्मीर्दत्ता च दृष्टिर्बहुशो मयाऽलम् ।
पुनर्न सिद्धस्तु मनोरथो मे माताऽददान्मे शुभदर्शनं न ॥२९॥
काकुत्स्थ वार्त्तां शृणु सावधानमाज्ञां विधेहि त्वमहं व्रजामि ।
त्वया समं यज्ञगृहं यतः स मद्भ्रातृपुत्रो यजते कृशानुम् ॥३०॥
नृपाल यत्नेन सुरानुशिष्टं संरक्ष जायेत तवेष्टसिद्धिः ।
वदामि तथ्यं रघुवंशकेतो विश्वासमाधेहि सुरप्रसादे ॥३१॥
प्रत्याह रामो गलिताश्रुनेत्रः स्मर्त्तुं मनः खेदमतीव धत्ते ।
पूर्वप्रवृत्तिं रुधिराशनेन्द्रो कथं विसृज्येत मयाऽनुजोऽद्य ॥३२॥
कुमन्त्रदुष्टा प्रियमन्थराया जाता यदा केकयराजपुत्री ।
रुष्टा ममात्यन्तमदृष्टदोषात्तदाऽत्यजं राज्यमहं समृद्धम् ॥३३॥
सत्यं पितुः पालयितुं रतस्य ममानुजः केवलभक्तिवश्यः ।
मातू रुदत्याः सुखराज्यभोगं विहाय मद्दुःखहरोऽभवत् सः ॥३४॥

---

* समासान्तविधिरनित्य इति परिभाषया समासान्ताभावः ।

माता सुमित्रा सुचिरं रुरोद वधूश्च शुद्धान्तमलं विलापैः ।
बिभेद पौरान् स्वजनांस्तथार्त्ता श्छायेव हित्वाऽनुससार मां सः ॥३५॥
निरस्य पादेन दुरापभोगान् नवीनतारुण्य इतोऽस्मि वन्याम् ।
प्रसूः सुमित्राह कथं नु राम जहर्थ मे नेत्रमणिं छलात्त्वम् ॥३६॥
अमूल्यरत्नं प्रददामि तुभ्यं रक्षेस्त्वमेतत् सततं सयत्नम् ।
याच्ञ्या ममैषा सुतरक्षणार्था निष्प्राणदेहा निवसामि गेहे ॥३७॥
अलं समुद्धृत्य विदेहबालां वस्तुं पुनर्यामि वने वयस्य ।
न रावणिर्जेय इहास्मदीयैर्वीरैस्तथा देवमनुष्यदैत्यैः ॥३८॥
सर्वे वयं येन समं नियोद्धुं नालं कथं लक्ष्मण एककस्तम् ।
संयोत्स्यते मित्र समागमाम लङ्कां वृथाशापरिमुग्धचित्ताः ॥३९॥
दिव्योत्थिता गीः सहसैव तत्र विदेहबालाहृदयाब्जमित्र ।
मा देववाक्ये तव संशयो भूदाकाशमालोकय मुक्तशङ्कम् ॥४०॥
ददर्श रामः परिविस्मितात्मा खे युध्यतेऽहिः शिखिना सशब्दम् ।
दिशः प्रपूर्णाः परितोऽतिरावैश्छायेव पक्षस्य घनानरुन्ध ॥४१॥
बभूव कम्प्रा धरणी जलञ्च सोच्छ्वासमासीत् कियता क्षणेन ।
पपात भूमावहिभुक् परेतो जगर्ज जिष्णुर्भुजगोऽतिहृष्टः ॥४२॥
विभीषणः प्राह सखे त्वयाऽद्य दृष्टं यदाश्चर्यमदृष्टपूर्वम् ।
निरर्थमेतन्न कदापि भव्यं नेदं विकल्पः कपटो न माया ॥४३॥
दृष्टं पुरस्ताद् यदवश्यभव्यं प्रपञ्चरूपेण रघूत्तमाद्य ।
लङ्का ह्यवीरा भविताऽचिरेण सौमित्रिबाणानलतापदग्धा ॥४४॥
निवेशमाविश्य रघुक्षितीन्द्रः सौमित्रिमाभूषयदस्त्रशस्त्रैः ।
गृहीतशस्त्रः स दधार शोभां सुपर्वसेनापतितारकारेः ॥४५॥
सतारमामुञ्चदयं सुवर्म रत्नोज्ज्वलं खड्गवरञ्च भीमम् ।
सहेमदन्तिद्विजजातचर्म तूणेन पृष्ठेऽजयदर्कबिम्बम् ॥४६॥
बामेन दोष्णा स दधार चापं दिव्यं बलाद् मूर्ध्नि किरीटमाभात् ।
सौरांशुसम्पन्नमिवातिदीप्रं यस्य प्रभाभिः ककुभोऽचकासुः ॥४७॥

ननर्त्त चूडा मुकुटोपरिष्टात् सदैव कम्प्रा पशुराजपृष्ठे ।
सुसज्जितः सोऽतिविवृद्धतेजा मध्याह्नमार्त्तण्डनिभो व्यलोकि ॥४८॥
बली स वेगाच्च शिबिरादयासीद् धावन् यथाऽश्वः श्रुतशङ्खनादः ।
युद्धाय घोराय भविष्यतेऽयं विभीषणस्तस्य बभूव सध्र्यङ् ॥४९॥
ववर्ष पुष्पाणि सुरो ननाद माङ्गल्यतूर्यं दिवि देवनार्यः ।
अनर्त्तिषुर्विश्वमवाप मोदं ज्ञात्वा निपातं युधि देवशत्रोः ॥५०॥
पूर्णा त्रिलोकी जयघोरघोषैः कृताञ्जली राघव आह वीक्ष्य ।
नभोऽम्ब याचे शरणं पदाब्जं मा विस्मरैनं तव दीनदासम् ॥५१॥
कियन्ति दुःखानि मया गतानि धर्माय मातः सकलानि वेत्सि ।
प्रयच्छ धर्मस्य फलं महेशि त्वभाजनं रक्ष मृधे कराले ॥५२॥
निहत्य दुर्वृत्तनृशंसदैत्यान् देवानरक्षो बहुधार्त्तभीतान् ।
प्रसीद रक्षैनमसुप्रियं मे युद्धेऽभये भ्रातरमादृशं यातून् ॥५३॥
एवं स तुष्टाव रघूत्तमस्तां देवीं स्तुतिन्तां समुवाह यद्दशोः ।
कैलासमाश्वाशुगतिः सुगन्धं यथाऽहसद्देवपतिश्च नाके ॥५४॥
श्रुत्वार्त्तिपूर्णं स्तवनञ्च तस्य नगेन्द्रकन्या मुदमाप्य बह्वीम् ।
तथाऽस्तु सम्भाष्य रघूत्तमं सा गोभिः प्रशान्ताभिरनैष्ट सान्त्वम् ॥५५॥
ऊषोदयाद्रौ समुदैद्धसन्ती तमोपहाशेव हृदः सुखाकृत् ।
खगा अकूजन् मधुरं निकुञ्जे भृङ्गा दधावू रुचिरं स्वनन्तः ॥५६॥
गता सतारा रजनी सुमन्दमूषाललाटे शुशुभेऽतिदीप्रम् ।
नक्षत्रमेकं कुसुमञ्च तस्याः कोशेषु पुस्फोट भराजिकल्पम् ॥५७॥
रक्षोवरं प्राह पुनश्च रामः प्रयाहि मित्रावहितोऽलियत्तः ।
अमूल्यरत्नं निहितं करे ते त्वमद्य मे जीवितमृत्युनाथः ॥५८॥
आश्वास्य तं प्राह विभीषणोऽपि मा भैः* प्रियादित्यसुरेशपूज्य ।
सौमित्रिरायोधनमूर्ध्नि नूनं हनिष्यतीन्द्रद्विषमेहि धैर्यम् ॥५९॥

---

* भूरिप्रयोगानुरोधादर्वाचीनैर्वैयाकरणैरेतस्य साधुत्वमभ्युपगतम् ।

प्रणम्य सौमित्रिरगात् पदाब्जे रामस्य मित्रेण विभीषणेन ।
शनैर्वृतौ तौ तमसाऽद्रिशृङ्गं प्रातर्यथा जग्मतुरिष्टलङ्काम् ।।६०।।
यत्रास्त पद्मा कमलासने श्री रक्षःकुलेन्द्रस्य वधूः सुवेशा ।
मायाऽविशत् स्वर्णनिकेतनं तत् पृष्टा च लक्ष्म्यागमनस्य हेतुम् ।।६१।।
स्मेरानना प्रत्यवदन्महेशी तेजोऽम्बुधेः संवृणु कन्यकेऽद्य ।
सौमित्रिराविश्य सुवर्णधाम हनिष्यतीन्द्रद्विषमिष्टिगेहे ।।६२।।
तेजस्विनि त्वं प्रलयाग्नितेजाः प्रवेष्टुमेतन्नगरं क ईशः ।
प्रसीद देवेशि मुकुन्दजाये त्रायस्व रामं कृतधर्मपुञ्जम् ।।६३।।
निश्वस्य दीर्घं समुवाच पद्मा कस्यापि नाज्ञा तव लङ्घनीया ।
तथापि देवेशि रुदन्ति तप्ताः प्राणाश्च मे राक्षसभूपदुःखैः ।।६४।।
सौमित्रिमाख्याहि पुरं प्रवेष्टुं *निर्भीकचित्तं वरमर्पयामि ।
युद्धे स नूनं निहनिष्यतीशे परन्तपं मेघनिनादमुग्रम् ।।६५।।
विनिर्ययौ सा नगरान्नृपश्रीः प्रत्यूषकाले शिशिरार्द्रपुष्पम् ।
फुल्लं यथा फुल्लहृदा च देव्या शुष्का तदा मङ्गलचिह्नरम्भा ।।६६।।
माङ्गल्यकुम्भः सहसा बिभेद निनाय तद्वारि विशेषमुर्वी ।
तेजश्चयः पादसरोजमापत् प्रातः खरांशुं शिशिरांशुरेवम् ।।६७।।
लङ्कास्त हीनद्युतिरस्तरत्ना सर्पीव मेघाश्च भृशं जगर्जुः ।
ररास सिन्धुर्वसुधा चकम्पे दुःखेन तेऽष्टापदशोभिलङ्के ।।६८।।
प्राचीरमारुह्य समीपवर्त्ति-सौमित्रिमालोकयतामुभे वा ।
तमोवृतं देवमशीतरश्मिं किंवाऽनलं धूमशिखावलुप्तम् ।।६९।।
विभीषणोक्तं पवनं व साग्निं दुर्वारमाजौ विनिरीक्ष्य ते तम् ।
आस्तां समुत्के कथमिन्द्रशत्रुं संत्रास्यतेऽनेन रणे जने कः ।।७०।।
व्याघ्रो यथा वीक्षितकृष्णसारो दूरे वने धावति गुल्मगुप्तः ।
सौमित्रिरेवं जितशक्रशत्रुं हन्तुं ययौ ग्राह इवावगाढम् ।।७१।।

---

* ईदृशेषु स्थलेषु तुमुनः प्रयोगः कालिदासादिमहाकविसम्मत एव ।

निश्वस्य दुःखेन विसृज्य मायां देवीन्दिरेयाय गृहं स्वकीयम् ।
रुरोद पश्चाऽश्रु भुवा विलुप्तं शुक्त्येव मुक्ताजनिका सुवृष्टिः ॥७२॥
मायाबलेनाथ विवेश वीरद्वयी पुरं द्वारमभूच्च मुक्तम् ।
सौमित्रिसङ्गे न परिप्रणादं श्रुतो न केनापि स भीमनादः ॥७३॥
मायाच्छलेनातिविमूढचित्ता रक्षोगणा मृत्युसमं न जज्ञुः ।
वीरद्वयं तत्र समागतं हा विवेश सर्पः कुसुमं सुगुप्तम् ॥७४॥
ददर्श सौमित्रिरतीव चित्ते सविस्मयो द्वारि बलं प्रमत्तम् ।
तुरङ्गमातङ्गरथाधिरूढमजेयमाजौ बलगर्वदृप्तम् ॥७५॥
अधृष्यमालोक्य रणोन्मदं तद् बलं सदेवासुरदैत्यशङ्कम् ।
शनैः शनैरेव सुवीरयुग्मं सजोपमालोकयदुच्चहर्म्यम् ॥७६॥
प्रासादमुद्यानमगण्यमुत्सं सरांसि शालाः करिघोटकानाम् ।
रथांश्च नाट्यालयमस्त्रशालामपश्यतां तौ सुरवैरिपुर्याम् ॥७७॥
लङ्का समृद्ध्या जितदेवधामा संख्यातुमस्या विभवो न शक्यः ।
निर्णेतुमृक्षं नभसश्च रत्नं रत्नाकरस्थं क इह प्रभुः स्यात् ॥७८॥
मध्येपुरं राजगृहाणि वीरः प्रैक्षिष्ट मुक्ताफलवज्रयुञ्जि ।
चूडा यदीया गगनस्पृगासीन् मेरोः शिरः श्रेणिरिवातिचार्वी ॥७९॥
मातङ्गदन्तः सह हेमकान्त्या मुखे गवाक्षस्य चकास्ति रम्यम् ।
तुषारराशाविव सौरभानुः प्रातर्द्दशोत्तर्पण ईक्षकाणाम् ॥८०॥
यशस्विसौमित्रिरुवाच मित्रं विभीषणं धन्य इहाग्रजस्ते ।
लोके महिम्नां स हि सिन्धुरेको नेदृक् समृद्धिर्जगतीक्ष्यतेऽस्मिन् ॥८१॥
विभीषणः प्राह विषण्ण एतत् सर्वं हि सत्यं यदवक् नृसिंह ।
पृथ्व्यां न कस्यापि समृद्धिरीदृक् तथापि सम्पच्चपलातिलोला ॥८२॥
एकः प्रयाति विलयन्त्वपरः समेति रीतिर्भुवो जलनिधेरिव वीचिवीथिः ।
वीर त्वरस्व जहि तूर्णमवध्यवीरमिन्द्रारिमाप्नुहि यशोऽमरतानिदानम् ॥८३॥

इति श्रीमेघनादवधे महाकाव्ये लक्ष्मणस्य लङ्कानिरीक्षणं नाम सप्तदशः सर्गः ।

# दत्ता

## प्रथमः परिच्छेदः

पुरा हुगलिशाखाविद्यालयस्य प्रधानाध्यापकमहोदयेन ये तावत् त्रयश्छात्रा विद्यालयस्य रत्नत्वेन विनिर्दिष्टास्ते प्रतिदिनमेव भिन्नेभ्यस्त्रिभ्यो ग्रामेभ्यः क्रोशसम्मितं पन्थानं पादचारेणातिक्रम्याध्ययनायागच्छन्ति स्म। अहो! कियद्वा नासीत् त्रयाणां परस्परं प्रेम। न खलु तथाविधं दिवसमेकमप्यासीद् यस्मिंस्त्रय इमे सखायो विद्यालयमागच्छन्तो मध्येमार्गं खल्वाटवटवृक्षस्याधस्तादमिलित्वा पाठशालां प्रविविशुः। त्रयाणामेव गृहाणि हुगल्याः पश्चिमतोऽवस्थितानि। जगदीशस्तावत् सरस्वत्याः सङ्गमं समतिक्रम्य दिघडाग्रामादागच्छति स्म, वनमालिरासविहारिणौ चानन्तरवर्तिभ्यां ग्रामाभ्यां कृष्णपुरराधापुराभ्याम्। यथा हि जगदीश एव सर्वेषु मेधावितम आसीत्, तथैव तस्यार्थिकी परिस्थितिरपि हीनतमैवासीत्। तस्य पिता तावद् ब्राह्मणपण्डितः, याजनं कृत्वा विवाहोपनयनादिषु च पौरोहित्यं विधाय कथञ्चित् सांसारिकव्ययं निर्वाहयति स्म। वनमालिनः परिवारस्तु समृद्ध एव, तस्य पिता सर्वैरेव कृष्णपुरस्य माण्डलिक इति समाख्यायते स्म। रासविहारिणः परिवारस्याप्यार्थिकी परिस्थितिः समीचीनैवासीत्। क्षेत्रं वित्तं कृष्यादिकम्, उद्यानतटाकम्—यस्मिन् स्थिते ग्रामे लीलयैव संसारयात्रानिर्वाहो भवति—तत् सर्वमेवासीत्। सत्स्वपीदृशेषु विभवेषु कस्मिंश्चित् पत्तने गृहमभाटकित्वा, वात्या वा भवतु वृष्टिर्वा भवतु शीतातपं सममेव शिरसा विधूय, एतावन्मार्गं पद्भ्यामतिक्रम्य यत् प्रतिदिनं गृहाद् विद्यालये गमनागमनं कुर्वन्ति बालास्तत्र बीजमेतदेव यत्—तदानीं क्वापि पितरौ पुत्राणामीदृशक्लेशस्वीकरणं कथमपि क्लेशत्वेन न पर्यगणयताम्। प्रत्युत न खल्वियन्मात्रमायासमन्तरेण सरस्वती वश्यतामियादित्येवासीत् तेषां दृढी-

यान् प्रत्ययः। यद्वा तद्वा भवत्वत्र बीजम्, एवमेव बालकत्रितयं प्रवेशिकां परीक्षां समुत्तीर्णम्। प्रतिदिनमेव वटवृक्षस्याधस्तात् समुपविष्टैस्तैर्विधीयते स्म प्रतिज्ञा, यावज्जीवं कदापि न पृथग्भविष्यामः, विवाहं नैव विधास्यामः, व्यवहाराजीवत्वं चावलम्बमानास्त्रय एवैकस्मिन् भवने निवत्स्यामः, अर्थं समुपार्ज्य निखिलमेवार्थमेकस्यामेव पेटिकायां रक्षिष्यामः, तेन च देशहितं साधयिष्याम इति।

एतत् तावद् बालानां मनोरथविजृम्भणम्। यत् खलु न मनोरथमात्रं परं सत्यं तदन्ततः कीदृशं सञ्जातमित्येवेदानीं विव्रियते। साप्तपदीनस्य प्रथमो ग्रन्थिः शिथिलतामभजत् बी. ए. श्रेण्याम्। तदानीं कलिकातायां केशवसेनस्य प्रचण्डः प्रतापः प्रोल्लसति स्म। तस्य व्याख्यानानां भाषणानां च विलक्षणो वेगः। न खलु तं वेगं प्रबभूव ग्रामीणं बालकत्रयं प्रतिरुध्यात्मानं पर्यवस्थापयितुम्—स्रोतोवेगेन दूरत एव ते नीताः। कामं स्रोतसा नीता एव ते, तथापि वनमालिरासविहारिणौ यथा प्रकाशमेव गृहीतदीक्षौ ब्राह्मसमाजान्तर्निविष्टौ सञ्जातौ, न खलु प्रबभूव जगदीशस्तथा विधातुम्। कामं स तेषु मेधावितमस्तथापि नितान्तत एव दुर्बलचेताः। तत्र च तस्य ब्राह्मणपण्डितः पिता तदानीमपि जीवित एवासीत्। इतरयोस्तु तथाविधः कोऽप्यन्तरायो नावर्तत। कियतश्चित् कालात् पूर्वं परलोकं प्रस्थिते पितरि वनमाली तदानीं कृष्णपुरस्य माण्डलिकः, रासविहारी च राधापुरीयायाः समग्रायाः सम्पद एकातपत्रः सम्राट्। अतश्च स्वल्पेनैव समयेन सखायाविमौ ब्राह्मकुले विनिर्वृत्तविवाहौ विदुष्यौ भार्य्ये परिगृह्य स्वभवनं प्रत्यावृत्तौ। परं दरिद्रस्य जगदीशस्य तथाविधं सौकर्यं नाभवत्। तेन हि निरुपायतयाऽनिच्छतापि यथाकालं व्यवहारशास्त्रीयां परीक्षां समुत्तीर्य कस्यचन मध्यवित्तस्य ब्राह्मणस्यैकादशवर्षीयां कन्यकां परिणीयार्थोपार्जनार्थं प्रयागं प्रति प्रस्थितम्। यौ तावत् तत्र स्थितौ यत् किल कार्यं कलिकातायामेकान्ततः सुशकमेव प्रत्यभात् तद् ग्रामे प्रत्यावृत्तयोस्तयोरतिमात्रं दुःसाधमेवाभाति स्म। वधूजनस्तावच्छ्वशुर-

भवनमागत्य नैवावगुण्ठनेन संवृणोति वदनकमलम्, उपानत्-पादत्राणादि-प्रावृतपादो रथ्यासु निर्गच्छति इति कौतुकसन्दर्शनाय पञ्चभ्यो ग्रामेभ्यो ग्रामीणा महता संमर्देन तत्र समायाताः। समग्रं च ग्रामं परिव्याप्य तथाविधः कदर्यो जनवादकोलाहलः संप्रवृत्तो यथा नितान्ततो निरुपायमन्तरेण कोऽपि न प्रभवेति सपत्नीकस्तत्रावस्थातुम्। उपायसद्भावाद् वनमाली ग्रामं परित्यज्य कलिकातामागत्य तत्रैव निवासमकल्पयत्, केवलायां च भूसम्पद्यनाश्वस्तो वाणिज्यमपि प्रारब्धवान्। रासविहारिणः पुनर्धनागमः स्वल्प एव। अत एव स स्वं पृष्ठमेकेन विदुष्याश्च भार्यायाः पृष्ठमपरेण शूर्पेण समावृत्य कथमपि जन्मस्थान एवाव्यवहार्योऽवतस्थे। अतश्चैषां त्रयाणां मित्राणामेकस्य प्रयागेऽपरस्य राधापुरेऽन्यस्य च कलिकातायामवस्थानादामरणमविवाहितरेकस्मिन्नेव भवने निवसद्भिरेकस्यामेव पेटिकायां सञ्चितद्रव्यैर्देशोद्धरणप्रतिज्ञापातः पिहितेवातिष्ठत्। यश्च स्थाणुर्न्यग्रोधपादपः साक्षिभूतोऽवर्तत स हि कस्मिन्नपि कमपि दोषमनारोप्य मन्ये तूष्णीमेवान्तर्हसति स्म। इत्थञ्च बहूनि दिनानि व्यतीतानि। यद्यपि मित्राणाममीषां कदाचिदेव कथञ्चित् साक्षात्कारः समपद्यत तथापि न खलु सर्वथा तिरोहितोऽसौ बाल्यप्रणयः। यदा तावज्जगदीशस्य पुत्रः समजनि तदा प्रयागाद् वनमालिने शुभवृत्तान्तमिमं विज्ञापयता तेन विलिखितम्, तव चेत् तनया सञ्जायेत तामेव पुत्रवधूत्वेन वृत्वा बाल्ये समाचरितस्य पातकस्य कथञ्चित् प्रायश्चित्तं विधास्यामि। न खलु मुहूर्तमात्रं विस्मृतं मया यत्तवैव कृपया व्यवहाराजीवो भूत्वा सुखं निवसामीति।

वनमालिना चोत्तरं लिखितम्—सम्यक्। दीर्घायुर्भूयात् ते कुमारः। परं मम तनयालाभस्य लेशतोऽपि सम्भावना नास्ति। तथापि मङ्गलमयस्यानुकम्पया कदापि तनया चेज्जायेत तुभ्यमेव प्रदास्यामि। विलिख्य पत्रमात्मगतं जहास वनमाली। वत्सरद्वयात् पूर्वं रासविहारिणाऽपि पुत्रजन्मतः परमेवंविधैव विहिताऽभ्यर्थनेति। वणिग्वृत्तिप्रसादेन साम्प्रत-

मसौ धनिकधौरेयः संवृत्तः, अत एव सर्वे एव तदीयां तनयां स्वगृहमानेतु-मुत्कण्ठन्ते ।

---

## द्वितीयः परिच्छेदः

न खलु मासद्वितयं मासषट्कं वा व्यतीतम्, इदानीं विंशतिवर्षानन्तर-वर्ती वृत्तान्त उपवर्ण्यते । वनमाली वृद्धभावमुपगतः । कतिचिद्वर्षाणि निरन्तरमामयाक्रान्तोऽसौ साम्प्रतं शय्यासमाश्रितः प्रतीतवान्, नेतः पुन-रुत्थानं मे स्यादिति । स हि शैशवात् प्रभृति भगवत्परायणो धर्मभीरुश्च । न खलु मरणादसौ बिभाय । केवलमेककस्य सन्तानस्य विजयाया विवाह-विधेर्निर्वर्तनायावकाशो नैवालम्भीति विचिन्त्य कथञ्चिद्विक्षुब्ध-मस्य मानसम् । तस्मिन् दिनेऽपराह्णसमये सपदि विजयाया हस्तं स्वह-स्ताभ्यन्तरे स्थापयित्वाऽवदत्, वत्से, न खलु पुत्रो मे नास्तीति लेशतोऽपि दुःखमनुभवामि । त्वमेव मे सर्वम् । यद्यपि न खल्विदानीमप्यष्टादश वर्षाणि ते पूर्णानि, तथापि क्षुद्रस्य ते शिरस उपरि विशालाया अपि सम्पदो भारं विनिक्षिप्य गच्छतो मे न स्तोकमपि भयमुपजायते । माता ते नास्ति, भ्राता ते नास्ति, पितृव्यादिकमपि किमपि नास्ति । तथापि निःसन्दिग्धमेव विजानामि सर्वमेव मदीयमक्षुण्णमेव तिष्ठेत् ; केवलमियमेव मे प्रार्थना—यद्वा करोतु यद्वा भवतु, जगदीशस्तावन्मे बाल्यबन्धुः । ऋणनिर्यातनार्थं कदापि तस्य गृहभवनादिकं न विक्रेतव्यम् , तस्य चैकः पुत्रोऽस्ति – न खलु कदापि प्रत्यक्षीकृतोऽसौ, परं श्रुतं मया—अतीव साधुरयं वत्सः । न खलु पितुरपरा-धेन निराश्रयोऽयं विधीयतामित्येव मेऽन्तिमाऽभ्यर्थना ।

विजया बाष्पावरुद्धकण्ठाऽवदत्, तात, न खलु भवदीयमादेशं कदाप्य-न्यथाकरिष्यामि, यावज्जगदीशमहोदयो जीवति तावद् भवन्तमिव तं बहु मंस्ये । परं परेते तस्मिन् किमिति समग्रां सम्पदं मुधैव तत्पुत्राय समर्पयेयम् । न खलु कदापि तं प्रत्यक्षीकृतवान् भवान्, नाप्यहम् । अथ चेत् सत्यमेवासौ विद्यास्वभिविनीतः, विनैवायासं विनिर्यातयेत् पितुरृणम् ।

वनमाली कन्याया मुखे चक्षुषी संन्यस्यात्रवदत्, वत्से, न खलु स्वल्पं तस्य ऋणम्। स चेद् बालो न प्रभवेदेतद्विनिर्यातयितुम्।

कन्या प्रत्युवाच, यो न प्रभवति, कुसन्तान एवासौ, न खलु तस्मिन्ननुकम्पा प्रदर्शनीया।

सुपरिचित एवासीत् सुशिक्षितायास्तेजस्विन्यास्तनयायाः स्वभावो वनमालिनः। अत एव नैवासौ निरबध्नात्, केवलं दीर्घं श्वासं विसृज्यावदत्, वत्से, सर्वेष्वेव कर्मसु परमेश्वरमेव शिरसि निधाय यथाकर्त्तव्यं विधीयताम्। न खलु तामनुरोधविशेषबद्धां विधातुमभिवाञ्छामि। इत्युक्त्वा मुहूर्त्तं तूष्णीं स्थित्वा पुनरपि निश्वासं विमुच्यावदत्, जानासि वत्से विजये, यदा तावज्जगदीशोऽयं परमार्थत एव मनुष्यपदवाच्य आसीत् तदा तव जन्मतः पूर्वमेव पुत्रार्थं प्रार्थिताऽसि। मयापि वत्से, तथैव प्रतिपन्नम् इत्युक्त्वैव समुत्सुकाभ्यामेव नयनाभ्यामसावपश्यत्।

तस्येयं कन्यका शैशव एव मातृहीना, तेनैव तस्याः पितुर्मातुश्चोभयोरेव स्थानं परिपूरितम्, अत एव पितुः सकाशे मातुरिव सप्रणयं सम्प्रार्थने कदापि सङ्कोचं नान्वभूद्विजया। अत एवोक्तं तया, तात केवलं मौखिकमेव वचस्तस्मै प्रतिपन्नं न पुनरान्तरम्।

किमिति वत्से ?

तथा चेत् सकृदपि तं चक्षुर्भ्यामपि द्रष्टुं कथं नाकामयिष्यथाः।

वनमालिनोक्तम्, यदा तावद्वासविहारिणः श्रुतम्, पुत्रः किलायं मातेव दुर्बलः—किं बहुना, भिषजस्तस्य दीर्घजीवनं लेशतोऽपि नाशंसन्ते, तदा सविधेऽपि वर्त्तमानं तमानाय्य द्रष्टुं नोदसहिषि। अस्यामेव कलिकातानगर्यां क्वचन भाटकितभवनेऽवस्थायासौ तदा बी० ए० श्रेण्यामधीतवान्। तत ऊर्ध्वं स्वयमेव तेन तेनाऽऽमयेन समाकुलस्तद्गतं किमपि नाचिन्तयम्। इदानीं पुनः पश्यामि वत्से, तेन मे महती हानिः संपन्नेति। तथापि सत्यमेव ते ब्रवीमि वत्से, तदानीं जगदीशाय त्वामधिकृत्याऽऽन्तरमेव वचनं प्रतिपन्नम्। पुनः किञ्चिद्विश्रम्यावोचत, अद्य तावत् सर्व एव जगदीशम्

अकर्मण्यो द्यूतकर इति, अकिञ्चित्करो मद्यप इति विजानन्ति। परम् अयमेव जगदीश एकदा सर्वेष्वेवास्मासु साधिष्ठ एवासीत्। न हि विद्यां वा बुद्धिं वाऽधिकृत्य ब्रवीमि, ते तु बहूनामेव वर्तन्ते, परं न खल्वेवमान्तरं प्रेम कस्मिन्नपि मया प्रत्यक्षीकृतम्। इदमेव तस्य विनाशाय संवृत्तम्। कामं तस्य बहवो दोषाः—जानाम्येवाहं सम्यक्, तथापि यदैव स्मृति-पथमध्यारोहति सहधर्मिण्याः शोकेनोन्मत्तीभूतोऽयम्, तदैव वत्से, तव मातरमनुस्मृत्य मानसं मे तस्मिन् श्रद्धानिर्भरं सम्पद्यते। तस्य पत्नी तावत् सती लक्ष्मीरेवासीत्। मरणावसरे तया नरेन्द्रमाहूय केवलमिद-मेवोक्तम्, वत्स, केवलमिदमेवाशासे, परमेश्वरे तेऽप्रकम्प्या श्रद्धा विराज-तामिति। श्रुतं किल मया न खलु मातुरिदं पश्चिममाशीर्वचनं नैष्फल्य-मभजत्। अस्मिन्नेवाल्पे वयसि नरेन्द्रो मातेव परमेश्वरे श्रद्धातुं शिक्षित-वान्। येनैतत् कर्तुं पारितम्, किं तस्येहावशिष्यते वत्से ?

विजयाऽपृच्छत्, किमेतदेवेह श्रेष्ठं कार्यम्, नान ?

मुमूर्षोः स्थविरस्य विशुष्कं नयनं सबाष्पं सञ्जातम्। सहसैव प्रसार्य पाणी कन्यकां वक्षसि समाकृष्यावदत्, एतदेव सर्वेषु श्रेष्ठं कार्यं वत्से। संसारस्याभ्यन्तरे, संसाराच्च बहिः समग्रे ब्रह्माण्डे इतोऽधिकतरं कर्त्तव्यं न विद्यते। स्वयं त्वं कदापि प्रभवसि वा मा वा, वत्से, यस्तावत् प्रभवति, तस्यैव पादयोर्मस्तकं निधेयाः—अहमपि मरणसमयेऽनयैवाशिषा त्वां योजयामि।

अहनि तस्मिन् पितुर्वक्षसि पतिताया विजयाया मनस्यभवत्—कोऽपि नितरां मधुरेण नितरां च प्रोज्ज्वलेन नयनपातेन पितुर्वक्षसस्तदीयवक्षसो-ऽन्तरतमं प्रदेशमभिवीक्षत इव। एषा चाननुभूतपूर्वाऽतिविचित्राऽनुभूतिरहनि तस्मिन् मुहूर्तकं तां सर्वथा परवशां व्यधात्। वनमालिनोक्तम्—बालकस्य नाम नरेन्द्रः। तस्य पितुर्मुखाच्छ्रुतं स भिषक् सम्पन्नः, परं तेन चिकित्सावृत्तिर्नाव-लम्ब्यते। स चेदधुनात्र देशेऽवास्थास्यत, अवसरेऽस्मिन् सकृत् तमानाय्य दर्शनसुखमपि तावदन्वभविष्यम्।

पूर्वानुवृत्तिः

**मथुरा तनुस्तनूर्वर्त्तिनी च सूची यवागूः।**
***वसीर्णिकानिकाशाशर्कराः स्त्रियां पुंसि तर्कश्च ॥७२॥**

एते स्त्रियां भवन्ति। इयं मथुरा नगरी। तनुः शरीरम्, तनूस्तदेव। वर्त्तिनी काष्ठोद्भवं शब्दसाधनम्†। सूची मूलं पापस्य। यवागूः अन्नविकारः। वसर्णिका मणिः(?)। निकाशा कर्पविकारः। इयं शर्करा गुडविकारः। तर्कः पुंसि भवति। अयं तर्कः ऊहः। चशब्दः पादपूरणे।

**बन्धुरविषाण[योस्त्रिकं भवेत् पल्वलं तृतीयं स्यात्।]**

[त्रिकमिति लिङ्गत्रितयम्। बन्धुरः, बन्धुरा, बन्धुरम् उत्तममांसम्।] इदं विषाणम्। इयं विषाणा। शृङ्गम्। पल्वलं तृतीयं नपुंसकमित्यर्थः। इदं पल्वलमल्पसरः।

**शकटोशीरकुतूहलशरावबृन्दानि नपुंसकानि‡ जानीहि ॥७३॥**

एतानि नपुंसकानि जानीहि। इदं शकटं यानम्। इदमुशीरं वीरणमूलम्। कुतूहलं कौतुकम्। शरावं मृन्मयभाजनम्। बृन्दं समूहः।

**यूकोल्काशुक्त्योषधिवर्त्तिभ्रुकुटयः स्त्रियामुदिताः।**

इयं यूका मस्तकक्रिमिः। उल्का सङ्घातद्वयम्, दग्धकाष्ठञ्च। शुक्तिर्जल-

---

* सरणीनि—आ०

† "वर्तिनी प्रत्ययम्" इत्यादर्शे।    ‡ नपुंसकानि—नास्ति मुद्रिते।

सम्भवा। ओषधिः फलपाकान्तो वृक्षविशेषः। वर्त्तिर्दीपस्य। भ्रुकुटि-भ्रूभङ्गः पुष्परचना वा।

**वाल्मीक्यध्वरनिर्यूहव्यूहमुस्तकाः पुंसि कुम्भश्च ॥७४॥**

वाल्मीक्यादयः पुंसि भवन्ति। यथा—वाल्मीकिः ऋषिर्मृत्कूटश्च। अयमध्वरो यज्ञः। निर्यूहश्चन्द्रपाणिः(?)। व्यूहः समूहः प्रभूतः। मुस्तको गन्धद्रव्यम्। कुम्भो घटः।

**केयूरतरलतूर्याङ्गदानि नित्यं नपुंसके विद्धि। पुंसि गवाक्षः**

एतानि नपुंसके जानीहि। गवाक्षः पुंसि। यथा—इदं केयूरं बाहु-भूषणम्। इदं तरलमलङ्कारः। तूर्यं वादित्रम्। अङ्गदं बाहुभूषणम्। अयं गवाक्षो वातायनः।

**श्यामा स्त्रियां* भुशुण्डी च भाण्डी च ॥७५॥**

एते शब्दाः स्त्रियां भवन्ति। इयं श्यामा। इयं भुशुण्डी आयुधम्। भिण्डी [भाण्डी] भिन्दिपालः।

**भवतोऽपजनोपपदोऽङ्गपदौ† पुंसि नित्यमिमनिच्च।**

अपोपपदः अङ्गशब्दः, जनोपपदः पदशब्दः पुंसि भवति। अयमपाङ्गो नेत्रप्रान्तः। जनपदो लोकः। रतो हलाङ्क दे र्लघोः [ पा० ६।४।१६१ ] इति रेफादेशः। इमनिच्प्रत्ययान्ताः पुंसि भवन्ति। अयं प्रथिमा गरिमा लघिमा द्रढिमा इत्येवमादयः।

---

* च भाण्डी भुशुण्डी च—मु।

† भवत्यपजनोपपदोऽङ्गपदः—श्रा

**वङ्क्षणकोष्ठश्रेषाश्च सह निपातोपसर्गाभ्यां पुंसि ॥७६॥**

एते पुंसि भवन्ति। अयं वङ्क्षणः, तनुस्थानम्। कोष्ठो हरिशाला(?)। श्रेषः *अन्तादयः (१)। निपातश्चादिः। उपसर्गः प्रादिः।

**स्थावराणञ्-य-यच-छ-ढक्-यक्-वुञस्तु यदि वा भावे।**
**कर्मणि स्युस्तदेषां नियतं नपुंसकत्वं जानीहि ॥७७॥**

अण् अञ् य यत् छ ढक् यक् वुञ् च। एते प्रत्यया भावे कर्मणि च। यदि भावे स्युस्तदा तदन्तानां नपुंसकत्वं जानीहि। यथा—हायनान्त-युवादिभ्योऽण् [पा० ५।१।१३०]। द्विहायनस्य कर्म भावो वा द्वैहायनम्। यूनो भावः कर्म वा यौवनम्। नस्तद्धिते [पा० ६।४।१४४] इति नलोपे प्राप्ते अन् [६।४।१६७] इति प्रकृतिभावः। स्थाविरम्। याजमानम्। इगन्ताच्च लघुपूर्वात् [पा० ५।१।१३१] इत्यण्। मृदोर्भावः कर्म वा मार्दवम्। पाटवम्। लाघवम्। आर्जवम्। अण्। प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् [पा० ५।१।१३०] अश्वस्य भावः कर्म वा आश्वम्। गार्दभम्। वयोवचनात् कौमारम्, शैशवम्। उद्गात्रादेः। इदमौद्गात्रम्। सख्युर्य [पा० ५।१।१२६] इति यः। सख्युर्भावः कर्म वा सख्यम्। स्तेनाद् यन्नलोपश्च [पा० ५।१।१२५] इति यत्प्रत्ययः। स्तेनस्य भावः कर्म वा स्तैन्यम्। होत्राभ्यश्छः†[पा० ५।१।१३४] होतुर्भावः कर्म वा होत्रीयम्। पोत्रीयम्। औद्गात्रीयम्। दुहित्रीयम्। कपिज्ञात्योर्ढक् [ पा० ५।१।१२७ ] कपेर्भावः कर्म वा कापेयम्। पत्यन्त-

---

* अन्यादय—ग्रा (१) अन्तो रक् नाशश्च—पृथ्वीश्वरः।

† होत्रादिभ्यश्छः—ग्रा

पुरोहितादिभ्यो यक् [पा० ५।१।१२८]। बृहस्पतेर्भावः कर्म्म वा बार्हस्पत्यम्, सैनापत्यम्। वुञ्। योपधाद् गुरूपोत्तमाद्वुञ् [पा० ५।१।१३२]। रामणीयकम्। [ द्वन्द्वेभ्यः ] आहिनकुलकम्। श्वावराहकम्। किराताज्र्जुनकम्। मनोज्ञादिभ्यश्च [५।१।१३३]। मानोज्ञकम्। प्रैयरूपकम्। कल्याणकम्।* आभिरूपकम्†। इत्यादिकं द्रष्टव्यम्।

## व्रजशूलौ पुंसि नपुंसके च मृधम्।

व्रजशूलशब्दौ पुंसि भवतः। नपुंसके च मृधम्। अयं व्रजः। अयं शूलः। इदं मृधं युद्धम्।

## कम्बलतोमरमुकुलकुटुङ्काः ‡पुंसि भस्त्रा च स्त्री ॥७८॥

एते शब्दाः पुंसि भवन्ति। अयं कम्बलः ऊर्णादिः। अयं तोमरः शरप्रहरणम्। मुकुलः कुट्मलः§। ¶कुटुङ्को यानम्। भस्त्राशब्दः स्त्रियां भवति। इयं भस्त्रा लोहधमनी।

## आकारेकारान्तं स्थावरं जङ्गमं स्त्रियां भवेन्नित्यम्।

आकारान्तमीकारान्तं यत् स्थावरं जङ्गमं तत् सर्वं स्त्रीलिङ्गं भवति। आकारान्तं स्थावरम्—इयं गङ्गा। इयं यमुना। नर्म्मदा। ईकारान्तम्—सरस्वती। शरावती। आकारान्तं जङ्गमम्—इयं देवदत्ता। वलाका। अम्बिका। ईकारान्तं जङ्गमम्—कुमारी। गौरी। ब्राह्मणी। हस्तिनी।

## क्वचिदूकारान्तमपि प्रोक्तं वा पुंसि योनिः स्यात् ॥७९॥

श्वश्रूः। वधूः। क्वचिदिति किम्? कटप्रूः। धान्यलूः। इयं योनिः। अयं योनिः।

---

* कन्याकल्यकम् इति आ०

† आभीरूपकम्-आ०

‡ आदर्शे नास्ति।

§ कुड्मलम्—आ०

¶ कन्दक—सु।

**वाग्विषयस्य च महतः संक्षेपत एष लिङ्गविधिरुक्तः ।**
**यन्नोक्तमत्र सद्भिस्तल्लोकत एव बोद्धव्यम् ॥८०॥**

इति श्रीमदाचार्य्यवररुचिकृता लिङ्गवृत्तिः समाप्ता ॥ श्रीः ॥
[इति श्रीमदखिलवाग्विलासमण्डितसरस्वती-कण्ठाभरणानेकविशरण-श्रीनरपतिसेवितविक्रमादित्यकिरीटनिघृष्टचरणारविन्दाचार्य-वररुचि-विरचितो लिङ्गविशेषविधिः समाप्तः ।]

संवत्सरविक्रमार्कराज्यसमयातीत १७२३ वैशाखवदि ७ आदित्य-वासरे नूरपुरे स्थित्वा चतुर्भुजोपाध्यायः संलिलेख । शुभमस्तु ॥ श्रीरस्तु ॥ लेखकपाठकयोः शुभं भूयात् । श्रीः ॥

[एतद्गताः पाठभेदादयो लिपिकरप्रमादाश्च वारान्तरे विस्तरेण विचार-यिष्यन्ते । स० सा० प० स०]

---

## भट्टभवभूतिः

[ निबन्धकः—श्रीद्विजेन्द्रनाथगुहचतुर्धुरीणः ]

"एकोऽभून्नलिनात् ततश्च पुलिनाद् वल्मीकतश्चापरः ।
ते सर्वे कवयस्त्रिलोकगुरवस्तेभ्यो नमस्कुर्महे ॥"

उपक्रमणिका

भारतवर्षीयकवीनां मध्ये भवभूतिरन्यतमः प्रसिद्धः कविरासीत् । अस्ति महाकविभवभूतिप्रणीतम् 'उत्तरचरितम्' सर्वजनमान्यं सर्वजनवेद्यञ्च नाटकम् । तथाचोक्तं "उत्तरे रामचरिते भवभूतिर्विशिष्यते ।" नाटकस्यास्य दोषगुणादयोऽत्र परीक्ष्यन्ते । काव्यं तावत् कविकार्यमेव । तत्र "कः कविः" इति प्रश्ने भामहः प्राह—"प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता ।

तदनुप्राणनाजीवद्वर्णनानिपुणः कविः । तस्य कर्म स्मृतं काव्यम् ।" "कविः" इत्युपाधिः भवभूतिं प्रति सम्यक् प्रयुक्तः । इह तु सन्देहलेशोऽपि नास्ति ।

### आविर्भावकालः

भवभूतेः प्रादुर्भावकालविषये वैमत्यमस्ति विशेषज्ञानाम् । केऽपि खृष्टीयाष्टमशतकपूर्वार्धे, अन्ये पुनः खृष्टीयसप्तमशतकोत्तरार्धे अस्य समयं निर्दिशन्ति । कह्लणस्य मते—

"कविर्वाक्पतिराज-श्रीभवभूत्यादिसेवितः ।
जितो ययौ यशोवर्मा तद्गुणस्तुतिवन्दिताम् ॥"

(राजतरङ्गिणी ४।१४४)

श्लोकादस्माद् भवभूतिः कान्यकुब्जाधिपतेर्यशोवर्मणोऽन्यतमसभाकविपदं समलङ्कृतवान् इति ज्ञायते । सुबन्धुबाणभट्टप्रभृतयः कवयस्ततः पूर्वं प्रादुर्बभूवुः । तेषामाविर्भावकालः खृष्टसप्तमशतकोत्तरार्धे निर्णीतः । तस्मिन् समये पाञ्चाल्या रीतेर्बहुलः प्रचार आसीत् । तेन च भवभूतेः काव्ये बहूनि दीर्घसमासयुक्तानि वाक्यानि दृश्यन्ते । अत एव तस्य समयः खृष्टीयाष्टमशतकस्य प्रथमपाद इति प्राच्यप्रतीच्यसूरीणामूहः ।

### कविकथाप्रसङ्गः

वीरचरितस्य प्रस्तावनायां विशदरूपेण उपन्यस्तं स्वीयमितिवृत्तं कविप्रवरेण "अस्ति दक्षिणापथे पद्मपुरं नाम नगरम् । तत्र केचित्तैत्तिरीयाः काश्यपाश्चरणगुरवः पङ्क्तिपावनाः पञ्चाग्नयो धृतव्रताः सोमपीथिन उदुम्बरनामानो ब्रह्मवादिनः प्रतिवसन्ति । तदामुष्यायणस्य तत्रभवतो वाजपेययाजिनो महाकवेः पञ्चमः सुगृहीतनाम्नो भट्टगोपालस्य पौत्रः पवित्रकीर्त्तेर्नीलकण्ठस्याऽऽत्मसम्भवः श्रीकण्ठपदलाञ्छनः पदवाक्यप्रमाणज्ञो भवभूतिर्नाम जातूकर्णीपुत्रः कविर्मित्रधेयमस्माकमिति भवतो विदांकुर्वन्तु ।" इति । उत्तरचरितस्य प्रस्तावनायामपि—"अस्ति तत्रभवान् काश्यपः श्रीकण्ठपदलाञ्छनः पदवाक्यप्रमाणतत्त्वज्ञो भवभूतिर्नाम जातू-

कर्णीपुत्रः।"* महावीरचरितस्य नान्दीपाठे ब्रह्माणमीशं कमलासनस्थं नमस्कृत्य भवभूतिर्नाटकमारब्धवान, यथा—

धर्मः

"अथ स्वस्थाय देवाय नित्याय हतपाप्मने।
त्यक्तक्रमविभागाय चैतन्यज्योतिषे नमः॥" (१।१)

मालतीमाधवे—

"चूडापीडकपालसंकुलगलन्मन्दाकिनीवारयो
विद्युत्प्रायललाटलोचनशिखिज्वालाविमिश्रत्विषः।
पान्तु त्वामकठोरकेतकशिखासंदिग्धमुग्धेन्दवो
भूतेशस्य भुजङ्गवल्लिवलयस्रङ्नद्धजूटा जटाः॥"(१।१)

अत्र भूतेशं प्रणम्य तत्रभवान् भवभूतिः मालतीमाधवं नाम रूपकमाततान।

रघुकुलतिलको रामचन्द्रोऽपि कवेराराध्य एव। यथा—

"प्राचेतसो मुनिवृषा प्रथमः कवीनां
यत् पावनं रघुपतेः प्रणिनाय वृत्तम्।
भक्तस्य तत्र समरन्त ममापि वाच
स्तासु प्रसन्नमनसः कृतिनो भजन्ताम्॥"
(वीरचरिते१।१)

पद्मयोनि-स्वभू-मृडादयः सृष्टिस्थितिप्रलयानामेक एव देव आसीत न तु पृथक्। स च भक्तवृन्दैर्विभिन्नप्रकारैराराधितः। अथवा नटराजशिवाय (केषाञ्चित् मते नटनारायणाय वा) प्रणम्य निर्विघ्नपरिसमाप्त्यर्थं वृत्तं काव्यम्। उक्तञ्च "आरोग्यं भास्करादिच्छेद्धनमिच्छेद्धुताशनात्" इत्यादयः।

---

* मालतीमाधवेऽपि पुनरेतद्दवासाद्यते। तद्व्यतिरिक्तानि तस्य चरित्रचित्राणि किञ्चिन्मात्रमपि न प्राप्यन्ते।

नाट्यकाव्य-नामानि ।

भवभूतिसूरिविरचितं महावीरचरित-मालतीमाधवोत्तररामचरितेति-नाम रूपकत्रयं दृश्यते। रूपकस्य च दशप्रकारेषु प्रभेदेषु द्वितीयं प्रकरणमिति परिगणितम्। अत्रापि च द्वितीयं प्रकरणमिति ज्ञेयम्। चरितद्वयं पुनः नाटकत्वेनैव प्रख्यातम्। नान्यः कोऽपि प्रबन्धः ग्रन्थो वास्योपलभ्यते। तथाचान्यत्र सन्दृश्यते—

"दैवाद्यद्यपि तुल्योऽभूद्भूतेशस्य परिग्रहः।
तथाऽपि किं कपालानि तुलां यान्ति कलानिधेः॥"

(शार्ङ्गधरपद्धतौ ४।१२)

"निरवद्यानि पद्यानि यद्यनार्यस्य का क्षतिः।
भिक्षुकक्षविनिक्षिप्तः किमिक्षुर्नीरसो भवेत्॥"

(तत्रैव ६।२)

तथा, श्रीमद्गदाधरभट्टसंगृहीते रसिकजीवने (३।२२)—

"अलिपटलैरनुजातां सहृदयञ्चरं विलुम्पतीम्।
मृगमदपरिमलहरीं समीर किं पामरे किरसि॥"

"किं चन्द्रमाः प्रत्युपकारलिप्सया करोति गोभिः कुमुदावभेदनम्।
स्वभाव एवोन्नतचेतसां सतां परोपकारव्यसनं हि जीवितम्॥"

(तत्रैव ३।६५)

"रक्तं नक्तंचरौघः पिबति वमति च ग्रस्तकुन्तः शकुन्तः
क्रव्यं नव्यं गृहीत्वा प्रणदति मुदितो मत्तवेतालबालः।
क्रीडत्यव्रीडमस्मिन् रुधिरमधुवशात् पूतना पूतनाङ्गी
योगिन्यो मांसमेदप्रमुदितमनसः शूरशक्तिं स्तुवन्ति॥",

(तत्रैव ६।८०)

एतान्यपि—

"चूडापीडनिबद्धवासुकिफणाफुत्कारनिर्यद्विष-
ज्वालाजृम्भितमत्स्यकच्छपवधूलीढेन्दुलेखामृतम्।"

अव्याद्वः स्मरसूदनस्य मदनक्रीडाकचाकर्षण-
श्च्योतन्नाकसरित् सरोषगिरिजाहृष्टं जटामण्डलम् ॥"
(सदुक्तिकर्णामृते १।१२।२)

"गाढग्रन्थिप्रफुल्लद्दलविकलफणापीठनिर्यद्विषाग्नि-
ज्वालानिष्टप्तचन्द्रद्रवदमृतरसप्रोषितप्रेतभावाः ।
उज्जृम्भाबभ्रुनेत्रद्युतिमसकृदसृक्तृष्णयालोकयन्तः
पान्तु त्वां नागनालप्रथितशवशिरःश्रेणयो भैरवस्य ॥"
(तत्रैव १। १३।२)

"वैकुण्ठस्य करङ्कमङ्कनिहितं स्कन्दुः कपालं करे
प्रत्यङ्गं च विभूषणं विरचितं नाकौकसां कीकसैः ।
भस्म स्थावरजङ्गमस्य जगतः शुभ्रं तनौ बिभ्रतः
कल्पान्तेषु कपालिनो विजयते रौद्रं कपालव्रतम् ॥"
(तत्रैव १।१८।३)

"कां तपस्वी गतोऽवस्थामिति स्मेराविव स्तनौ ।
वन्दे गौरीघनाश्लेषभवभूतिसिताननौ ॥"
(तत्रैव १।२२।४)

"शौर्यं शत्रुकुलक्षयावधि यशो ब्रह्माण्डखण्डावधि
त्यागः सप्तसमुद्रमुद्रितमहीनिर्व्याजदानावधिः ।
वीर्यं यत्तु गिरां न तत् पथि ननु व्यक्तं हि तत् कर्मभिः
सत्यं ब्रह्मतपोनिधेर्भगवतः किं किं न लोकोत्तरम् ॥"
(तत्रैव १।४५।३)

"निःससार करघातविदीर्णध्वान्तदन्तिरुधिरारुणमूर्त्तिः ।
केशरीव कटकादुदयाद्रेरङ्कलीनहरिणो हरिणाङ्कः ॥"
(तत्रैव १।८०।२)

इमे तावच्छ्लोका भवभूतिविरचिततया प्रथिताः, परं साम्प्रतमुपलभ्यमानेषु महाकवेस्तस्य रूपकेषु न दृश्यन्ते ।

(क्रमशः)

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| November, 1935. | १८५७-शकीये कार्त्तिके १८श-वर्षस्य ७म-संख्या | Vol. XVIII No. 7 |


## मतिमञ्जरी

हा हन्त ! विषमतमः किलायं समयः समापतित आर्याणाम् । साम्प्रतं न केवलमनार्या एवाऽऽर्याणां प्रातिकूल्यं समाचरन्ति, आर्यवंशे समधिगतजन्मानोऽपि सनातनधर्मसमुन्मूलनाय प्राणानपि पणीकुर्वन्ति । ये तावद्विनिन्दन्ति वेदान्, प्रतिक्षिपन्ति पुराणानि, समुत्सारयन्ति स्मृतिशास्त्राणि, तिरस्कुर्वन्ति तन्त्राणि, स्वमनीषिकयैव च समुद्भावितं स्वैराचारं परमं धर्मं समाकलयन्तस्तस्यैव संस्थापनार्थं महीयांसमुद्यममादधति, स्वनासिकाच्छेदनपुरःसरमपरयात्राप्रतिरोधन्यायश्चानुसरन्तः स्वप्राणपरित्यागोपन्यासेन स्वधर्मात् प्रच्यावयन्ति धर्मधनानृजुधियः, त एवेदानीं नेतृपदमधितिष्ठन्ति, त एव च तर्जनीसंकेतेनार्यसमाजं परिचालयितुं समीहन्ते । ये तावत् प्रतिपादविक्षेपं परोलक्षान् प्राणिनः परेतभूमिं प्रापयन्ति, ये च गान्धिमहोदयस्यानुशासनं शिरसि कुर्वन्तः सञ्जाताङ्कुरानेव सजीवांश्चणकान् सञ्चर्वयन्ति, ये च सर्वविधपशुपक्ष्यादीनां नवनवेन मांसजातेन रसनां परितर्पयन्ति तेषामेवेदानीं शास्त्रविहितपशुविशसनसन्दर्शनेन विदीर्यन्त इव हृदयानि, प्रतिष्ठन्त इव च

प्राणाः, निरर्गलं च विगलन्ति बाष्पवारीणि नयनेभ्यः। धर्मैकसारास्तु भारतीयाः—

नाकस्माच्छाण्डिलीमाता विक्रीणीते तिलैस्तिलान्।
लुञ्चितानितरैस्तस्माद्धेतुरत्र भविष्यति ॥

इति पञ्चतन्त्रोक्तं श्लोकमनुस्मरन्तो नांशतोऽपि श्रद्दध्युरमीषां वचनजालेषु। न खलु विस्मर्यतामममीभिः संस्कारकम्मन्यैर्यद् धर्मबुद्ध्या देवताभ्यः पशून् बलित्वेनोपकल्पयन्तोऽपि धार्मिका न लेशतोऽपि सौनिकसमकक्षतावगाहन्त इति। तथाचोक्तं कविकुलचूडामणिना कालिदासेन—

सहजं किल यद्विनिन्दितं न हि तत् कर्म विवर्जनीयम्।
पशुमारणकर्मदारुणोऽप्यनुकम्पामृदुरेव श्रोत्रियः ॥ इति।

———

साम्प्रतं किल वङ्गीयशिक्षासचिवमहोदयेन राजकीयसंस्कृतमहाविद्यालयः कलिकातामाद्रासा च प्रेसिडेन्सीमहाविद्यालयस्यैव शाखाप्रशाखारूपेणावस्थापयितुमिष्येते इति वहुलीभूतेयं किंवदन्ती। तथाच प्रत्ययिततमेन केनचन वृत्तान्तपत्रेणोद्घोषितम् इत ऊर्ध्वं संस्कृतमहाविद्यालये केवलं संस्कृतभाषाया एवाध्यापनं भविष्यति, विषयान्तराणि पुनस्तत्रत्यैश्छात्रैः प्रेसिडेन्सीमहाविद्यालय एव अध्येतव्यानीति। एवञ्च उष्ट्रपादप्रसारणन्यायेन क्रमेण संस्कृतविद्यामन्दिरस्य सत्तैव विलुप्येत इति बहुभिराशङ्क्यते। एतच्च thin end of the wedge इति व्यपदिश्यते पाश्चात्त्यैरिति तेषामभिमतम्। यद्यपि न खल्विदानीं राजकीयसंस्कृतमहाविद्यालयः पुरेव छात्रानावर्जयति, न वा हिन्दूनां धर्मगतसंशयच्छेदे धर्मविषयकव्याख्यानादिभिश्छात्राणां मनःसु धर्मभावं समुद्बोधयितुं प्रयतते तथाप्येतस्य खर्वीकरणमत्यन्ताय वा समुच्छेदनं हानय एव भारतवर्षस्येति नो बुद्धिः। प्रेसिडेन्सीमहाविद्यालयेन संयोगमनुप्राप्तस्यास्य विद्यालयस्य कांस्यघटेन संयोगमनुभवतो मृद्घटस्य दशा व्यवस्थितैव।

आशास्यते च शिक्षासचिवमहोदयेन यथा राजकीयसंस्कृतमहाविद्यालयस्य गौरवं लेशतोऽपि न क्षुण्णं भवेत् तथैव विधास्यते।

---

भारतवर्षस्य प्रदेशविशेषेषु ग्रामविशेषेषु वा चातुर्वर्ण्येन पञ्चमवर्णो भृशं निगृह्यते इति तारस्वरेणोद्घोष्यत इदानीं बहुभिर्मनीषिभिः। एतस्य निग्रहस्य वा निग्रहाभासस्य वा प्रतीकाराय पञ्चमवर्णनायकेन अम्बेद-करमहोदयेन जीर्णमिव वसनं सनातनो धर्मः परित्यक्तुमुद्युज्यते। परमेताव-तैव पञ्चमवर्णेन चातुर्वर्ण्यस्य साम्यं लभ्येत वा? आस्तां तावदाध्यात्मिक-हिताहितविचारः, लौकिकमपि हितमेभिरधिगम्येत वा? सर्वथायं प्रयासः वृश्चिकभिया पलायमानस्याशीविषमुखे निपातन्यायं स्मारयति। साम्यं तावच्छशविषाणगगनकुसुमादिसब्रह्मचारि शब्दमात्रमेव। अत्र च भगवती श्रुतिरेव स्वयं साक्ष्यमावहति। तथाच दाशतयीषु श्रूयते—

**समौ चिद्धस्तौ न समं विविष्टः**
**संमातरा चिन्न समं दुहाते।**
**यमयोश्चिन्न समा वीर्याणि**
**ज्ञाती चित् सन्तौ न समं पृणीतः॥**

अस्यार्थः—समौ चिद्धस्तौ समानावपि पाणी। चिदिति निपात एवार्थे वर्तते। समं समानं न विविष्टः कार्यं न व्याप्तः। सर्वथा समानाकार-मपि पाणिद्वितयं न खलु समानेन नैपुण्येन कर्म सम्पादयितुं प्रभवति। एकतरस्य उत्कर्षः अन्यतरस्य चापकर्षः प्रत्यक्षसिद्ध एव। संमातरा चित् वत्सस्य मातरौ धेनू अपि समं समानं पयो दुग्धं न दुहाते न यच्छतः। एकस्या धेनोर्दुग्धं सारतः परिमाणतश्च धेन्वन्तरस्य पयसो भिद्यत एव। यमयोश्चित् सहजातयोः पुत्रयोरपि एकस्मिन्नेव मातृगर्भे समानकालं

पुष्टयोः प्रायेणैककालमेव भूमिष्ठयोरपि बालयोः वीर्याणि पराक्रमादीनि समा समानि न भवन्तीति शेषः। यमयोराकारगतस्य सादृश्यस्य जागरूकत्वेऽपि पराक्रमादिगतं वैलक्षण्यं स्फुटमेव प्रतीयते। ज्ञाती चिन् सन्तौ एकस्मिन्नेव कुले जातावपि समं न प्रीणीतः समं न प्रयच्छतो धनम् इति।

---

अहो गरीयान् प्रभावः कालस्य येनाश्रुतचराण्येव वृत्तानि श्रूयन्ते, अदृष्टचराणि च वस्तूनि प्रत्यक्षीक्रियन्ते। तथाहि वर्षेऽस्मिन् क्वचिद् ब्राह्मणेतरपुरोहितैर्निर्वर्तिता शारदीया महापूजेति वृत्तान्तपत्रतोऽवगम्यते। महाभागाः, यद्याहोपुरुषिकामात्रेण चरणतलेनावमर्दयितुमिष्यन्ते श्रुतिस्मृतिपुराणादीन्यार्यधर्मशास्त्राणि तर्हि किमिति तत्प्रतिपादितदिन एव विधीयते पूजनं देव्याः। आर्यै र्देव्याः पूजनं क्रियते, आयुष्मद्भिरिदानीमस्याहरणं सम्पाद्यताम्, आर्याणामुत्सवः शुक्लसप्तम्यामनुष्ठीयते, श्रीमतां महः कृष्णचतुर्दश्यामनुष्ठीयताम्। इत्थञ्च सर्वेष्वेव विषयेषु सनातनविधीनां वैपरीत्यं विधीयताम्, अलमर्धजरतीयन्यायाश्रयणेन।

---

सहृदयाः, मुहूर्तं तावद्विचार्यतां साम्प्रतिकी परिस्थितिरार्यसमाजस्य। यस्तावत् पूर्वं श्रुतिस्मृतिसदाचारादिभिः सुनियन्त्रित एवासीत् स एवेदानीं स्वेच्छाचारस्य लीलालयः संवृत्तः। एतावन्तं कालं यावद्रामस्य तदनुचरस्य च पूजा प्रचलितासीद्भारते वर्षे, साम्प्रतं पुनः पाश्चात्यसंस्कारव्यामोहितमानसैरसुराधीशस्य रावणस्य पूजनं साडम्बरमनुष्ठीयते। अहो मौढ्यमालङ्कारिकाणाम्, यत्ते "रामादिवद् वर्तितव्यं न रावणादिवत्" इति प्रलपन्ति। सर्वविपर्यासकरः कलिरिदानीं जेगीयते, अत एव सर्वत्रैवौत्तराधर्यं प्रवर्तते इति किमिवात्र चित्रम्!

श्रीक्षितीशचन्द्रशर्मणः।

# प्रभातप्रयाणम्

नास्ति खलु प्रभातचन्द्रचक्रवर्त्ती ! परलोकं प्रस्थितः प्रभातचन्द्रचक्रवर्त्ती ! बृहस्पतेरर्धासनमधिरूढः प्रभातचन्द्रचक्रवर्त्ती ! शिवलोकमनुप्राप्तः प्रभातचन्द्रचक्रवर्त्ती ! किमिदमापतति कर्णविवरं ज्वलदनलशिखासम्भारसदृक्षमक्षरजालम् ! हा हन्त ! अवसीदन्त्यङ्गानि, म्लायन्तीन्द्रियाणि, मुह्यति च मानसम् । भूताविष्ट इव पिशाचोपहत इव स्तम्भित इव उत्कीर्ण इव शृणोमि शब्दान् न पुनः प्रभवामि परिग्रहीतुं तेषामर्थान् । अहो ! कथं नामैतत् सम्भवेत् ! कथं नाम सौम्यसुन्दरश्रीण्यङ्गानि कालिमानं भजेयुः, कथन्तरां साधुशब्दसमुच्चारणपवित्रं स्मितसुधासमुद्भासितं वदनमण्डलं विच्छायतामुपगच्छेत्, कथन्तमां वा क्षुरस्य धारेव निशिता बुद्धिर्वर्षास्विव वासन्ती सुषमा चिरायैव विलीयेत । सर्वथा नैव प्रत्येति तस्य मरणवृत्तान्तं हृदयम् । इदानीमपि परिस्फुरति पुरस्तान्नयनयुगलस्य तस्योपचितसत्त्वं प्रशस्तललाटं वपुः । इदानीमपि श्रवणविवरमनुप्रविशति कौमुदीपङ्क्तिं व्याचक्षाणो महाभाष्याशयं परिष्कुर्वाणो रसतत्त्वं विवृण्वानः सांख्यरहस्यं विभिन्दानस्तन्त्रोपनिषदं निषेवमाणोऽस्य कण्ठस्वरः । इदानीमपि प्रत्यक्षीक्रियत आशुतोषाध्यापकपदमध्यासीनो नानादिग्देशागतविद्वद्वृन्दविद्यार्थिनिवहसंस्तूयमानोऽगाधसत्त्वो महाभागः । अद्यापि निपीयते तस्योपदेशपरम्परोपोषिताभ्यामिव श्रवणयुगलाभ्याम् । विरलाः खलु तादृशा देवभाषायां मातृभाषायां राजभाषायां च सममेव समधिगतनैपुण्याः कोविदवराः । विरलतराश्च तादृशाश्चुलुकीकृतभाष्याब्धयो विपश्चितः । विरलतमाश्च तादृशा विश्वार्त्तिप्रशमनसमर्पितजीवना महात्मानः ।

न जानीमः कीदृशेन वचनोपन्यासेन सान्त्वयेम तस्य स्वजनवर्गम् । स्वयमेव तावत् कथञ्चित् समुपलब्धवृत्तान्तो नालमस्म्यात्मानं पर्यवस्थाप-

यितुम्। "उपनिषदः परिपीता गीताऽपि हन्त मतिपथं नीता" तथापि न प्रभूयते संस्तम्भयितुं गरीयानयं शोकावेगः। किं करोमि! क्व गच्छामि! कुत्र वेदृशोऽग्रजकल्पः स्नेहनिर्भरो लभ्येत बन्धुः? कुत्र वैवंभूतस्तृणीकृतस्वार्थो लभ्येतोपकारकः? कुत्र वैतादृशः सकलशास्त्रार्थकुशलो लोकतन्त्रनिष्णातो लभ्येतोपदेशकः? अतः परं प्रतिपत्तिमूढः कमुपाश्रयिष्ये, विपज्जालसमाकुलः कं शरणं प्रपत्स्ये, उत्तमर्णनिवहप्रपीडितः कं वोपघ्नमवलम्बिष्ये? सर्वथा प्राक्तनसुकृतातिशयेन जाज्वल्यमानप्रतापोऽयं विबुधवरो विबुधराजसदः समलङ्कर्तुं प्रस्थितः परलोकम्, वयमेव विपर्यस्तभागधेया निरन्तरं दन्दह्यामहे शोकानलेन। अथवालं शोकेन। अवितथं किलोक्तमाङ्गलकविना Those whom the gods love die young. येषु स्निह्यन्ति देवास्त एवाकाले कालकवलतामुपयान्ति। सर्वथा स्वस्ति विदधातु भगवान् भूतभावनः पुत्रकलत्रादिस्वजनवर्गाय महाभागस्येति शम्।

श्रीक्षितीशचन्द्रशर्मणः

## स्वर्गतः प्राणाचार्यो हाराणचन्द्रचक्रवर्त्ती

विलसति वङ्गेषु पावनाख्यः प्रदेशः। तत्रैवान्वर्थनामनि जनपदे जनुषी लेभाते हाराणचन्द्रचक्रवर्त्ती च माधवचन्द्रभट्टाचार्यश्च। उभावपि धर्मधनौ ब्राह्मणौ, उभावपि विदितवेदितव्यावधीतसर्वशास्त्रौ सर्वतन्त्रस्वतन्त्रधिषणौ। एकस्तावत् सुश्रुततन्त्रेऽप्रतिद्वन्द्वी, अपरश्च चरकशास्त्रेऽप्रतिमः। एकस्तावच्छस्त्रविद्यासु निपुणस्तृणीकृतजगत्त्रयसत्त्वसारो मूर्त्त इव रुद्रो "जलाषश्च भेषजश्च," अपरश्चौषधितन्त्रे सुव्युत्पन्नोऽतिसौम्यः शिव

इव प्रपन्नार्तिप्रशमनपरः। एवञ्च प्रवृद्धेऽपि कलावार्यवंशपुण्योपचयेन स्वर्लोकात् समवतीर्य भूर्लोकम् उच्चावचामयजालसमाक्रमणखिन्नान् विविधाधिपटलैर्निरन्तरं प्रक्षीयमाणान् जीवनिवहाल्लीलयैव प्रत्यापन्नप्रकृतिकान् विधाय चिरं विरेजतुरश्विनाविमौ साम्प्रतिकेऽपगतसोमकथेऽपि नरलोके। न केवलं सोमरसे स्पृहयालव एव देवा अमर्त्यलोकं प्रविहाय मरलोके पदमर्पयन्ति, अपि तु भक्तजनपरित्राणायापन्नापत्प्रतिकाराय व्याधितव्याधिविमोचनाय स्वत एव परित्यज्य स्वर्गसुखं भुवस्तलमवतरन्ति। अत एव नैतदाश्चर्यं यत् पुरा नासत्याभ्यां सागरात् समुद्धृत्य त्रिभिरहोरात्रैर्भुज्युः पितुः समीपं प्रापितः, साम्प्रतं पुनर्व्याधिसागरात् समुत्तार्यैकेनाप्यहोरात्रेण परोलक्षाः प्राणिनः स्वजनसमीपं नीताः, पुरा किल महर्षिरत्रिरेक एव पीडायन्त्रगृहेऽसुरैस्तुषाग्निना ताप्यमानोऽमृतवर्षणेनानलोपशमनपूर्वकमविकलेन्द्रियवर्गो निर्गमितः, साम्प्रतं पुनः परःसहस्राः पुरुषाः पीडागृहे विविधोपसर्गासुरैः सन्ताप्यमाना भेषजामृतनिषेकेण प्रशमिताखिलसन्तापा अविकलेन्द्रियवर्गा उल्लाघतामनुप्रापिताः, पुरा किल गोतमस्यैकस्यैव महर्षेः पिपासा प्रतिकृता, साम्प्रतं पुनर्दाहज्वरमनुभवतां परिशुष्कतालूनां परःकोटीनां तपस्विनामामयापसारणेन प्रतिकृता दुरन्ता पिपासा, पुरा किल राजर्षिर्ऋज्राश्व एक एवान्ध्याद्विमोचितः, साम्प्रतं पुनरेकेन शस्त्रेणापरेण च भेषजेनागण्यमाना नेत्ररोगिणो दृष्टिशक्तिं प्रतिपादिताः, पुरा किल च्यवन एक एव वार्धकेऽपि विजरीकृतः, साम्प्रतं पुनः सहस्रश एव पुरुषा जराजर्जरितकलेवरा अभिनवयौवनशालिनो विहिताः, पुरा किल विश्पलाया एकस्या एव पादवैकल्यं प्रतिकृतम्, साम्प्रतं पुनः परःशतानां नराणां च नारीणां च पङ्गुभावः प्रतिकृतः। किं बहुना, प्रपन्नानां प्राणिनां प्राक्तनदुष्कृतप्रशमनाय स्वयमेव सुराभ्यामाभ्यां स्वीकृतस्तेषां पातकभारः। तथाहि लोकशिक्षार्थं पातकानाममोघत्वप्रतिपादनार्थं च कालं कञ्चिदेकेनाङ्गीकृतं खञ्जत्वम्, अपरेण चोररीकृतमन्धत्वम्। इत्थञ्च सर्वतोगामिना प्रभावातिशयेन विश्वार्तित्राणं प्रविधायापुण्यतया

मर्त्यानां विधुरतया च देवानां पुनरप्येकः स्वर्गवासं सुरेन्द्रसाहचर्यं चाकामयत। अपरः पुनरिदानीमप्यपगतक्लमो नक्तन्दिवं व्याधितेभ्यो हितं विदधानो वर्तते। चिरं तिष्ठत्वयं मर्त्यलोके चिरं च विशतु भीतिरन्तकस्याप्यन्तरे चिरं च विन्दतु कलिकलुषपूरितोऽपि मरलोकोऽमरलोकतामिति साभिनिवेशमभिप्रार्थ्यत इति शम्।

श्रीक्षितीशचन्द्रशर्मणः

---

## नदीपूरः*

[ निबन्धकः—श्रीमहालिङ्गशास्त्री एम. ए; बि. एल ]

बन्दिनो मम पुरः कलकण्ठाः पञ्चमैर्विदधति स्तुतिपाठम्।
मार्गमादिशति पश्चिमवायुर्नूतनाम्बुभरितः प्रवहामि ॥१॥
वल्गु वल्गितगतिर्नतपातं फेनिलाप्रिमतरङ्गतुरङ्गः।
पार्श्ववीरुदवकीर्णसुमौघैर्यामि मण्डितवपुर्मृदुघोषः ॥२॥
मीनकर्कटकडुण्डुभमेकैर्मत्परिच्छदवरैरनुयातम्।
गृध्रतार्क्ष्यबकसारसमुख्या मामुपासितुममी निपतन्ति ॥३॥
हालिका मम परिष्कृतमार्गाः सर्वतो भुवमसंस्तुततन्द्राः।
लाङ्गलीह्लिखितभूमिविभागाः स्वागतान्यवचसा कथयन्ति ॥४॥
नूतनाम्बुपृषतैस्तटवृक्षान् जीवयामि परिशुष्कपलाशान्।
ग्रामसन्ततिमसह्यनिदाघे वीजयामि शिशिरानिलपूरैः ॥५॥

पूरपातरभसेन करोमि श्वभ्रसैकतदशापरिवृत्तिम् ।
पूरयन्सुषिरवर्त्म कुलीरैर्निर्गतैरुपचिनोमि विनोदम् ॥६॥
हासपूरितविफुल्लकपोलावर्त्तसुन्दरमुखांबुजशोभाः ।
योषितो नवजलाहरणार्थं मामुपेत्य विहरन्ति दिनान्ते ॥७॥
वीचिबाहुमभिनृत्समुदस्यन् फेनपूर्णहसितः कृतकेलिः ।
जातमर्मररवो भ्रमिचक्रै रञ्चितोऽनुविदधाम्यहमेताः ॥८॥
विभ्रमामि विलुलामि विसर्पाम्युत्पतामि तुमुलं विनिवर्त्ते ।
शीकरानवकिरामि तरङ्गानुत्क्षिपामि तरसा प्रवहामि ॥९॥
सारणीभुजशतैः क्षितिखण्डान् सीमबन्धहलपद्धतिक्लृप्तान् ।
प्रापयाम्यगतटीहृतधातून् पौष्टिकान् बहलसस्यसमृद्धेः ॥१०॥
क्वापि सङ्क्रमपथप्रविभक्तः क्वापि कूलरचितावतरालिः ।
क्वापि सेतुभिरपि प्रतिबद्धो यामि च क्वचन नौमुखदीर्णः ॥११।
ग्रामघोषनिबिडोभयकूलः पार्श्वयुग्मविनिविष्टसुहर्म्यः ।
देववेश्ममठिकादिभिराराद्राश्रितः परिवहामि यथेच्छम् ॥१२॥
कुत्रचित् सखिभिराहृतपूरैर्यामि संपदुपबृंहणयोगम् ।
अन्यतश्शतमुखं ह्रदवापीपल्वलेषु विभजामि समृद्धिम् ॥१३॥
काननेषु निबिडेषु निलीनो निर्गतश्च भुवि शाद्वलवत्याम् ।
क्वापि संहततनुर्न च गाधः क्वापि यामि विपुलो न गभीरः ॥१४॥
लीलया पथि लतासुमगुच्छानामृशन्नवनतान् स्वगरिम्णा ।
उद्गतोर्मिरपसारितभृङ्गस्तन्मधून्यभिनवानि पिबामि ॥१५॥
सन्नताग्रतटपादपशाखाचुम्बितः परिमृशंस्तरुमूलम् ।
रोधसि क्वचन पीनविशाले प्रस्खलद्गतिरुपैमि विलम्बम् ॥१६॥
पातयामि शिथिलं यदि कूलं स्रस्तमूलविकलैः सह वृक्षैः ।
आहरामि यदि सेतुवृतीर्वः क्षन्तुमर्हथ लघुं मम मन्तुम् ॥१७॥
वेतसः प्रवणतां मयि यातः फेनकेतुमति किं न विमृश्य ।
वाहिनीं मम निरोद्धुममी क स्तब्धतां विटपिनः कलयन्तः ॥१८॥

यन्मया क्वचन दुर्भरपाथोरंहसा सतरुकुञ्जनिकेतम् ।
भूतलं नवमिव क्रियते तन्नाहमस्मि गदितुं प्रवणो वः ॥१९॥
मन्दमन्दमुपसन्नरथाङ्गं मीनवालहतिभिस्सविभङ्गम् ।
संपतन्मुखरलोलविहङ्गं पश्य मामुपसि विभ्रमतुङ्गम् ॥२०॥
मज्जनागतवधूजनलापाभ्यन्तरोऽहमपवार्य कथास्ताः ।
कौतुकादपिशुनः प्रलपामि स्तोकमर्मरवैरविभाव्यैः ॥२१॥
सन्तरत्सुवदनोरुविमर्दैर्मज्जदास्तिकशिरोलुठनैर्वा ।
दृष्यतोऽपि मम शल्यमिवान्तर्धीवरेण बडिशं समुदस्तम् ॥२२॥
अर्चितस्तिथिषु कामितसिद्ध्यै भामिनीकरसुमाञ्जलिपूरैः ।
विप्रवृन्दविहितार्घ्यपवित्रः कस्य नास्मि महनीयचरित्रः ॥२३॥
बुद्बुदैस्समुदितैस्तपनांशून् दर्शयन् विविधवर्णविचित्रान् ।
उद्वहन्निशि च तारकसङ्गं यामि वीचितरलीकृतशोभम् ॥२४॥
व्योम केशनिचयं विदुरैशं सोऽहमस्मि गलितस्तत एव ।
पावनं हरकपर्दनिवासाद् गाङ्गमंबु यदि किं न तथा मे ॥२५॥
सन्ततं चरति वायुकुरङ्गः सन्ततं सरति कालभुजङ्गः ।
सन्ततं भ्रमति सोऽपि पतङ्गः सन्ततं त्वहमये सतरङ्गः ॥२६॥
गिरिवरकटकेष्वहं प्रजातः किमपि लुठन्नवशैशवेन मुग्धः ।
अवनतशिरसा पतन्नगाधे प्रदरमुखे क्षणमासमाकुलोर्मिः ॥२७॥
भ्रमिशतलुलितस्ततः कथञ्चित् कलकलकृत् प्रतिवेलमुत्पतिष्णुः ।
वनहरितदरीमुखेषु तुल्यैः परिमिलितस्समवातरं धरित्रीम् ॥२८॥
तनुरिति न विषादमभ्यगच्छं प्रतिहतिभिः पथि नाभवं निराशः ।
अकृतपदनिवृत्तिरभ्यधावं विविधविधाभिरतोऽभवं विशालः ॥२९॥
गिरिकुहरदरीवनान्तरेषु भ्रमणवशात् खरसत्त्वमात्रजुष्टः ।
तदनु परिचितोपपन्नमार्गो जगदुपकारविधेर्वहामि पूरम् ॥३०॥
अचलकुचतटीविमुक्तसङ्गं सिचयमिव प्रविकीर्णदीर्घमुर्व्याः ।
व्यतिकरितशिलोच्चयाम्बुराशिं विबुधगणो वियति प्रलोकते माम् ॥३१॥

दृढतरपरिरम्भसंहतोर्मिर्जनपदजीवनदानजातकार्श्यम् ।
सलिलनिधिरमोघजन्मलाभं प्रतिसमुदेति कृतोपसर्पणं माम् ॥३२॥
दशरथ इव कौशिकस्य हस्ते तनयमदाज्जलदाय मां पयोधिः ।
रघुपतिरिव चाभवंस्ततोऽहं जगदुपकारयशःपवित्रपात्रम् ॥३३॥
सर्वासां प्रभवमपां गतिं च तासां पयोधिं चरितविचित्रजन्मलीलः ।
आत्मेव प्रकृतिमहन्महस्तदेकं ब्रह्माख्यं निखिलनिदानमभ्युपैमि ॥३४॥
दिव्यात्मा भुवि विचरन् जगद्विभूतेराधारं पुनरखिलं विशन्नपां तम् ।
उद्गच्छन्नपि च पुनः पुनस्तथैव भ्राजेऽहं परिणतिभाङ् न तु प्रलीये ॥३५॥

इति श्रीमन्महालिङ्गकवेः कृतिषु मणिमालाख्ये गुम्फे द्वितीयं
नदीपूराख्यं लघुकाव्यं समाप्तम् ॥

---

# अपि नाम याज्ञिकी पशुहिंसा प्रामाणिकी

[ निबन्धकः—"अपण्डित धर्मराज" ]

[प्रबन्धेऽस्मिन् प्रमाणोपन्यासपुरःसरं यन्मतं प्रतिपादयितुमिष्टं तत् सर्वथाननुमतमप्यस्माकमाधुनिकयुक्तिजालस्य निदर्शनत्वेन पूर्वपक्षरूपेणात्र प्रकाशितम् । अस्य चोत्तरपक्षप्रतिपादनाय सादरमभिप्रार्थ्यन्ते सनातनधर्म-प्रणयिनो विदितवेदितव्या विपश्चितः । स० सा० प० स० । ]

अयि भोः स्मृत्याम्नायपुराणोपपुराणनिरुक्तव्याकरणछन्दःकल्पमीमांसा-न्यायसांख्ययोगादिसमग्रवेदाङ्गोपाङ्गपरिस्फुटमुक्ताफलहारहारिप्रभाच्छादित--साहित्याम्भोधिसलिलाभिषेकसुकृतिनो महीमण्डलमहनीयमहिमानो दया-दाक्षिण्याद्यपरिमितोदारगुणोदधिसमाकृष्टवृन्दारकवृन्दवन्दितचरणा प्राज्ञा-

प्राद्यशास्त्रार्थपरीक्षणप्रमाणितमतयो नीरक्षीरविवेकिनः साहित्यसरीविहारि-राजहंसा मान्याः सहृदयमहाभागा वाचकाः, पुरा किल लोकोत्तरचमत्कारिमहनीयचरित्रपवित्रीकृतधरित्रीवलये सततयागादिक्रियाकलापनिरतयजमानजने पुण्येऽस्मिन् भारतमहीतले समस्तसत्यव्रतयज्ञव्यवहारपरम्पराचारपूतप्रथितकीर्त्तौ कृतयुगे प्रत्यक्षीकृतमन्त्रैरपास्तसमस्तसंशीतिर्तमस्कर्महर्षिभी राजर्षिभिश्च याः शास्त्रमर्यादा व्यवस्थापितास्ताः खल्वस्माकं दौर्भाग्यदोषोदयान्मध्ययुगे स्वार्थसाधनपरैरपण्डितैरपि पण्डितंमन्यैर्नानाविरुद्धार्थप्रतिपादनपरतयाऽखिलश्रुतितत्त्वप्रकटलुण्ठकैः पाखण्डिभिः सर्वा अपि पदे पदे दूषिताः स्वमाहात्म्यात् प्रच्याविता अतितरां व्यलीयन्त ।

तस्मिन् खल्वन्धानुसरणपरम्पराकीलितकाले कुङ्कुमकेसरागुरुचन्दनकस्तूरीकर्पूरद्राक्षाक्षोटमुस्तातिलचरुपुरोडाशाज्यप्रभृतिविधिविहितसुगन्धिहोमद्रव्यैराशुशुक्षणिमतर्पयन्तो मांसासृङ्मेदोवपाहुतिभिर्हुतवहं जुह्वतः पूतगन्धवाहिभिर्वायुभिर्न केवलं स्वकीयमेव निरयनिपातमनिष्टमुपचिक्युः परं सर्वप्राणिनोऽपि निरतिशयकृच्छ्रदावदहने पातयन्तो महापातकाध्यवसायमङ्गीचक्रुस्तदानीन्तना महामोहमलीमसचेतसो याज्ञिकसम्प्रदायाः । नैतदेवालम्, किन्तु स्वकीयमिदमपसदकृत्यं शास्त्रानुमोदितं व्याहरन्तस्ते परमपवित्रशास्त्रेष्वपि कलङ्ककालिमानं विलिम्पन्तो नातिजिह्रियुः ।

न नूनं नो सन्ति सम्प्रत्यपि ये केचित्साक्षाच्चतुर्मुखमुखकमलसम्भूता अपि, सरस्वतीकण्ठाभरणभूता अपि, धर्मधूर्धुरन्धरा अपि महाव्रता विप्रप्रवरा अद्य पाश्चात्यप्रभावपरिभूतप्रतिभत्वाद्वा, निसर्गनिरर्गलनियतिनिदेशनिमीलितनेत्रत्वाद्वा, सकललोककल्याणप्रवणस्य सत्यसनातनधर्मस्यैतादृगवधीरणे दृढाध्यवसायस्याविधेयस्य विधेर्वैधुर्याद्वा, स्वार्थकदर्थितयथार्थचिन्तनसामर्थ्याद्वा, अपहृतमतय इवाऽऽनुश्रविकीं यज्ञपद्धतिं तिरस्कुर्वन्तो विगर्हिताश्च सत्कुर्वन्तोऽवलोक्यन्ते ।

परन्तु भद्राः, भवद्भिरेव निरीक्ष्यतां निखिलशास्त्रार्थरहस्यविचारणाचणैर्विचक्षणैर्यद्गोमेधपशुमेधादिविविधाख्यानैः पशुव्यापादनपरं वैदिकं

मर्यादाऽतिक्रम्यते न वेति, 'यजमानस्य पशून् पाहि' 'स्वधिते मैनं हिंसीः' 'पशूँस्त्रायेथाम्' 'अभयं नः पशुभ्यः' 'शमसद् द्विपदे शं चतुष्पदे' 'स्वस्ति गोभ्यो जगते पुरुषेभ्यः' इत्यादयः पशुरक्षाप्रेरिकाः पावन्यः श्रुतयः सर्वा विहन्यन्ते यज्ञे पशुहिंसानुमोदनेनेत्यत्र कः प्रतीकारोपायश्चिन्तनीयः स्यात् ?

गोमेधे हि मानवानां मातृतुल्याया दधिक्षीरघृतादिभिः सकलप्राणिनो-नुगृह्णत्या गोर्हिंसनं केषाञ्चिदभिमतम्। परम् 'अघ्न्या' 'अहीः' 'अदिति'-रित्यादीनि गोशब्दापरपर्यायभूतानि पदानि प्रकृतिप्रत्ययद्वारेण तस्या अहन्त-व्यतामेव प्रख्यापयन्तीत्युक्तम्—

"अघ्न्या इति गवां नाम क एतां हन्तुमर्हति ।
बृहच्चकाराकुशलं वृषं गां वालभेत्तु यः ॥"

किञ्च, 'मा गामनागामदितिं वधिष्ट' 'मा नो गामश्वं पुरुषं वधीः' 'गां मा हिंसीरदितिं विराजम्' इत्यादयो गोवधप्रतिषेधपराः श्रुतयोऽपि श्रुतिमतां कथमुपेक्षणीयाः स्युः ?

अथ च,

'किं ते कृण्वन्ति कीकटेषु गावो
नाशिरं दुह्रे न तपन्ति घर्मम् ।'

इति वैदिकमन्त्रपरिपाट्या पयस्विनीनामग्निहोत्रधेनूनां सर्पिःक्षीरक्षारित्वाद् यज्ञोपयोगित्वमेव सिद्ध्यति न तु तन्मांसखण्डाहुतिकदर्थितकृत्यप्रयोजनम्।

यैरश्वमेधयागव्यपदेशेन राष्ट्ररक्षणैकव्रतानां राजन्यानां रणरङ्गैक-सुहृदस्तुरङ्गमा हिंस्यन्ते तेषां कृते तु—

'इमं मा हिंसीरेकशफं पशुं
कनिक्रदं वाजिनं वाजिनेषु'

इति यजुःसमाख्यानम्, 'एकशफो वा एष पशुर्यदश्वस्तं मा हिंसी'रिति शतपथप्रशासनम्, 'देवा आशापाला एतं देवेभ्योऽश्वं मेधाय प्रोक्षितं रक्षन्ते'ति यजुर्निर्देशश्च सत्यासत्यतत्त्वनिरूपणाय प्रस्तूयते। एतेषु स्पष्टमेव

वाजिहिंसाविकत्थनापरेषु शास्त्रेषु सत्सु कथमध्वररूपं पवित्रकर्म पशुशोणितकर्दमप्रवाहैरमेध्यं कर्त्तुं न्याय्यमिति स्वयमेव सुधियो विभावयन्तु।

अथ क्षितिपस्य यस्य क्षित्येकदेश एतादृशाः सत्त्वध्वंसाध्यवसायेनाध्वरफलध्वंसं प्रतीपाचरणैर्नीचाभिजनत्वं चोन्निन्वन्तः कलुषीकृतचेतसः स्युस्तस्य तेषां सर्वप्राणिकदनैककर्मणः करालकालस्य विकरालवक्त्रयन्त्रातिथीकरणमेव दण्डशासनं प्रशास्यते श्रुतिशासनैः। तथा चोक्तं यजुषि 'अन्तकाय गोघात'मिति।

"यः पौरुषेयेण हविषा समङ्क्ते, यो अश्व्येन पशुना यातुधान ॥

यो अघ्न्याया भरति क्षीरमग्ने, तेषां शीर्षाणि हरसापि वृश्च ॥"

इति च सर्वतन्त्रप्रधानभूते ब्रह्मवेदे।

इमां पशुहिंसाप्रतीकारभूतां दण्डाज्ञामुपश्रुत्य कस्य न लोमानि जायेरन् निरन्तरनिबद्धसाध्वसतयाऽङ्कुरितकण्टकान्यरुन्तुदानि? कस्य वा हृदयं दारुणाप्रतिफलमिदं स्मारं स्मारं तीव्रतरतापग्रस्तं भूयो भूयो न वेपेत?

श्रीमद्भागवतस्य चतुर्थस्कन्धे प्राणिवधस्य कीदृशं निरतिशयनिरयशलसन्तापवहं रोमोल्लोचकं चित्रं चित्रीकृतमित्यपि सकलकलाकलापकोविदैः श्रीमद्भिः प्रत्यक्षीकर्तव्यम्—

'भो भोः प्रजापते राजन् पशून् पश्य त्वयाऽध्वरे।
संज्ञापिताञ्जीवसंघान् निर्घृणेन सहस्रशः॥
एते त्वां संप्रतीक्षन्ते स्मरन्तो वैशसं तव।
सम्परेतमयःकूटैश्छिन्दन्त्युत्थितमन्यवः॥'

(श्रीमद्भागवत, स्कन्ध ४)

तथा च पद्मपुराणे—

'यस्तु यज्ञे पशून्हत्वा कुर्याच्छोणिततर्पणम्।
स पचेन्नारके तावद् यावल्लोमानि तस्य वै॥

किञ्च,

'जानाति को वेदपुराणतत्त्वं ये कमणः पण्डितमानयुक्ताः ।
लोकाधमास्ते नरकं पतन्ति कुर्वन्ति मूर्खाः पशुघातनं चेत् ॥

के ते य एतादृशा वज्राज्ञां श्रुत्वापि पशुघातं पुष्यन्तो न वेपन्ते, न त्रपन्ते, न वा निरयनिपातमवलोकन्ते !

अयि अशेषशास्त्रशाणकोणकर्षणनिस्तुषीकृतशेमुषीजुषः पाठकमहाभागाः, एतर्हि अविमेधाजमेधप्रभृतीनामपि कर्णपथातिथीक्रियतां कथा। क्रतौ प्राणिहिंसासमर्थकैरजमेधाविमेधादिप्राचीनप्रचलितशब्दैश्छागादिप्रतिघातनमेव समर्थ्यते। किन्तु

बीजैर्यज्ञेषु यष्टव्यमिति वै वैदिकी श्रुतिः ।
अजसंज्ञानि बीजानि छागं नो हन्तुमर्हथ ॥'

इति स्फुटार्थैव शास्त्रघोषणा तत्पक्षप्रतीपतां द्योतयितुमलम् ।

एतेऽपि ये याज्ञिका यज्ञकर्मणि पशून्व्यापादयन्ति ते मूर्खाः परमार्थं श्रुतेर्न जानन्ति, तत्र किलैतदुक्तम् 'अजैर्यष्टव्यम्' इति, अजाव्रीहयस्तावत् सप्तवार्षिकाः कथ्यन्ते न पुनः पशुविशेषाः ।

इत्यशेषनीतिशास्त्रपण्डितमण्डलीमण्डनः श्रीविष्णुशर्मापि संगृहीतनखिलनीतितन्त्रे पञ्चतन्त्रे यागेषु प्राणिघातपराणां याज्ञिकानामज्ञातशास्त्रार्थरहस्यानां मोहध्वान्तापहितप्रतिभाप्रसारत्वमेवानुमोदते ।

सकलविद्याकलाकलापागारभूतेषु वेदेष्वपि :—

इमामूर्णायुं वरुणस्य नाभिं त्वचं पशूनां द्विपदां चतुष्पदाम् ।
त्वष्टुः प्रजानां प्रथमं जनित्रमग्ने मा हिंसीः परमे व्योमन् ॥

इत्यविहिंसनप्रतिषेध एव तात्त्विकीं गतिमधिरोहति ।

एवञ्च पशुकदनविन्दनपरास्वपरिमितासु श्रुतिषूपलभ्यमानासु नितान्ततमस्तिरोहितप्रज्ञानामविज्ञानां न शास्त्रविज्ञानां भवादृशां वाचकानां पुरतस्तेषामिदं धूलिसमुद्धूलनं समाकुलयितुमलम् ।

अथ चैवं सति सर्वं जगत् कालक्रमानुरोधेनैव करतलामलकवत्पश्य-

द्भिर्महामहिमभिर्योगिभिर्ब्रह्मर्षिभिश्च प्रशमपथपथिकप्रशस्याः सरहस्या ये गोमेधादिविधयः प्रकाशितास्तेषामपि कोऽन्तर्हितार्थ इत्यपि परिपन्थिप्रहार-निराकरणाय विवेचनीयमेव ।

अजादीनां यः सुविज्ञसम्मतोऽर्थः स प्रतिपादित एव । सम्प्रति पश्वादि-शब्दानामपि मम श्रुतिपथे निवेशनीयम् ।

'अग्निः पशुरासीत्तेनायजन्त', 'वायुः पशुरासीत्तेनायजन्त', 'सूर्यः पशु-रासीत्तेनायजन्त ।' इत्यथर्ववेदस्य,

"पशुर्ह वा एष आलभ्यते यत् पुरोडाशः,"

"पुरोडाशो हि सर्वेषां पशूनां मेध उच्यते ।" इति शतपथब्राह्मणस्य च पक्षोऽत्र कक्षीकर्त्तव्यः । महाभारतेऽपि दृश्यते—

'श्रूयते हि पुराकल्पे नृणां व्रीहिमयः पशु' रिति ।

अत्रैव प्रसङ्गे श्रीमहर्षिगार्ग्यायणिप्रतिपादितः पशुयज्ञस्याऽऽध्यात्मिकोऽ-र्थोऽपि विद्वद्भिरवधेयः । तथाहि

'गोमेधस्तावत् शब्दमेध इत्यवगम्यते । गां वाणीं मेधया संयोजनमिति तदर्थात् । शब्दशास्त्रज्ञानमात्रस्य सर्वेभ्यः प्रदानमेव गोमेधो यज्ञः । तद्धवनं च शाब्दिकसन्निधानपदार्थानामेवेति विज्ञेयम् ।'

'अश्वो हि ज्ञानम् । अश्यन्ते सर्वाणि भूतान्यनेनेति तदर्थात् । मेधा तावज्ज्ञानक्रिया भवति । अश्वस्य मेध इति व्युत्पत्तिमङ्गीकृत्य सर्वमिद-मकारात्मकं ज्ञानकरणमिति अश्वमेधक्रिया भवति । अत एवाश्वानां पदार्थानां हवनमपि प्रयुज्यते । अश्वस्तावज्ज्ञानजन्यः पदार्थस्तेषां हवनञ्च तद् ब्रह्माग्नौ सम्प्रदानमेव इति हि तदर्थः । अत एव

'ज्ञात्वा ब्रह्म यथायोग्यं यश्चान्येभ्यश्च दापनम् ।
अश्वमेधः परो यज्ञः सर्वमुक्तिप्रदायकः ॥'

इत्यादि प्रवचनम् । एवं 'ब्रह्मपो हि ब्रह्मसराष्ट्रतां याति' इत्यपि च । अत्र हि ब्रह्मज्ञानं ज्ञानप्रदानमेवेति सम्भवात् । तदेवमश्वमेधाख्यं कर्म यावज्ज्ञानबद्धं तावन्मोक्षप्रदमेवेति फलितं भवति ।

अश्वमेधश्च सवज्ञानोपलक्षकः . अन्यपरस्त्वार्थो भवति। सर्वं स्वात्मानं मत्वा चेति तदाशयो विज्ञेयः।

'नरमेधश्चेच्छापरस्तयोः सम्बन्धरूपो बोध्यः। नर इति सर्वाश्रयभूतस्यैव संज्ञा। सर्वाश्रयं सर्वमित्येतद्बोधमात्रं तदेवेति बोध्यम्।'

'समाहारश्चाजमेधः सर्वधर्मानुवर्त्तनः।
जायते म्रियते नैव चेति मिथ्यायुतो भवेत्।
स एवमजमेधोऽयं समाहारस्तदात्मकः।'
'ततश्च महिषो मेधः पञ्चमः सर्वसंस्थितः
ब्रह्मणा क्रियते नित्यम्।'

इत्येवं गोमेधादिपञ्चमेधस्य सुनिरूपितोऽर्थस्तात्त्विकपक्षप्रतिक्षेपणाय विपश्चिद्भिः प्रतिग्राह्यः।

अश्वमेधप्रसङ्गे च—

'अश्नुते व्याप्नोति सर्वं जगत् सोऽश्व ईश्वर इत्युक्तत्वादीश्वरस्यैवात्राश्वसंज्ञाऽस्ति। अन्यच्च 'राज्यमश्वमेधसंज्ञं' भवति, क्षत्रमेवाश्वमेधसंज्ञकं भवती'ति ऋग्वेदादिभाष्यभूमिकायामार्यसमाजप्रवर्त्तकस्य वेदविरुद्धनानायावनख्रीष्टादिसम्प्रदायखण्डनैकवीरस्य वेदधूर्धौरेयस्य महर्षेर्दयानन्दस्यापि व्याख्यानं विशकलयन्तु विद्वांसः।

अपि श्रुतितत्त्वानभिज्ञजनविगर्हिताचारवितताखण्डपाखण्डपाटच्चराः सुतीर्थेश्वरसमाराधनसंहृताशेषकल्मषाः सकलशास्त्रपारदृश्वानो वाचकमहाभागाः, अद्य हि सत्यसनातनवैदिकधर्मप्लवो नो विप्लवायते, सकलमपि सुकृतं सकृदेव दुष्कृतायते। यो हि धर्मोऽद्यावधि सततं सयत्नमस्मत्पूर्वजैरसुभिरपि परिरक्षितस्तस्यैव कण्ठेऽद्य यत्सत्यं निर्घृणं प्रह्रियते। तदप्यस्मद्बन्धुभिरथ च धर्मस्य नाम्नि। किमन्यत् तैरत्र प्रमाणान्यपि प्राप्यन्ते। का गतिः। कलेरयं प्रभावो यदश्रुतं श्रावयति, यदस्मृतं स्मारयति, यददृष्टं दर्शयति। का परिवर्णना। एतस्य कीर्त्तनमात्रादेव दूरमपतिष्ठति रसना। हन्त सकलसंसारसपर्याभाजनेऽस्मिन् भारतभूतले परममेध्यतीर्थेषु असङ्ख्यजन्मिनोऽ-

सुभिर्वियोज्यन्ते, मूर्त्तावारोह्यन्ते। न किं यज्ञवह्नौ पशुहोमस्यैव कालचक्र-परिवर्त्तितमिदं विकृतं रूपम्?

अये! किमुच्यते, अस्मत्पूर्वजानामियं परिपाटीति? अहह! शान्तं पापम्, प्रतिहतममङ्गलम्। यत्कृते परमभूतदयाविष्टो महर्षिः पतञ्जलि-र्व्याहरति—

'आदिकाले खलु यज्ञेषु पशवः समालम्भनीयाः—कुङ्कुमादिना गात्रेषु विलेपनीयाः—बभूवुर्नारम्भणाये'ति। यदर्थं च मञ्जुलमहाभारतकथोपनिबन्धनचारित्र्येण संगृहीतं सकलश्रुत्यर्थस्य महर्षिव्यासस्योक्तिः प्रथीयसी—

'सर्वकर्मस्वहिंसां हि धर्मात्मा मनुरब्रवीत्
कामचारा हि हिंसन्ति बहिर्वेद्यां पशून्नराः'॥ इति। (शान्तिपर्व)

तत्रैवं लाञ्छितानि जल्पितानि जल्पतां कथं न रसनैव ज्वालाकुलीभवति?

पाठकाः, श्रूयतामियं ब्राह्मणकथा—

"तद्धैतज्जनको ह वैदेहो याज्ञवल्क्यं पप्रच्छ।
"वेत्थाग्निहोत्रं याज्ञवल्क्य?" इति
"वेद सम्राडिति।"
"किम्" इति।
"पय एव" इति।
"यत्पयो न स्यात् केन जुहुया" इति।
"व्रीहियवाभ्याम्" इति।
यद् व्रीहियवौ न स्यातां केन जुहुया" इति।
"या अन्या ओषधय" इति।
"यदन्या ओषधयो न स्युः केन जुहुया" इति।
"यदारण्या ओषधय" इति।
"यदारण्या ओषधयो न स्युः केन जुहुया" इति।
"अद्भि" रिति।
"यदापो न स्युः केन जुहुया" इति।

स होवाच न वा इह तर्हि किञ्चनाऽऽसीदथैतदाहूयतैव सत्यं श्रद्धायाम्' इति। 'वेत्थाग्निहोत्रं याज्ञवल्क्य। धेनुशतं ददामी'ति होवाच।"

अहो स्मृतिविभ्रमो वा, दृष्टिदोषो वा, अनुभवशून्यता वा, अर्थापरिज्ञानं वा, प्रज्ञाविलोपो वा? किमेतदापन्नम्? मांससंकेतं नोपलभामहे। तत्किन्विदमस्मद्दोषवत्त्वमेव? उत परीक्षाकौशलम्। भवद्भिरेव परिचीयताम्। किं सन्देहेन। पिशितशोणितवसाप्रभृतीनां मुखनासोदरादिकानां चानुपलम्भने कोऽन्यो हेतुर्भवेद्? उक्तमेव—

'यदि यज्ञांश्च वृक्षांश्च यूपांश्चोद्दिश्य मानवाः।
वृथा मांसानि खादन्ति नैष धर्मः प्रशस्यते॥'
'सुरां मत्स्यान् मधु मांसमासवं कृशरौदनम्।
धूर्तैः प्रवर्त्तितं ह्येतन्नैतद्वेदेषु विद्यते॥'
पायसैः सुमनोभिश्च तस्यापि यजनं स्मृतम्।
याज्ञपार्श्वैव ये वृक्षा वेदेषु परिकीर्त्तिताः॥' (शान्तिपर्व, मोक्षधर्म)

किमन्यदपि प्रमाणजातमर्थ्यते?

'ध्रुवं प्राणिवधो यज्ञे नास्ति यज्ञस्त्वहिंसकः।
ततोऽहिंसात्मकः कार्यः सदा यज्ञो युधिष्ठिर॥' (शान्तिपर्व)
'यस्तु प्राणिवधं कृत्वा देवान् पितॄंश्च तर्पयेत्,
सोऽविद्वाँश्चन्दनं दग्ध्वा कुर्यादङ्गारलेपनम्॥' (पराशरस्मृति)

एतादृशीं प्रमाणपरम्परां श्रुतिपथातिथीकृत्यापि ये मूढमनसो दुराग्रहग्रहगृहीतमतयोऽध्वरेषु सत्त्वप्रतिहिंसनाग्रहं न त्यजन्ति तेषां कृते त्वेत एव शब्दा बलान्मुखतो निःसरन्ति—

"प्रज्ञा शार्करिला तथाऽस्ति हृदयं पाषाणसारं नु किम्?"

अतो यज्ञेषु प्राणिहिंसासमर्थनार्थप्रस्तुतहेतवस्तु प्रमाणाभासत्वेन गजभुक्तकपित्थवन्निस्तथ्या उपेक्ष्याश्च प्रेक्षावताम्।

इति शम्-ॐ तत्सत्।

---

# संस्कृत-साहित्य-परिषद् ऊनविंशवर्षीयकार्यविवरणम्

[ निबन्धकः—श्रीअमरेश्वरठाकुर-वेदान्तशास्त्री ]

आदौ तावद्विधिविष्णुशिवादिभिर्देववृन्दैर्निरन्तरमभिवन्दितां निखिल-विद्याधिष्ठात्रीं भगवतीं वाग्देवतां भूयो भूयोऽभिवाद्य तथा संस्कृत-साहित्य-परिषदः संरक्षकान् अनुग्राहकान् सदस्यवर्गांश्च यथायोग्यमभिवादन-प्रमोदपरिष्वङ्गादिकं विज्ञाप्य सश्रद्धमाभाष्य च संस्कृत-साहित्यपरिषद् ऊनविंशवार्षिकाणि कार्याणि विवरीतुमुद्युक्ताः स्मः ।

प्रथमत एव परिषदः परमबन्धूनां प्रथितनामधेयानां केषाञ्चिन्महा-पुरुषाणां वियोगवार्त्ता शोकभारपर्याकुलेन चेतसा भवतां पुरतः समवतार्यते । वर्षेऽस्मिन् परिषदः परमहितकारिणो वङ्गजनन्याः कृतिसन्तानाः कलिकाता-विश्वविद्यालयस्य "भाइसच्यान्सेलार" इतीदं पदमभिरूढपूर्वाः स्यर् देवप्रसादसर्वाधिकारि सि-आइ-इ, सिवि-इ, एम-ए, एल एल-डि, सूरिरत्न-महोदयाः, उदार-हृदयाः कलिकाताविश्वविद्यालय-संस्कृत-विभागीय-प्रधाना-ध्यापका भूरिशास्त्रपरिशीलनलब्ध-प्रतिष्ठाः डा० प्रभातचन्द्रचक्रवर्त्ति एम् ए, पि आर एस, पि एच् डि महोदयाः, सुपण्डित-कविप्रवर-राखालदास-दर्शन-तीर्थमहोदयाः, आजीवनं परिषत्सदस्यभूताः स्वधर्मनिष्ठाः शरच्चन्द्र-चट्टोपाध्यायमहोदयाः, परिषद आजीवनं सदस्यभूता वदान्यप्रवराः शेठ तुलारामजी गोयेन्का महोदयाः, परिषदः कार्यनिर्वाहकसमितेः सदस्यभूताः सुपण्डित-भुवनमोहनसांख्यतीर्थमहोदयाः तथा परिषत्सदस्याः परम-सुधियः प्रसिद्धचिकित्सकाः एकेन्द्रनाथघोष एम्-ए, एम्-डि महोदयाश्च परलोकमधिरुह्य परिषत्संसृष्टानस्मान् शोकमहाम्बुधौ निमज्जितवन्तः ।

महात्मनाममीषामभावेन परिषदो येयं गुर्वी क्षतिः संवृत्ता तस्याः पुनः पूर्त्तिर्नैव सम्भाव्यते । वयममीषां कर्मोचितां शुभां गतिं कामयामहे ।

**परिषद् उद्देश्यम्**—श्रुति-स्मृति-पुराणादिजनन्याः कविकुलललाम-भूतानां कालिदासादीनां चिराराधनसमृद्धायाः सुरभारत्याः सम्यक् प्रसार-कामनया प्रतिष्ठापितेयं संस्कृत-साहित्य-परिषत् संस्कृतभाषायास्तथा तदुप-निबद्धभारतीयसाहित्यानां च गौरवसंरक्षणे निरतैव विंशे वर्षे पदमर्पयति ।

संस्कृतभाषायाः संस्कृत-शास्त्रस्य च प्रसाररूपमुद्देश्यं साधयितुं परि-षदियं प्राधान्येन सप्तोपायानवालम्बितवती—

(१) साधारणसभाधिवेशनेन संस्कृत-भाषोपनिबद्धानां निबन्धानां पाठः ।

(२) चतुष्पाठीसंस्थापनेन शास्त्राध्यापनम् ।

(३) परिषत्पुस्तकालये मुद्रितानां हस्तलिखितानां च संस्कृत-ग्रन्थानां संरक्षणम् ।

(४) अप्रकाशितानां संस्कृतग्रन्थानां प्रकाशः ।

(५) संस्कृतभाषया मासिकपत्रप्रचारः ।

(६) संस्कृत-रूपकाभिनयः ।

(७) प्रतिष्ठानान्तरसहयोगश्चेति ।

मान्या महाभागाः, उपायानिमानुपजीव्य परिषदियं विगते वर्षे केन केन कर्मणा कियत् साफल्यं लब्धवतीति भवतां विज्ञानार्थमुपन्यस्यते—

**वार्षिकसभा**—विगतवर्षीयसौराश्विनस्य विंशदिवसे परिषदोऽ-ष्टादशवार्षिकमहोत्सवो यथारीत्यन्वष्ठीयत । तदुपलक्ष्य "कलिकाता इउनि-भार्सिटी-इनष्टिटिउट्"भवने परिषदो वार्षिकाधिवेशनं समवर्तत । तत्र सुगृही-ताभिधाना विद्यानुरागिणः श्रीमन्तः किरणचन्द्र-दे--एम्-ए सि-आइ-इ आइ-सि-एस् महोदयाः सभापतिपदमलंकृत्य सुरभारत्यामात्मनः परमश्रद्धाशीलता-भिव्यञ्जकेन अभिभाषणेन सभासदः प्रीणितवन्तः । विविधविद्याविशारदानां संस्कृतसाहित्यरसास्वादलुब्धचित्तानां बहूनां विदुषां समागमेन परिषदोऽपूर्वं गौरवं समुपाचीयत । सभापतिमहोदयेन स्वर्गत-रायबाहादुरशरच्चन्द्रदास सि-आइ-इ महोदयानां प्रतिकृतेरावरणमुन्मोचितम् । ततश्च महात्मना-ममीषां संस्कृतानुरागं विविधगुणावलीं च सश्रद्धमुत्कीर्त्य बहवः सुविद्वांसः

सभासदामपि चेतांसि श्रद्धायुक्तान्यकुर्वन्। अन्ततश्च नाट्य-कलाकुशलैः परिषत्सदस्यैः श्रीहर्षकविकृतायाः प्रियदर्शिकाया नवीनकवि-श्रीयुक्त-कालीपद-तर्काचार्यकृतस्य स्यमन्तकोद्धारस्य च साध्वभिनयेन सर्वेषां चेतांसि विमलानन्दास्वादनया समावर्जितानि समुपार्जिताश्च भूयांसः साधुवादाः।

**कार्यनिर्वाहकसमितिः**—विगतवर्षे परिषदः कार्यनिर्वाहकसमितेर्द्वादशाधिवेशनानि वृत्तानि। तत्र तदधिकृताः सर्व एव सदस्याः सामहं सम्भूय विचारपूर्वं परिषदः कृत्याकृत्यनिरूपणरूपं कर्त्तव्यमप्रमादेन परिपालितवन्तः।

**साधारणसभा**—दशसु साधारणसभाधिवेशनेषु विविधविद्यानुशीलनलब्धप्रावीण्यानां विमलमनीषाणां बहूनां विपश्चितां—"न्याय-तत्त्वकणिका" "उपनिषत्कथा" "धर्मपरिस्थितिः" "पाणिनितन्त्रं कातन्त्रं च" इत्याद्यभिधाना बहवः सारगर्भा निबन्धाः पठिताः पर्यालोचिताः समनन्तरं परिषत्पत्रिकायां प्रकाशमुपनीताश्च सन्तोऽनुसन्धित्सूनां विद्यार्थिनां महोपकारमसाधयन्।

**विशेषाधिवेशनम्**—एतदतिरिक्तानि गोवर्द्धनमठाधीश-श्रीभारतीकृष्णतीर्थ-शङ्कराचार्य-महोदयानां तथा रामानुज-मठाध्यक्ष-जगद्गुरु-श्रीरामानुजाचार्यमहोदयानां चागमनं परिषदोऽन्यतमसहकारिसभापतिकविराजशिरोमणि-श्यामादासवाचस्पतिमहोदयानां च परलोकप्रयाणम्, परिषदो विशिष्टसदस्यानां विचारपतिस्यर-श्रीमन्मथनाथमुखोपाध्यायमहोदयानां कलिकातास्थप्रधानविचारालये प्रधानविचारकपदप्राप्तिः परिषत्सदस्येभ्यः सुविज्ञविचारकेभ्यः श्रीमद्भ्यः प्रबोधचन्द्रदे आइ-सि-एस् महोदयेभ्य उपाधिप्रदानम् इत्यादीनि संघटनानि निमित्तीकृत्य परिषदो विशेषाधिवेशनान्यपि कानिचित् संवृत्तानि।

**चतुष्पाठी**—प्रधानाध्यापकश्रीयुक्त-सीतानाथ-सिद्धान्तवागीशमहोदयानामध्यापनकौशलेन गौरववती परिषद् विगत-वर्षे वेदपुराण-दर्शन-काव्यव्याकरणादिशास्त्रेषु त्रिंशत्संख्याकांश्छात्रान् गृहीतविद्यानकार्षीत्। तेषु संस्कृत-एसोसियेशन-गृहीतपरीक्षामवतीर्णानां सप्तानां पञ्च वोत्तीर्णाः।

विद्यार्थिनः खलु गुरुगृहमाश्रित्य गुरोरेव सकाशादभ्यवहार्यं वासस्थानं च आसाद्य विद्याग्रहणसौकर्यं लभन्ते इति सुप्राचीनेयं रीतिः। अधुना अध्यापकानां दारिद्र्यातिशयात् क्रमशो विलोपमापद्यमानाया रीतेरस्याः संरक्षणार्थं परिषदियं प्रतिवर्षं छात्रेभ्यो यथाशक्ति वृत्तिं प्रददाति। परन्त्विदानीमपि प्रयोजनानुरूपार्थागमविरहाद् वृत्तेः परिमाणं वर्धयितुं नैव शक्नोति। अत्यन्तापेक्षितं छात्रावासनिर्माणं चिरादभीप्सितमप्यर्थाभावान्नैव घटते। अत्रार्थे उदासीनानां वदान्यतमानामात्मकर्त्तव्ये समवधानं कामयामहे।

**ग्रन्थागारम्**—परिषदो ग्रन्थागारे इदानीं प्रायः पञ्चसहस्रसंख्यका मुद्रितग्रन्थाः त्रिसहस्राधिका हस्तलिखितग्रन्थाश्च वर्त्तन्ते। अस्मिन् वर्षे चतुःपष्ट्यधिकद्विशतसंख्यका मुद्रितग्रन्थाः पञ्चसंख्यका हस्तलिखितग्रन्थाश्च संगृहीताः। साम्प्रतम् अनुसन्धाननिरताश्छात्रा अध्यापका अन्ये च विद्वांसः परिषद्ग्रन्थागारात् स्वाभिमतग्रन्थप्राप्तिविषये प्रायो वैफल्यं नैव भजन्ते इत्यनल्पमिदमानन्दपदं परिषदनुरागिणां सर्वेषामेव। मनीषिणः सर्व एव ग्रन्थसंग्रहकर्मणि परिषदः साहाय्यकमवलम्ब्य ग्रन्थागारस्यास्य समुन्नतिं विदध्युरित्याशंसामहे। "कलिकाता कर्पोरेशन" इत्येतस्मात् परिषदियं ग्रन्थागारोन्नयनार्थं ( १९३४-३५ ) वर्त्तमानवर्षे रौप्यकाणां सार्द्धषट्शतीं प्राप्तवती। अतस्तदधिकृतेभ्यो धन्यवादान् वितरामः।

**परिषत्पत्रिका**—अष्टादश वर्षान् यथारीति प्रचरद्रूपं संस्कृतसाहित्यपरिषत्पत्रिका नाम परिषदो मासिकं मुखपत्रं भारतवर्षीयनानाप्रदेशवास्तव्यैः सुधीभिः परिप्रेषितं निबन्धजातमुपादाय विनोदयति विदुषां चेतांसीति विदितमेवैतत् सर्वेषाम्। षड् वत्सरान् यावदियं कलिकाताविश्वविद्यालयाध्यापकानां श्रीमतां क्षितीशचन्द्रचट्टोपाध्याय एम्. ए महोदयानामान्तरिकप्रयत्नेन यथाकालं प्रचरन्ती, व्याकरण-साहित्यदर्शनादिविविधविषयानुरसि वहन्ती सम्पादकमहोदयानाश्चानितरसाधारणं वैदुष्यमाविष्कुर्वती पत्रिकाजगति मूर्धा-

भिषिक्तायते। सम्पादकमहोदयाः स्वममूल्यं समयमविगणय्य अन्यदपि संस्कृताङ्लभाषयोः पत्रिकाद्वितयं स्वव्ययेन परिचाल्यापि यदिमां नावधीरयन्ति प्रत्युत प्रियतमामिव चिरं श्रद्दधति ततस्तेभ्यो धन्यवादशतं वितरामः। नूनमुपलक्षितमेव श्रीमद्भिः पत्रिकाया अस्या भूयांस एवांशाः सम्पादकानां स्वीयेनैव लेखेनालङ्कृता वर्त्तन्त इति।

**रूपकाभिनयः**—परिषदियं सुरभारतीं प्रति जनानामनुरागसञ्जननार्थं यानुपायान् अवलम्बितवती—संस्कृतरूपकाभिनयस्तेषामन्यतमः। अद्य यावत् परिषत्सदस्या यानि षड्विंशतिसंख्यकानि नाटकप्रहसनान्यभिनीय सामाजिकानां मनो रञ्जितवन्तस्तेषामनेकान्येवानभिनीतपूर्वाणि। प्राचीननाट्यकलायाः समुत्कर्षसम्पादने सर्वत्रैव परिषत्सदस्या अपूर्वं नैपुण्यविशेषमाविष्कृतवन्तः—येन वङ्गविषयेभ्यो बहिरपि तैरासादितः समादरातिशयः।

साम्प्रतं राष्ट्रव्यापिन्यर्थकृच्छ्रता, तेन परिषदोऽतिमात्रमार्थलाघवं सञ्जातम्। गृहकोपादानमादाय परिषदिदानीं कृत्यजातं निर्वाहयति। पूर्ववर्षे इव विगतवर्षेऽपि परिषद् गभर्णमेण्टसकाशात् साहाय्यरूपेण केवलं मुद्राणां पञ्चशतीं प्राप्तवती। स्वल्पमेवेदं साहाय्यकं प्रयोजनापेक्षया। कतिपयेभ्यो वर्षेभ्यः प्राक् मुद्राणां सहस्रत्रयमपि परिषद् गभर्णमेण्टसकाशादलभत। नातिचिरमेव कृत्यगौरवमुपलभ्य "गभर्णमेण्ट" अत्रार्थे सानुग्रहां दृष्टिं पातयिष्यतीत्याशास्महे अधिकृतेभ्यो राजपुरुषेभ्यः श्रद्धापूरितचेतसा कृतज्ञतां च ज्ञापयामः।

ये तावन्महात्मानो वदान्यप्रवरा विगतवर्षे अर्थप्रदानेन ग्रन्थागारसमृद्ध्यर्थं पुस्तकप्रदानेन च परिषदमनुगृहीतवन्तस्तेभ्यस्तथा यानि वृत्तान्तपत्राणि सामयिकपत्रिकादीनि च परिषदुदन्तजातप्रकाशनेनास्माकमुपकृतवन्तस्तदधिकृतेभ्यश्च कृतज्ञताविज्ञापनपूर्वकं शतशो धन्यवादान् वितरामः।

अर्थाभावाद् विगतवर्षे परिषदो ग्रन्थप्रकाशविभागे संमुद्रणयोग्यं

किमपि कृत्यं नैव निष्पन्नम्। परिषदः स्वकीयभवननिर्माणमपि अर्थाभावादद्यापि मनोगतमेव वर्त्तते। भवनाभावाच्च दिने दिने परिपोषमापद्यमानस्य सुविशालग्रन्थागारस्य तथा चतुष्पाठीविभागस्य च कृत्यावलीपरिचालना क्रमशो दुष्करतामवगाहते। महता प्रयत्नेन संगृहीतानां मुद्रितामुद्रितमहामूल्यग्रन्थरत्नानां तथा महतो द्रविणराशेर्विनियोगेन विनिर्मितानां तैलचित्राणां च संरक्षणं सम्भविष्यति न वेति महतीयं चिन्ता समाक्रामत्यस्माकं चेतांसि। 'मनोहरपुकुर'वर्त्मस्थायां परिषदः स्वीयभूमौ गृहनिर्माणार्थं समितिरेका परिकल्पिता। तत्र श्रीमन्तः प्रबोधचन्द्र-दे आइ, सि-एस्, महोदया अध्यक्षत्वेन निरूपिताः। वयमाशंसामहे—यद् विद्यानुरागिणः सज्जनाः सर्व एव कोपस्यास्य परिपूरणमपरिहार्यकर्त्तव्यकक्षायां निक्षिप्याचिरमेव तत्रावधानं प्रयच्छेयुरिति।

अयि मान्या महाभागाः, श्रुतिस्मृतीतिहासपुराण-तन्त्रज्योतिषायुर्वेदच्छन्दःसाहित्यन्यायमीमांसासांख्यवेदान्तादिशास्त्राणां जननीस्वरूपा येयं सुरभारती सर्वजगतां विस्मयमादधाना सगौरवं चिरादात्मानं प्रतिष्ठापितवती, या च प्रायः सर्वासामेव भारतीयानां भाषाणां जननी, यत्साहाय्येन वयमस्माकम् अतिप्राचीनानां व्यवहाराणां गौरवमण्डितं स्वरूपमुपलभामहे, पूर्वजानां चापूर्वं महिमानमनुभवामः, यद्यौदासीन्यादुपेक्षया वा तां प्रत्यश्रद्धां प्रदर्शयामस्तर्हि ध्रुवोऽस्माकमचिरादेव समाजविध्वंसः। भारतीयानां प्राणभूता सुरभारती येषां ममत्वानुरागं नोपार्जयेत्, अनर्हा एव त एकान्ततो "भारतीय"संज्ञायाः। तदमुष्याः प्रसारसाधनाय परिकल्पितेयं परिषद् यथा सर्वावयवपरिपोषमासाद्य अनवद्येषु प्रतिष्ठानेष्वात्मप्रतिष्ठामर्जयन्ती अनल्पाकल्पोज्ज्वलकान्त्या धरातलमुद्भासयन्ती चाकल्पमात्मस्थितिमासादयेत् तथैव सर्वे संस्कृतानुरागिणः कल्पयन्त्विति अध्येषयामः।

ननु भद्राः, एतावदर्थकष्टकरालेऽपि कालेऽस्मिन् दीनतमाऽपीयं परिषद् यत् कथमपि आत्मानं धारयति तत्र हेतुः सानुकम्पानां भवतामेवार्थसाहा-

यक्रम्, कर्मपरिचालकानां चात्यन्तिकी चेष्टा। परं दिने दिने नवं नवमभ्युदयमस्याः कामयमाना भूयोऽपि निवेदयामो भवन्तस्तु यन्महाभागाः, प्रतिदिनमुपचितानुरागेण चेतसा कल्याणमस्या अनुक्षणमनुध्यायताम्, विधीयतां सदयदृष्टिर्वसुवृष्टिश्चानुरूपेति शम्।

---

## संस्कृत-साहित्य-परिषद् ऊनविंशवर्षीयमधिवेशनम्

व्यतीते सौराश्विनस्य सप्तमदिवसे परिषद् ऊनविंशवर्षीयमधिवेशनं कलिकाता 'इउनिभार्सिटि इन्ष्टिटिउट्' इत्याख्यभवने सुनिष्पन्नमासीत्।

तत्र महामहोपाध्याय-श्रीयुक्तदुर्गाचरणसांख्यवेदान्ततीर्थमहोदयस्य प्रस्तावक्रमेण महामहोपाध्याय-श्रीयुक्त-शितिकण्ठवाचस्पतिमहोदयस्य समर्थनक्रमेण च माननीया 'नसीपुरा'धीश्वराः श्रीमन्तो भूपेन्द्रनारायणसिंहबाहादुरमहोदयाः सभापतिपदमलमकार्षुः। सभायां महामहोपाध्यायप्राया भूस्वामिभूयिष्ठा आङ्गलशिक्षितबहुलाः सामाजिकाः सोत्साहं समवेताः समसूचयन् संस्कृत-साहित्य-परिषदः परिमाणपरिहीनामनन्यसाधारणां सफलताम्।

सभाकार्यप्रारम्भे परिषत्सम्पादकेन श्रीमता अमरेश्वरठाकुरवेदान्तशास्त्रिमहोदयेन परिषद् ऊनविंशवर्षीयं कार्यविवरणं संस्कृतभाषया निबद्धं वाचितमभूत्। संक्षेपेण सर्वकार्यविवरणगर्भः सुललितोऽयं निबन्धः पत्रिकायामस्यां पत्रान्तरे पाठकैरवलोकनीयम्। परिषदः सह-सम्पादकान्तरेण श्रीमता दीनबन्धुसाहित्यशास्त्रिणा सङ्कलितं परिषदः कार्यविवरणगर्भम्, सभाया अभिनयस्य कार्यसूचीरूपञ्च किञ्चन वङ्गभाषावङ्गाक्षर-

अस्ति चायं चिराचरितः समुदाचारः परिषदः—यदत्र वार्षिकमहोत्सवे कस्यचन विश्रुतयशसो विदुषो वा भूस्वामिनो वा परासोश्चित्रमुन्मोचयितव्यमिति। तन्नियमानुगत्या विद्यासागरमहाविद्यालयाध्यक्षस्य स्वर्गतस्य विद्वत्प्रवरस्य नानाग्रन्थप्रणेतुः सारदारञ्जनरायमहोदयस्य चित्रं सभापतिनोन्मोचितम्। तदुन्मोचनावसरे च कियद्भिश्चन वाग्मिभिः सभापतिभिश्च परासोस्तस्य गुणानप्युन्मोचयद्भिः सभ्यानां मानसान्यावर्जितानि। ततश्च सभापतिमहोदयेन स्वोपज्ञविज्ञत्वबहुज्ञत्वाद्यनुरूपं मधुरमधुरं वङ्गभाषामयं भाषणं पत्रारूढभूयोऽशं सरलललितया वाचा सभासदां पुरतो वाचितम्।

सभान्ते च नाट्यकुशलाः परिषत्सदस्या नवीनस्य 'नलदमयन्तीयम्' इत्याख्यस्य नाटकस्य प्रयोगेण सदस्यानां मनांस्यरञ्जयन्। तदिदं नाटकं परिषदः प्रारम्भत एव तदाचार्यरूपेण, मध्यतश्च तदाचार्य-तत्पत्रिकाध्यक्षरूपेण, अन्ततश्च तत्कार्यनिर्वाहकरूपेण बहून् कालान् परिषदं परिपोषयता मुक्तिवादादिविविधग्रन्थकर्त्रा कलिकातासंस्कृतमहाविद्यालयीयन्यायशास्त्राध्यापकेन नवीनकविना श्रीमता कालीपदतर्काचार्य-महोदयेनाध्ययनदशायां विरचितं मूलाजोडसंस्कृमहाविद्यालये 'सारस्वतमहोत्सवसम्भावनार्थं विद्यार्थिवृन्दैरभिनीतयं' विदर्भसमागमं नाम नाटकं 'निःशेषं परिवर्त्य कल्पनायाञ्च रचनायाञ्च' संस्कृतसाहित्यपरिषद्ध्यापनदशायां विरचितमभूत्। परतश्च मुद्रणेन तदिदं नाटकं कियतश्चित् कालात् पूर्वं परिषद्ग्रन्थमालायामन्तर्निविश्य मध्यमणिरिव द्योतते। इत्यस्य भूमिकापर्यालोचनया वैयक्तिकविशेषज्ञतया चास्माभिर्विज्ञायते। ततोऽपि बहोः कालात् परं दैववशात् कवेर्भाग्यवशाद्वा सुमनीषोदयेनाभिनेयवस्तुनि दत्तावधानैरभिनयकुशलैः परिषन्नाट्यपरिचालकनिवहैरिदानीं नवीनस्य कवेर्नाटक-मिदमभिनयसम्मानेन भूषितमिति महदेव प्रमोदस्थानमस्माकम्। दिष्ट्या वाच्यान्निर्मुक्ताः संस्कृतसाहित्यपरिषन्नाट्यपरिचालकाः कविनिस्पृहाः काव्येष्वेव धृतादराः परिलक्ष्यन्ते। आशास्यते इतः परमपि—

अभिनययोग्यश्चैतन्नाटकं नवीनमित्येव न प्रत्याख्यास्यते नाट्यपरिचालकैः। यद्यप्यस्यैव कवेः 'स्यमन्तकोद्धारा'ख्यः कश्चन व्यायोगः परिषदाऽसकृदभिनीतस्तथापि लघुकायस्य तस्य प्रयोगेऽनायाससाध्यत्वमेव हेतुरस्माभिरनुमित इति महारम्भस्यास्य प्रशस्तिरुद्घोष्यते। अभिनयोऽयं कथंकारमासीदिति आगामिन्यां संख्यायां मुद्रितात् कस्यचन दर्शकस्य निबन्धादेव पाठकैर्ज्ञास्यते इति न तत्र वयं किञ्चन वदामः।

अभिनेतृषु च नल-विदूषक-कलिपद्मपाद-दमयन्तीन्द्रसेनभूमिकामारूढेभ्यो यथाक्रमं श्रीयुक्त-अमरेश्वरठाकुर-कालीपदतर्काचार्य-म० म० कुञ्जविहारितर्कसिद्धान्त-दक्षिणारञ्जनशास्त्रि-चण्डीदेवी कुञ्जकिशारकविरत्न-महोदया एकैकं रौप्यपदकं दास्यन्त इति प्रयोगान्ते समुद्घोषितम्। तारतरकण्ठेनानुद्घोषिताऽपि रौप्यकाणां पञ्चविंशतिः—कलिकाता 'प्रसिडेन्सि' महाविद्यालयाध्यापकेन श्रीमता उपेन्द्रनाथ-घोषालमहोदयेन परिषदे दास्यते इत्यस्मासु प्रतिश्रुतम्। 'दातारो नोऽभिवर्धन्ताम्।'



# कार्यनिर्वाहकसमितेरन्ये सदस्याः

१ । पण्डित-श्रीयुक्त-जगदीशचन्द्रवेदव्यासः
२ । ,, ,, जगन्मोहन-ज्योतिर्विनोदः
३ । ,, ,, वामापद-विद्यारत्नः
४ । ,, ,, दक्षिणाचरण-भट्टाचार्यः, एम.ए.
५ । ,, ,, जानकीनाथ-साहित्यशास्त्री
६ । ,, ,, कालीपद-तर्काचार्यः
७ । ,, ,, वामाचरण-काव्यतीर्थः
८ । ,, ,, चिन्ताहरण-चक्रवर्त्ती काव्यतीर्थः, एम.ए.
९ । ,, ,, योगीन्द्रमोहन-विद्यारत्नः
१० । ,, ,, दक्षिणाचरण-भट्टाचार्यः
११ । श्रीयुक्त-काशीनाथ-भट्टाचार्यः, वि.एस.सि. (Eng.)
१२ । ,, जगमोहन-वसुजः, वि.एल. (काउन्सिलर)
१३ । ,, राजेन्द्र-नारायण-वन्द्योपाध्यायः, वि.एल. (काउन्सिलर)
१४ । पण्डित-श्रीयुक्त-दुर्गामोहन-काव्यसांख्यपुराणतीर्थः, एम.ए.
१५ । ,, ,, कालीपदव्याकरणतीर्थः
१६ । ,, ,, क्षितीशचन्द्र-चट्टोपाध्यायः, एम.ए.
१७ । श्रीयुक्त-भूपतिरायचतुर्धुरीणकाव्यतीर्थः
१८ । ,, सुनीतिकुमार-चट्टोपाध्यायः, एम.ए., डि.लिट.
१९ । पण्डित-श्रीयुक्तचिन्तामणिसाहित्याचार्यः
२० । ,, ,, वनमालिवेदान्ततीर्थः, एम.ए.
२१ । श्रीयुक्तक्षितीशचन्द्र-चक्रवर्त्ती, एम.ए., वि.एल.
२२ ॥ पण्डित-श्रीयुक्त-उपेन्द्रमोहन-सांख्यतीर्थः

२५। श्रीयुक्त-उपेन्द्रनाथ-घोषालः, एम.ए., पि.एइच.डि.
२६। ,, उमेशचन्द्र-भट्टाचार्यः, एम.ए.
२७। ,, रमाप्रसाद-मुखोपाध्यायः, एम.ए., वि.एल.
२८। ,, दामोदर-दास-खान्ना
२९। पण्डित-श्रीयुक्त-विमलानन्द-तर्कतीर्थः
३०। ,, प्रबोधचन्द्र दे, आइ.सि.एस., सिद्धान्त-सिन्धुः
३१। श्रीयुक्त-प्रबोधकुमार-दासः, एम.ए., वि. एल.
३२। ,, गौरीनाथ-भट्टाचार्यः, एम.ए.

## विभागीय-कर्मपरिचालकाः

### पत्रिकासम्पादकः

पण्डित-श्रीयुक्त-क्षितीशचन्द्र-चट्टोपाध्यायः, एम.ए.

### पत्रिका-सहकारि-सम्पादकः

पण्डित-श्रीयुक्त-उपेन्द्रमोहन-सांख्यतीर्थः

### ग्रन्थाध्यक्षः

पण्डित-श्रीयुक्त-जानकीनाथ-साहित्यशास्त्री

### आचार्यः

पण्डित-श्रीयुक्त-सीतानाथ-सिद्धान्तवागीशः

### नाट्यसम्पादकौ

पण्डित-श्रीयुक्त-जगन्मोहन-ज्योतिर्विनोदः
वामापद-विद्यारत्नश्च

## नाट्य-सहकारि-सम्पादकाः

श्रीयुक्त-क्षेत्रनाथ-विद्यारत्नः
कार्त्तिकचन्द्र-चक्रवर्त्ती
व्रजेन्द्रकिशोर-भट्टाचार्यश्च

## सङ्गीताचार्यः

श्रीयुक्त-सतीशचन्द्र दत्त जः

## आय-व्यय-लिपिरक्षकः

पण्डित-श्रीयुक्त-रामकृष्ण-चक्रवर्त्ती, एम. ए.

## आय-व्यय-लिपिपरीक्षकौ

श्रीयुक्त-मलयकुमार-देवः, बि.एस.सि., जि.डि.ए.
,, अनाथनाथ-घोषजश्च

## गृहनिर्माणसमितेः सदस्याः

१। श्रीयुक्त-प्रबोधचन्द्र-दे, आइ.सि.एस. सिद्धान्तसिन्धुः (सभापतिः)
२। म० म० श्रीयुक्त कुञ्जविहारी तर्कसिद्धान्तः
३। श्रीयुक्त रसमय-चट्टोपाध्यायः, एम.ए.
४। ,, अशोकनाथ-भट्टाचार्यवेदान्ततीर्थः, एम.ए. पि.आर.एस.
५। ,, प्रबोधकुमार-दासः एम.ए.बि एल
६। ,, दीनबन्धु-साहित्यशास्त्री
७। ,, वामाचरण-काव्यतीर्थः
८। ,, क्षितीशचन्द्र-चक्रवर्त्ती, एम.ए., बि.एल.
९। अमरेश्वर-ठाकुर-वेदान्तशास्त्री, एम.ए., पि-एइच.डि.

---

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम्॥

| | | |
|---|---|---|
| December, 1935. | १८५७-शकीये अग्रहायणे १८श-वर्षस्य ८म-संख्या | Vol. XVIII No. 8 |


## मतिमञ्जरी

द्वीपान्तरनिवासिन एवेदानीं प्रतिदिनमुत्तुङ्गानि समुन्नतिसोपानानि समारोहन्ति, भारतवर्षीयाः पुनर्बाल्यविवाह-विधवाब्रह्मचर्य-प्रतिमापूजनादि-बर्बरोचितानुष्ठानपरम्पराभिरनुदिनं प्रक्षीयमाणबलसत्वा मुमूर्षुभावं प्रतिपद्यन्त इति जोघुष्यते संस्कारकम्मन्यैर्भारतभव्याभिलापुकैर्विपश्चिद्वृन्दैः। अयि भो भारतवर्षीयाः, कियच्चिरमेवं प्रस्वापमनुभविष्यन्ति भवन्तः। "उत्तिष्ठत, जाग्रत" आतिष्ठत प्रयासं बलोपचयार्थम्, अङ्गीकुरुत शिष्यत्वं प्रतीच्याचार्यवर्याणाम्, सुदूरं समुत्सारयत देवताप्रतिमाः, नामशेषतामुपनयतेन्द्रियसंयमम्, कथाशेषतां प्रतिपादयत विवाहवृत्तान्तम्। संयम एव मूलमनिष्टस्य। ये तावदभिलाषा निरन्तरं मानसमास्कन्दन्ति तेषामन्तर्निरोधेन मनसो विक्षोभादुच्चावचाः शारीराश्च मानसाश्चाऽऽमयाः प्रादुर्भवन्ति। "सर्वं परवशं दुःखं सर्वमात्मवशं सुखम्" "उद्धरेदात्मनात्मानं नात्मानमवसादयेत्। आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः॥" इत्यादीनि महावाक्यानि प्रमाणीकृत्य विवाहादीनि बन्धनानि सुदूरमपसार्योच्छृङ्खलभावमेवाऽऽसेवध्वम्। यथेष्टमुप-

युङ्ग्ध्वं मांसानि, देवताभ्यः पुनर्बलिं मोपहरध्वम्, देवताभिः स्वयमेव स्वाहारसम्पादनाय प्रयतितव्यम्। यथाभिलषितं यथासामर्थ्यं च वयोरूपादिनिर्विशेषमुपभुङ्ग्ध्वं स्त्रियः, कस्या अपि पुनर्वश्यतां मा गच्छत। विवाहस्य वार्ताऽप्यस्तमिता चेत्, ब्रह्मचर्यमपि नामशेषं चेत्, विधवानां ब्रह्मचर्यं शशविषाणकल्पं कस्यापि नोद्वेगमादध्यात्। सुदुर्लभमिदं मानुषं जन्म समासाद्य सर्वथा सफलीक्रियेतां जीवितञ्च यौवनञ्च। निखिलजीवस्पृहणीयां भोगभूमिमिमामनुप्राप्य सर्वात्मनाऽवधीयतां भोगेषु। यथोक्तं गीतायाम्—

प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते॥
असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्।
अपरस्परसम्भूतं किमन्यत् कामहैतुकम्॥
एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः॥
कामामाश्रित्य दुष्पूरं दम्भमानमदान्विताः।
मोहाद्गृहीत्वाऽसद्ग्राहान् प्रवर्तन्तेऽशुचिव्रताः॥
चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः।
कामोपभोगपरमा एतावदिति निश्चिताः॥
आशापाशशतैर्बद्धाः कामक्रोधपरायणाः।
ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान्॥
इदमद्य मया लब्धमिदं प्राप्स्ये मनोरथम्।
इदमस्तीदमपि मे भविष्यति पुनर्धनम्॥
असौ मया हतः शत्रुर्हनिष्ये चापरानपि।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी॥
आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया।
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः॥

अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥
आत्मसम्भाविताः स्तब्धा धनमानमदान्विताः ।
यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥
अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः ।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥

इति । तद् भूयसांऽशेन तथ्यं प्रतिपादयदपि पक्षपातदुष्टमेव । असत्यादीनि चेद् भोगं समुपनयन्ति तर्ह्यसत्यादिकमेव वरम्, वेदाभ्यासजडा ऋषय एव परिगृह्य सत्यं सर्वसुखपराङ्मुखा अरण्यमधिवसन्तु । कामस्तावद्विलक्षण-सुखसाधनत्वादुपादेय एव । क्रोधमन्तरेण केनापि किमपि लब्धुं न शक्यते, क्रोधबलेनैव 'मुसोलिनी'महोदयेनाऽऽबिसिनीयाप्रदेशः करतलगतो विधातुं प्रयत्यते । दम्भाहङ्कारादिकमप्यवश्यमपेक्ष्यते स्वहितप्रेप्सुभिः । एवं च काम-क्रोधलोभदम्भाहंकारादिसाहायकेन देवदुर्लभान् भोगान् भुञ्जते मर्त्यलोके मानवाः, परमार्थत एव चेश्वरत्वमधिगच्छन्ति । स्मर्यतां तावदभि-युक्तोक्तिः—The end justifies the means सर्वं तद्भद्रं यत् सुखमुप-नमयति ।

विनिक्षिप्यतां तावद् दृष्टिरामेरिकादिप्रदेशेषु । तत्र परमार्थत एवाभ्रं-लिहेषु सौधेषु निवसन्तः, शरीरसौष्ठवेन देवान् ह्रेपयन्तः, पराक्रमेण दानवान् द्रवयन्तः, अभिलाषोपनीताभिरप्सरःप्रतिरूपिकाभिर्वरकामिनीभी रममाणाः, तर्जनीसञ्चालनेनैव समग्रं जगत् प्रकम्पयन्तः, प्रासादोपमैर्धूम-शकटबाष्पीयशकटव्योमयानसलिलयानादिभिरचिरेणैव जगतः प्रान्तात् प्रान्तान्तरं प्राप्नुवन्तः, विविधगतिसुखमनुभवन्तः, तत्तत्प्रदेशेभ्यः प्रयत्न-समाहृतैर्देवदुर्लभैर्भोज्यभक्ष्यलेह्यपेयादिभी रसनां परितर्पयन्तः, विविध-भेषजनिषेवणेन यौवनमेव केवलं समुद्वहन्तोऽविज्ञातरोगवृत्तान्ताः सन्धुक्षित-भोगशक्तयः क्षीरत्नपरिभाविन इमे मनुजाः सर्वथा देवदानवगन्धर्वेभ्योऽति-रिच्यन्त एव । यैस्तावत् साधनैः सम्पादितमीदृशं स्वर्गसुख-

मेभिस्तेषां साधनानां सम्पादनाय भारतवर्षीयैरपि प्रयतितव्यम्। इत्युपदिशन्ति भारतसुहृदो महात्मानः। 'आमेरिका'प्रदेशे सुरापानसंग्रामे केनचन पुरुषपुङ्गवेन दशभिरेव विपलैः कुम्भीपरिमिता सुरा निपीता, अपरेण च सुरतसमरे निरन्तरं निबिडतरसमाश्लेषसुखार्थिना बालाऽविच्छेदेनाहर्निशं परिचुम्बिता। वीरौ चेमौ केयूरपताकादिभिरभिनन्दितौ महीयसा च साधुवादेन संवर्धितौ पौरजानपदैः। अस्माभिरपीदृशकौशलसमासादनाय द्रढिमरमणीयः परिकरो विनिबद्धव्यः, भोगसुखार्थमेव बलसत्त्वाभिवृद्धिः संविधातव्या, महामनीनां गुरुस्थानीयानामेषां पदाङ्कान्यनुसृत्य च सफलयितव्यं मानवजन्म।

सर्वमेतदविचारितरमणीयम्। न खलु सुबहुभिरेवमुद्घोष्यत इति कृत्वाऽसत्यस्य सत्यत्वं संसिध्यति। इमे तावन्महाभागा लाङ्गूलविहीनस्य शृगालस्यैवाऽऽख्यायिकामनुस्मारयन्ति। तथाहि कश्चनातिमनोहरलाङ्गूलः शृगालः क्षेत्रेषु सस्यानि भक्षयन् क्षेत्रस्वामिना लाङ्गूलेन वियोजितः। ततश्च स्वयूथ्येभ्योऽपत्रपमाणो गुहायां निलीनः कथमपि कतिचिद्दिनानि निनाय। ततश्च भागधेयविपर्यासान्निर्विण्णस्यास्य प्रत्यभासत कश्चनोपायविशेषः। स च लब्धवर इवातिहृष्टो गुहातो विनिर्गत्य सर्वाञ्छृगालान् समाहूय प्रसार्य पादौ बभाषे—भो भो भ्रातरः! अवहिताः शृणुत यूयम्। युष्मद्धिताय सुचिरं चिन्तयता मया अभिनवः कोऽपि सुखोपायः समुद्भावितः। अहो मौढ्यमस्माकं यदकारणमेवास्माभिर्लाङ्गूललक्षणो महान् भार उदुह्यते। केन वा न सहस्रशः प्रत्यक्षीकृतं यल्लाङ्गूलमिदमस्माकं पदे पदे प्रतिबन्धकतामाचरति, पनसादिमोषणपुरःसरं प्रत्यावर्तमानाः क्षेत्रस्वामिभिर्लाङ्गूलेनैव विध्रियामहे वयम्, लाङ्गूलमेवेदं मानुषेभ्यो व्यावर्त्य पशुत्वं नः प्रतिष्ठापयति, लाङ्गूलवशादेव जीवजगति हीनत्वमस्माकं सम्पन्नम्। अतः प्रार्थये, कृताञ्जलिः प्रार्थये, धीमन्तो यूयं मतिमन्तो यूयं ज्ञानवन्तो यूयं प्रज्ञावन्तो यूयमत्यन्ताय समूलमुन्मूलयतेदं सर्वासुखनिदानं सर्वाकल्याणायतनं लाङ्गूलदण्डम्।

किञ्च केन वा न काम्यते सौन्दर्यं सचेतसा? विचार्यतां तावत् किमिदं लाङ्गूलं काममीयकमस्माकं परिबृंहयति वा प्रतिबध्नाति वा। परमरमणीयस्य पादचतुष्टयोपेतस्य वपुषोऽन्ते दोधूयमानमिदं चामरकलापं चारुतरतरुण्या इव श्मश्रुसमुद्गमः कस्य वा सहृदयस्य न समुद्वेजकम्। प्रेष्ठा भ्रातरः, त्यक्त्वा दुराग्रहं मुक्त्वा वृथाऽभिनिवेशं दूरीकृत्य विचारवैधुर्यं समाश्रित्य विवेकदण्डम् इष्टिपशुच्छेदं छिद्यतां लाङ्गूलमधिगम्यतां समकक्षता मनुजवराणामुपभुज्यतां सुखजातं निरर्गलम्।

एवं तेन चाश्रुतचरेण वचनोपन्यासेन विमोहितमानसाः परमप्रहृष्टा वञ्चकप्रवरास्तैस्तैः शब्दविशेषैः प्रकटयामासुरात्मनः सम्मतिम्। अन्ते चैकेन वृद्धशृगालेनाभिहितम् वत्स, किमिति लाङ्गूलं हारयित्वैवानुभूतं भवता हीनलाङ्गूलत्वस्य सौष्ठवम्। अथवा किमत्राऽऽश्चर्यं यदङ्गविकलः सर्वानेव व्यङ्गान् द्रष्टुं समुत्कण्ठेत। तद्वत्स, दृष्टं ते बुद्धिवैभवम्, अन्वर्थितं भवता वञ्चकेति नामधेयमस्माकम्, प्रकटितमनितरसाधारणं प्रावीण्यम्, परं नात्र भवदीयं वचनं प्रमाणीकुर्मः, न वा भवदीयमुपदेशं परिपालयामः, नापि भवदीयां सरणिमनुसरामः। तदिदानीं "यः पलायति स जीवति" इति नीतिमनुसृत्य दूरमपसर यावदतिसंहिता इमे भवत्सजातीया उद्दीपितामर्षा भवन्तं नाभिघ्नन्ति। तच्छ्रुत्वा 'मेषशृङ्गेषु प्रतिहतं वज्रमपि कुण्ठिताश्रं भवति' इति प्रवचनस्य सार्थक्यमुपलभमानोऽसौ वराकः स्वगुहामेव प्रतस्थे।

यैः पुनर्महात्मभिरेवमुपदिश्यते तैरपि समधिगतं वा पारमार्थिकं सुखं समास्वादिता वा सांसारिकी शान्तिः। यैस्तावदविगणय्य धर्ममचिन्तयित्वा समाजस्वास्थ्यं तृणीकृत्य जगज्जनसौख्यमवज्ञाय च सर्वसंयमं विगलितवेद्यान्तरैर्विस्मृतान्यकर्तव्यैः केवलं स्वप्रवृत्त्यनलेष्वेव समर्प्यन्त इन्धनानि, यैः सतृष्णं पश्यत्स्वपि बुभुक्षुषु बान्धववृन्देषु स्वास्ये एव निक्षिप्यन्तेऽनुपमरसानि भोज्यानि, यैश्च मातरं च पितरं च भ्रातरं च स्वसारं च निर्घृणं परित्यज्य नर्तकी वाऽभिनेत्री वा तत्समानजातीया वा काचन स्वधनस्य स्वग-

णस्य स्वजीवितस्य चाभिश्रीपदे प्रतिष्ठाप्यते, परश्वि च तामेव मनोरथ-प्रियतमामपरस्याङ्कशायिनीमवलोक्यापरा काचन संगृह्यते, यत्र प्राचीनाचार-श्रद्धालवो हिन्दवः Back to the Vedas इतिवचनेनोपहसद्भिः स्वयं Back to the animal kingdom इति वचनस्य सार्थक्यं सम्पादयद्भि-र्निर्विशङ्कमेव पशुवृत्तिरनुष्ठीयते, यत् किमपि भुज्यते, नग्नैरेवावस्थीयते, गम्यागम्यादिविचारः सुदूरं परिहीयते, अपि नाम यन्त्रविज्ञानबलेन समुद्भावितसुखोपाया इमे सभ्यपदवाच्याः। कामं कामसुखमनुपमरसं परम सुखम्। तथापि धर्माविरुद्धेनैव मार्गेण सुखमिदमनुभवितव्यम्, संयम एवास्य तन्त्रधारकः। अत एवोक्तं भगवता—"धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ" इति।

न खल्वार्यधर्मशास्त्रेषु द्रविणोपार्जनं निषिद्धं न वा कामोपभोगः प्रतिषिद्धः। महाभारते च भूयो भूय उपदिष्टम्—

धर्मार्थकामाः सममेव सेव्या
यो ह्येकसक्तः स जनो जघन्यः।
द्वयोस्तु दाक्ष्यं प्रवदन्ति मध्यं
स उत्तमो योऽभिरतस्त्रिवर्गे॥

इति। केवलं स्वैराचार एव पर्युदस्तः, उच्छृङ्खलत्वमेव प्रतिषिद्धम्। अत एवाऽऽर्याणां गर्भाधानमपि होमादिपुरःसरमनुष्ठीयते, अन्त्येष्टिरपि मन्त्र-पूर्वकमेव भवति। एवं निषेकादारभ्य श्मशानपर्यन्तमखिलं कार्यजातं स्वात्मनो हितायैवानुष्ठीयमानं शास्त्रेण नियन्त्र्यते। अहो धाष्ट्र्यं संस्कारकम्मन्यानाम्—यत्र कुमार्यः कोटिशो यावज्जीवमनूढास्तिष्ठन्ति, तत्र विधवानामुद्वाहमधिकृत्य प्रलपन्तो न लज्जन्त इमे। यत्र प्रदेशे ग्रीष्मातिरे-कादतिशीघ्रमेव समवतरति यौवनं तत्र बाल्यविवाहः प्रतिषिध्यते। रिरं-सासन्धुक्षणैकफलानि दृश्यश्रव्यादिकाव्यान्याख्यानाख्यायिकाश्च विरचयन्तो ग्रन्थकृतः श्लाघ्यन्ते प्रशस्यन्ते बहुमन्यन्ते, किं बहुना दैवतबुद्ध्या परिचर्यन्ते, काव्याभासानि च तानि साभिनिवेशमनुशील्यन्ते, विवाहविधानं पुनश्चरण-

तलेनावमर्द्यते। राष्ट्रीयसंस्थयाऽनुशासनबलेन बालानां यथाकालं पाणिपीडनं प्रतिरोद्धुं शक्यते, पार्यन्ते च शास्त्रेषु श्रद्दधाना दण्डेन योजयितुम्, परं यौवनोद्गमः प्रतिरोद्धुं प्रभूयते वेलया। पुरा किल महाप्रभावस्य पार्थिवस्य दुष्यन्तस्य निर्देशो वासन्तिकैस्तरुभिस्तदाश्रयिभिश्च पत्रिभिः प्रमाणीकृतः। तथाहि—

चूतानां चिरनिर्गताऽपि कलिका बध्नाति न स्वं रजः
सन्नद्धं यदपि स्थितं कुरुवकं तत् कोरकावस्थया।
कण्ठेषु स्खलितं गतेऽपि शिशिरे पुंस्कोकिलानां रुतं
शङ्के संहरति स्मरोऽपि चकितस्तूणार्धकृष्टं शरम्॥

परं तत्राप्यभिनवयौवनशालिनीभ्यां विलासिनीभ्यां प्रारब्धं कामदेवार्चनम्।

अयि भो आर्याः, अमृतस्य पुत्राः, ननु शास्त्रमेव वः प्रमाणं कार्याकार्यव्यवस्थितौ। सर्वथा शास्त्रवचनमेव प्रमाणीक्रियताम्, शास्त्रक्षुण्ण एव मार्गोऽनुस्रियताम्, संयमः समवलम्ब्यताम्। तृणच्छन्नकूपोपमानां प्रज्ञावादान् भाषमाणानां लाङ्गूलहीनशृगालकल्पानाममीषां सुधारकम्मन्यानां वचःसु लेशतोऽपि न श्रद्धातव्यम्। एते खलु मूर्त्ता इव कलिदूता दूरतः परिहर्तव्याः। तथाचोक्तं विष्णुपुराणे कलिस्वभाववर्णनप्रसङ्गे—

कलेः स्वरूपं मैत्रेय यद्भवान् प्रष्टुमिच्छति।
तन्निबोध समासन्नं वर्तते यन्महामुने॥
वर्णाश्रमाचारवती प्रवृत्तिर्न कलौ नृणाम्।
न सामऋग्यजुर्वेदविनिष्पादनहेतुका॥
विवाहा न कलौ धर्म्या न शिष्यगुरुसंस्थितिः।
न दाम्पत्यक्रमो नैव वह्निदैवात्मकः क्रमः॥
यत्र तत्र कुले जातो बली सर्वेश्वरः कलौ।
सर्वेभ्य एव वर्णेभ्यो योग्या कन्याऽवरोधने॥
येन केनैव योगेन द्विजातिर्दीक्षितः कलौ।
यैव सैव च मैत्रेय प्रायश्चित्तक्रिया कलौ॥

सर्वमेव कलौ शास्त्रं यस्य यद्वचनं द्विज ।
देवताश्च कलौ सर्वाः सर्वः सर्वस्य चाश्रमः ॥
उपवासस्तथायासो वित्तोत्सर्गस्तथा कलौ ।
धर्मो यथाभिरुचितैरनुष्ठानैरनुष्ठितः ॥
वित्तेन भविता पुंसां स्वल्पेनाढ्यमदः कलौ ।
स्त्रीणां रूपमदश्चैव केशैरेव भविष्यति ॥
सुवर्णमणिरत्नादौ वस्त्रे चापि क्षयं गते ।
कलौ स्त्रियो भविष्यन्ति तदा केशैरलङ्कृताः ॥
परित्यक्ष्यन्ति भर्तारं वित्तहीनं तथा स्त्रियः ।
भर्ता भविष्यति कलौ वित्तवानेव योषिताम् ॥
यो यो ददाति बहुलं स स स्वामी तदा नृणाम् ।
स्वामित्वहेतुः सम्बन्धो भावी नाभिजनस्तदा ॥
गृहान्ता द्रव्यसङ्घाता द्रव्यान्ता च तथा मतिः ।
अर्थाश्चाऽऽत्मोपभोगान्ता भविष्यन्ति कलौ युगे ॥
स्त्रियः कलौ भविष्यन्ति स्वैरिण्यो ललितस्पृहाः ।
अन्यायावाप्तवित्तेषु पुरुषेषु स्पृहालवः ॥
अभ्यर्थितोऽपि सुहृदा स्वार्थहानिं न मानवः ।
पणार्धार्धार्धमात्रेऽपि करिष्यति तदा द्विज ॥
समानं पौरुषञ्चैते भावि विप्रेषु वै कलौ ।
क्षीरप्रदानसम्बन्धि भावि गोषु च गौरवम् ॥
अनावृष्टिभयप्रायाः प्रजाः क्षुद्भयकातराः ।
भविष्यन्ति तदा सर्वा गगनासक्तदृष्टयः ॥
कन्दपर्णफलाहारास्तापसा इव मानवाः ।
आत्मानं पातयिष्यन्ति तदा वृष्ट्यादिदुःखिताः ॥
दुर्भिक्षमेव सततं तदा क्लेशमनीश्वराः ।
प्राप्स्यन्ति व्याहतसुखप्रमोदा मानवाः कलौ ॥

अस्नानभोजिनो नाग्निदेवतातिथिपूजनम् ।
करिष्यन्ति कलौ प्राप्ते न च पिण्डोदकक्रियाम् ॥
लोलुपा ह्रस्वदेहाश्च बह्वन्नादनतत्पराः ।
बहुप्रजाल्पभाग्याश्च भविष्यन्ति कलौ स्त्रियः ॥
उभाभ्यामेव पाणिभ्यां शिरःकण्डूयनं स्त्रियः ।
कुर्वन्त्यो गुरुभर्तॄणामाज्ञां भेत्स्यन्त्यनादृताः ॥
स्वपोषणपराः क्षुद्रा देहसंस्कारवर्जिताः ।
परुषानृतभाषिण्यो भविष्य न्त कलौ स्त्रियः ॥
दुःशीला दुष्टशीलेषु कुर्वत्यः सततं स्पृहाम् ।
असद्वृत्ता भविष्यन्ति पुरुषेषु कुलाङ्गनाः ॥
वेदादानं करिष्यन्ति वटवश्च तदाऽव्रताः ।
हस्थाश्च न होष्यन्ति न दास्यन्त्युचितान्यपि ॥
वनवासा भविष्यन्ति ग्राम्याहारपरिग्रहाः ।
भिक्षवश्चापि मित्रादिस्नेहसम्बन्धयन्त्रिताः ॥
अरक्षितारो हर्तारः शुल्कव्याजेन पार्थिवाः ।
हारिणो जनवित्तानां सम्प्राप्ते तु कलौ युगे ॥
यो योऽश्वरथनागाढ्यः स स राजा भविष्यति ।
यश्च यश्चाबलः सर्वः स स भृत्यः कलौ युगे ॥
वैश्याः कृषिवाणिज्यादि सन्त्यज्य निजकर्म यत् ।
शूद्रवृत्त्या प्रवत्स्यन्ति कारुकर्मोपजीविनः ॥
भैक्ष्यव्रतास्तथा शूद्राः प्रव्रज्यालिङ्गिनोऽधमाः ।
पाषण्डसंश्रयां वृत्तिमाश्रयिष्यन्त्यसंस्कृताः ॥
दुर्भिक्षकरपीडाभिरतीवोपहता जनाः ।
गवेधुककदन्नाद्यान् देशान् यास्यन्ति दुःखिताः ॥
वेदमार्गे प्रलीने च पाषण्डाढ्ये ततो जने ।
अधर्मवृद्ध्या लोकानां स्वल्पमायुर्भविष्यति ॥

अशास्त्रविहितं घोरं तप्यमानेषु वै तपः ।
नरेषु नृपदोषेण बालमृत्युर्भविष्यति ॥
भवित्री योषितां सूतिः पञ्चषट्सप्तवार्षिकी ।
नवाष्टदशवर्षाणां मनुष्याणां तथा कलौ ॥
पलितोद्भवश्च भविता तदा द्वादशवार्षिकः ।
नातिजीवति वै कश्चित् कलौ वर्षाणि विंशतिम् ॥
अल्पप्रज्ञा वृथालिङ्गा दुष्टान्तःकरणाः कलौ ।
यतस्ततो विनश्यन्ति कालेनाल्पेन मानवाः ॥
यदा यदा हि पाषण्डवृद्धिर्मैत्रेय लक्ष्यते ।
तदा तदा कलेर्वृद्धिरनुमेया विचक्षणैः ॥
यदा यदा सतां हानिर्वेदमार्गानुसारिणाम् ।
प्रारम्भाश्चावसीदन्ति यदा धर्मभृतां नृणाम् ॥
तदाऽनुमेयं प्राधान्यं कलेर्मैत्रेय पण्डितैः ।
यदा यदा न यज्ञानामीश्वरः पुरुषोत्तमः ॥
इज्यते पुरुषैर्यज्ञैस्तदा ज्ञेयं कलेर्बलम् ।
न प्रीतिर्वेदवादेषु पाषण्डेषु यदा रतिः ॥
कलिवृद्धिस्तदा प्राज्ञैरनुमेया द्विजोत्तम ।
कलौ जगत्पतिं विष्णुं सर्वस्रष्टारमीश्वरम् ॥
नार्चयिष्यन्ति मैत्रेय पाषण्डोपहता नराः ।
किं वेदैः किं द्विजैर्देवैः किं शौचेनाम्बुजन्मना ॥
इत्येवं विप्र वक्ष्यन्ति पाषण्डोपहता नराः ।
स्वल्पाम्बुवृष्टिः पर्जन्यः सस्यं स्वल्पफलं तथा ।
फलं तथाऽल्पसारञ्च विप्र प्राप्ते कलौ युगे ॥
शाणप्रायाणि वस्त्राणि शमीप्राया महीरुहाः ।
शूद्रप्रायास्तथा वर्णा भविष्यन्ति कलौ युगे ॥

( क्रमशः )

# परिषदः प्रयोगसिद्धिः

[ निबन्धकः—श्रीहेमन्तकुमार-तर्कतीर्थः ]

संस्कृत-साहित्य-परिषदो विगते वार्षिकाधिवेशनोत्सवे समाहूता वयं विविधविद्यापारदृश्वनां बहूनां विदुषां सुरभारतीमयं सुललितं वचनजातं समाकर्ण्य यथा श्रवणपरितृप्तिमपरिसीमामासादितवन्तस्तथा युगपन्नयन-परितृप्तिमप्यनिर्वचनीयां परिषत्सदस्यानां दुर्निरूपमभिनयकौशलं निरूप्य। सुसम्पन्नः खलु परिषदो वार्षिकमहोत्सवो यथापूर्वं विचक्षणाना-मुद्योक्तॄणामप्रमादेनानुष्ठानेन, अपरिसीमेनोत्साहेन, असाधारणेन यत्नेन च। तथापीदं प्राप्तकालमावेदयामो यत् प्राचीनभारतीयनाट्य-कलायाः समुन्नयनसाधनायां चिरादासादितचरमसिद्धीनां परिषत्सद-स्यानां नयनमनस्तर्पणेन निपुणतमेनाभिनयेन सुविमलनाट्यरसास्वाद-नया सामाजिकानामन्तराण्यन्ते सन्तर्प्य शङ्कामात्रगोचरीभूतं सर्वमपि वैगुण्यं सुसमाहितमेव।

के वा न जानन्ति यत् परिषत्सदस्यैः प्रतिवर्षमेवंविधेनाभिनयेन पूर्णाङ्गतामापाद्यते परिषदो वार्षिकमहोत्सवः, तुष्टिं नीयते सामाजिकवर्गः, समुत्पाद्यते चाशा परिषदो गौरवमण्डितायां भविष्यन्त्यां परिस्थितौ। विगते किल वार्षिकमहोत्सवे तैर्निपुणकवीनां तत्रभवतां तर्काचार्यपादानां ललित-प्राया कृतिनलपुण्यकथामयं "नलदमयन्तीयं" नाम नाटकं प्रयुक्तमासीत्। अनभिनीतपूर्वस्यास्य नवीननाटकस्याभिनये परिषदः सदस्यवर्गैर्यन्निपुण-नटोचितं प्रावीण्यमाविष्कृतं तेन चमत्कृता वयं भूयो भूयः प्रशंसामः परि-षदुट्टङ्कितां नाट्यशैलीम्। यद्यपि रूपकस्यास्य प्रयोगसाफल्ये निपुण-कवीनां वश्यवाचां तत्रभवतां तर्काचार्यपादानां ललितरचनानैपुण्यम्, तथा यथापात्रं रसानुगुणायां भाषासृष्टौ वस्तुसंघटनायां पात्रादिकल्पनायां च सर्वत्रैव सामाजिकचित्तानुवृत्तौ निरन्तरमवधानमसामान्यो हेतुस्तथापि तत्तद्भावा-

भिनये पात्रादिसंयोजनायां सङ्गीतकादौ च परिषन्नाट्यशिक्षकाणां शिक्षण-परिपाटी अभिनेतॄणां सचेतस्त्वं रसानुभूतिः प्रयोगाभ्यासकौशलं भाववेदित्वादिकं च निखिलमेवैकान्ततोऽपेक्षणीयमेव। तच्च सर्वमेव सम्मिलितं परिषदः प्रयोक्तृवर्गेषु वरीवर्त्तीति साफल्यविशेषदर्शनाच्छक्यमेवानुमातुम्।

तथाहि—तेषु विदूषकभूमिकां गतस्य दमयन्तीभूमिकामाश्रितस्य च कायवाग्वेशभङ्ग्यो भावाभिनयाश्च सर्वथैव हृदयग्राहिण एव समजायन्त। माधवीलतामण्डपे नलनेत्रपिधानवेलायां नारीकण्ठस्वरानुकृति-तद्विस्मृत्यादेर्यथावदभिनयेन सामाजिकचेतसामपूर्वरसनिमज्जनाय विदूषकभूमिकामुपारूढेन यन्नैपुण्यमाविष्कृतं तदसाधारणमेव। एवमन्यत्रापि सर्वत्रैवास्याभिनयो हृद्यतरः सञ्जातः। अनुरूपाभिः कायवाग्वेशभङ्गीभिः रमणीजनोचितेन कण्ठस्वरेण तदुचितलज्जाभावादिनाटितकप्रावीण्येन च दमयन्तीभूमिकामुपारूढो विशेषतः प्रशंसामर्हति। मन्ये निपुणतमेष्वपि प्रयोक्तृवर्गेषु विशेष्यत एवायम्। नलभूमिकां विदूषकभूमिकां दमयन्तीभूमिकां किरातराजभूमिकां चोपाश्रितानां वाचां विस्पष्टता उच्चारणपरिशुद्धिश्च विशेषतः समुल्लेखमर्हतः। वाचिकाभिनये नलभूमिकामुपारूढेन महत् प्रावीण्यं प्रदर्शितम्। कलि-विदूषक-दमयन्ती-किरातराजभूमिकागतानां वपुर्वेशयोस्तत्तत्पात्रानुरूप्यं दर्शकानां नयनतर्पणं समजनि। परं केवलं नलभूमिकामुपाश्रितस्य वपुर्वैषम्यं मन्ये न कस्यापि नयनपथमतिक्रान्तम्। यद्यप्येवं तथापि वनवासवेशेन नलोऽपि हृद्यरूप एव सञ्जात इति अकामेनापि वक्तव्यमेव। कलिभूमिकामुपारूढेन यद्यपि वक्तव्यं न सम्यगभ्यस्तं कार्त्स्न्येन, तथापि रौद्ररसाभिनयेऽपूर्वोऽस्य नैपुण्यविशेषः परिलक्षितः, येनाऽऽत्मनो वक्तव्यस्मृतिविलम्बेष्वपि निपुणमनेन वञ्चिताः सामाजिकाः। वपुर्वेशयोर्युक्तता चास्य सञ्जाता। रमणीजनभावाभिनये कल्पलताभूमिकामुपारूढोऽप्युल्लेखमर्हति।

गीतकान्यपि प्रायः सर्वाण्येव मधुराक्षराणि सरलरचनारमणीयानि

संस्कृतशब्दमयान्यपि वङ्गभाषामयाणीव प्रतीयमानानि स्वरविशेषसंयोगाच् श्रवणमनसोस्तृप्तिमभिनवामुदपादयन्। तेषु नियतैः संगीतमस्माकमद्यापि प्रसक्तमिव श्रुतिकुहरे हरतीव प्रसह्य चित्तम्। तदेवं निपुणतमविपश्चिन्नटभूयिष्ठेयं नाट्यगोष्ठी सर्वतः समुत्कर्षविशेषं भजत इत्यत्र को वा सन्देहावसरः ॥

किं बहुना यदा यदा प्रयोक्तॄणां प्रयोगकौशलं सङ्गीतमाधुर्यं च स्मृतिपथमाक्रामति तदा तदैव हृतप्रायं भवति चित्तम्। प्रवर्तते च "वृत्तं रामस्य' इत्यादि कविवर्यवचनशैलीमनुसृत्य अस्माकमपि मानसी वाणी—

पुण्या नलकथा रम्या मधुरा सुकवेः कृतिः।
निपुणाश्च प्रयोक्तारो ह्रियेत न कथं मनः ॥ इति।

वयममुष्याः परिषदः परिपन्नाट्यगोष्ठ्यास्तथा तत्परिषद्बालकानां च निरुपद्रवं दीर्घजीवनं कामयामहे इति।

---

## उपक्रान्तं सुरभारत्याः प्रकाशनम्

विदितमेवैतत् प्रायेण प्रियपाठकमहाभागानामशेषाणां यत् सुरभारतीसेवनसमर्पितजीवनैरस्माभिः स्वीकृत्य गरीयसीं हानिं तृणीकृत्य शरीरस्वास्थ्यम् अविगणय्य स्वजनसौख्यं Calcutta Oriental Journal "मञ्जूषा" च प्रतिमासमेव प्रकाश्येते। इदानीं पुनर्वङ्गीयानामनुरोधेनाविज्ञाताङ्गलभाषादिष्वपि सुरभारत्याः प्रचारमभीहमानैरभिनवैव वङ्गभाषामयी नानाविधप्रबन्धभासुरा सुरभारतीसमाख्या मासिकपत्रिका प्रचारयितुमुपक्रान्ता। तस्याश्च सद्यः प्रकाशितायां प्रथमसंख्यायां विपश्चिद्वृन्दवृन्दारकैः कोकिलेश्वरशास्त्रिमहाभागैश्चुलुकीकृतदर्शनपारावारैः कठोपनिषदो विद्वज्जनश्लाघनीयायाः संक्षिप्तं विवरणमनितरसाधारणया मनोहरतमया वाचोयुक्त्या

विवृतम् । वङ्गीयब्राह्मणसभायाः प्रतिष्ठापकानामन्यतमेन परलोकप्रस्थितेन पण्डितप्रकाण्डेन तारकनाथस्मृतिरञ्जनमहोदयेन प्रोल्लासितो 'महाभारतप्रसङ्गः' महाभारतस्य निगूढतत्त्वं कर्मफलस्य च विचित्रां गतिं प्रतिपादयन् आ पांशुलपादेभ्यः समुन्छ्रितमान यावत् सर्वेषामेव समावर्जयेन्मानसमित्यत्र नास्ति नः स्तोकोऽपि सन्देहः । अस्माभिश्च रसगङ्गाधरकर्तुः पण्डितराजजगन्नाथरायस्य प्रतिवादिगर्वसर्वङ्कषस्य वङ्गभाषामयं व्याख्यानादिकं प्रकाश्यते, पाणिनिव्याकरणस्य व्याख्यानादीनामुपोद्घातरूपेण त्रिमुनिविवरणमुपनिबद्धम्, प्रसङ्गतश्च माहेशव्याकरणवृत्तान्त उपवर्णितः, पाणिनिमधिकृत्य विरचितः समस्यापूरणश्लोकश्च समुद्धृतः । अन्ते च ज्योतिषप्रसङ्गाख्ये सुमनोहरे निबन्धे ज्योतिषशास्त्रगतवचनजालमन्तरेणैव स्वाभाविक्यैव बुद्ध्या यथा कुण्डल्यादिविचारः सम्यक्तया सम्पादयितुं शक्येत तथोदाहरणमुखेन प्रदर्शितम् । ततश्च उद्भटश्लोकास्तदनुरूपं शार्मण्यभाषामयं च पद्यं साङ्लानुवादं सन्निवेशितम् । अन्तरान्तरा च विविधभाषागता विचित्रा भणितयः समुद्धृताः । इत्थञ्च यथा पत्रिकेयं सर्वेषामेव सहृदयानां सौमनस्यं समुपजनयेत्, चिरं च निराबाधमासेतुहिमाचलं प्रचलेत्, तदर्थमादावेव मङ्गलाचरणरूपेण वेदसूक्तं सानुवादं सम्मुद्रितम् । प्रकाशनात् पूर्वमेव पुण्यपत्तनाभिभिजनैर्मीमांसाकेशरिभिः सर्वतन्त्रस्वतन्त्रधिषणैरपहसितसुरगुरुप्रज्ञैः किञ्जोडेकरशास्त्रिमहोदयैरितरैश्च सिंहलद्वीपादिदूरतरप्रदेशनिवासिभिः स्वत एव पत्रं प्रेष्य ग्राहकत्वमङ्गीकृतम् । आशास्यते च साम्प्रतं नानारसरुचिरां सुश्लक्ष्णपीतप्रच्छदपटसमलङ्कृतां सुरभारतीं समालोक्य सन्तृप्तान्तरङ्गाः सहृदया अहमहमिकया रूप्यकद्वितयं संप्रेष्य ग्राहकभावमुररीकुर्युर्विदध्युश्च साहायकं सुरभारतीप्रचारविधाविति शम् ।

श्रीक्षितीशचन्द्रशर्मणः

संस्कृत-साहित्य-परिषद् ऊनविंशवर्षस्य ( १३४१ वङ्गाब्दस्य )

आय-व्ययनिष्कर्षः

## (१) साधारणकोषः

| आयः | | | व्ययः | | |
|---|---|---|---|---|---|
| गतवर्षस्य व्ययावशिष्टः | | | पत्रिकार्थम् | ... | ८३५॥।–१५ |
| हस्ते | ... | १७६।=० | पुस्तकालयार्थम् | ... | ७८७) |
| ष्ट्याम्प | ... | ११॥–१५ | पुस्तकप्रकाशार्थम् | ... | ५३॥।–० |
| अग्रिमादिः | ... | १०।–५ | सभाभिनयाद्यर्थम् | ... | २८२।–१५ |
| वृत्तिरूपेण प्राप्तः | | | शिक्षाविभागार्थम्* | | ३४॥–१० |
| ( कलकत्तातः ) | | १३८६।० | गृहभाटकाद्यर्थम् | ... | ७३७=० |
| ,, ( स्थानान्तरात् ) | | ४७५।० | वर्तनाद्यर्थम् | ... | ४७६॥=१५ |
| सामयिक-दानरूपेण— | | | गृहोपकरणाद्यर्थम् | ... | १०॥।१५ |
| दातृभ्यः | ... | २८०॥० | शुल्कार्थम् | ... | २१) |
| गभर्णमेण्ट-सकाशात् | | | मुद्रणव्ययार्थम्— | ... | २६॥।≡० |
| ( १९३४-३५ ) | | ५००) | पाथेयार्थम् | ... | ४४।≡० |
| कर्पोरेशन सकाशात् | | | पत्रादि-शुल्कपत्रार्थम् | | २७)१५ |
| १९३३-३४ | | ५४१) | वि० पि० शुल्कपत्रार्थम् | | २६॥=१५ |
| करपोरेशन-सकाशात् | | | विविध-विषयार्थम् | ... | २६॥।१० |
| ( १९३४-३५ ) | | ६५०) | ग्रन्थागारकोषे प्रत्यर्पितः | | १३२)५ |
| पुस्तकादि-विक्रयात् | | २३७॥१५ | | | ...३५३२।–१५ |
| प्रावेशिक-रूपेण | ... | २॥० | उद्वृत्तः | | |
| विज्ञापनरूपेण | | ४) | ष्ट्याम्प | ... | २८।० |
| वि० पि० शुल्कपत्रात् | | २१॥।=१० | प्राप्यः ( अग्रिमादिः ) | | २२॥।५ |
| कुशीदरूपेण | | ३॥।≡१० | हस्ते | ... | ७३६॥१५ |
| अन्यतः | ... | २१॥≡० | | | |
| | | ४३२२॥।=१५ | | | ४३२२॥।=१५ |

* वर्षेऽस्मिन् प्रदेयोऽध्यापकपुरस्कार आगामिनि वर्षे दास्यते ।

## (२) गृहकोषः

( १३४१ वङ्गाब्दे )

गतवर्षस्य व्ययावशेषितः

( १९४५-५५ )

| | |
|---|---|
| गवर्णमेण्ट-लोनपत्रे | १०००) |
| क्याश सार्टिफिकेट-पत्रद्वये | १५००) |
| | २५००) |

वर्षेऽस्मिन् आय-व्ययाभावात्

तदेवोद्वृत्तम् ।

उद्वृत्तस्य विवरणम्

| | |
|---|---|
| पूर्वोक्ते गवर्णमेण्टलोनपत्रे | १०००) |
| क्याश-सार्टिफिकेटपत्रद्वये | १५००) |
| | २५००) |

## (३) ग्रन्थालय-कोषः

( १३४१ वङ्गाब्दे )

| | |
|---|---|
| गतवर्षस्य प्रत्यर्पणावशेषितः | ३६०॥० |
| १३४१ वङ्गाब्दे न्यासरूपेण प्राप्तः ... | १०६) |
| | ४९६॥० |
| १३४१ वङ्गाब्दे प्रत्यर्पितः | ५४॥० |
| अनिर्दिश्यमानः | ४४२) |

सेण्ट्राल व्याङ्क आगारे पो०, आ०

सेविंस व्याङ्क आगारे च वर्तते ।

आय-व्यय-लिपिरक्षकः

श्रीरामकृष्ण-चक्रवर्ती

आय-व्यय-लिपिपरीक्षकः

श्रीमलयकुमार-देवः

१३४१ वङ्गाब्दावसाने

## परिषदः साधारण-कोषस्य

ऋणम्

१३३३ वङ्गाब्दे गृहकोषात्

| | | |
|---|---|---|
| गृहीतम् | ... | ७८॥० |
| १३३४ " " | ... | ७७५) |
| १३३६ " " | ... | १०२५) |
| १३३७ " " | ... | १०००) |
| १३३८ " " | ... | १२५) |
| | | ३००३॥० |
| १३३८ वङ्गाब्दे ऋण-प्रत्यर्पितम् | ... | ७७५) |
| | | २२२८॥० |
| १३३९ वङ्गाब्दे गृहकोषात् गृहीतम् | | १०८७॥० |
| | | ३३१६) |

सम्पादकौ

श्रीअमरेश्वर-ठाकुरः

श्रीयतीन्द्रनाथ-बसुश्च

अजयपालकृतो

# नानार्थसंग्रहः

जयन्ति शास्तुः पदपङ्कजाङ्कुरा
नखाः शरच्चन्द्रमरीचिकोमलाः ।
विनम्रदेवासुरमौलिषु श्रियं
वहन्ति ये प्रस्फुटमालतीस्रजः ॥

वीक्ष्य पूर्वकविग्रन्थानकाराद्यादिभिः पदैः ।
क्रमादजयपालेन कृतो नानार्थसंग्रहः ॥१॥
सर्वत्रादावनेकार्थः प्रथमान्तोऽत्र दर्शितः ।
वर्त्तमानः सप्तम्यन्ते सप्तम्यन्तैरभेदिते ॥२॥
लिङ्ग्वेव बहुवचनं कृतं न चतुरादिषु ।
विना लिङ्गविशेषेण नैवात्र पुनरुक्तता ॥३॥

[ अ ]

**अमृतं** हृद्ये पीयूषे यज्ञशेषेऽप्ययाचिते ।
मुक्तौ तोयेऽमृता धात्र्यां गुडूचीपथ्ययोरपि ॥४॥
**अक्षो** विभीतके नित्ये शकटव्यवहारयोः ।
रथस्यावयवे कर्षे पाशकेऽप्यक्षमिन्द्रिये ॥५॥
**अरिष्टं** सूतिकागारे मृत्युचिह्ने शुभेऽशुभे ।
तक्रेऽप्यरिष्टो लशुने काके फेनिलनिम्बयोः ॥६॥
**अञ्जनं** कज्जले दृष्टमञ्जनो दिग्गजान्तरे ।
गिरिभेदेऽञ्जनाऽम्बायां मारुतेश्च हलाहले ॥७॥
**अवहारो** रणादीनां विश्रान्तौ ग्राहयादसि ।
*निमन्त्रणोपनेतव्यद्रव्ये चौरे च भाषितः ॥८॥

---

*निमन्त्रणोपनेतव्यं शर्करादिखाद्यकृतं भक्ष्यम् ।

अभिपन्नो विप्रकृष्टे स्वीकृतेऽभिद्रुते तथा ।
अपराद्धेऽप्यभिग्रस्तो दारुणोऽपि प्रयुज्यते ॥९॥
अनुबन्धो दोषोत्पादे प्रकृत्यादेर्विनश्वरे ।
प्रस्तुतस्यानुवृत्तौ च शिशौ श्रेष्ठानुयायिनि ॥१०॥
अर्ज्जुनी सौरभेय्यां स्यादर्जुनस्तु धनञ्जये ।
जनन्येकसुते शुक्ले तृणवृक्षप्रभेदयोः ॥११॥
*अन्तरं भेदे तादर्थ्ये स्थाने वाह्येक्षणेऽवधौ ।
विनार्थे स्वीये स्वे ऽन्तर्द्धौ वस्त्रभेदेऽन्तमध्ययोः ॥१२॥
अरुणोऽर्के मान्ध्यदीप्तौ रक्ते चानूरुपिङ्गयोः ।
अव्यक्तरागे निःशब्दे§ऽप्यरुणाऽतिविषौषधौ ॥१३॥
अनन्तं खेऽनन्तो विष्णौ शेषेऽनन्ता मता भुवि ।
दुरालभायां दूर्वायामपत्यं पुत्रकन्ययोः ॥१४॥
†अर्थो धनेऽनुवृत्तौ च विषये हेतुवस्तुनोः ।
प्रयोजनेऽभिधेये स्याद्‌वनं प्रीतिरक्षयोः ॥१५॥
अजः पितामहे छागे केशवे च महेश्वरे ।
अथर्वाणिरथर्वज्ञे दृश्यते च पुरोहिते ॥१६॥
अन्तशय्या श्मशाने स्याद् भूशय्यायामपि क्वचित् ।
अम्बरीशस्तु राजन्ये सूर्ये हयकिशोरके ॥१७॥
अभिशस्तिरभिशापे प्रार्थनायाञ्च कीर्त्तिता ।
अनुभावो निश्चये स्यात् प्रभावे भावबोधके ॥१८॥
आस्तेऽनुमतिरूनेन्दुपूर्णिमायाञ्च सम्मतौ ।
अधिक्षिप्तः प्रणिहिते प्रेरिते चीरभर्त्सिते ॥१९॥

---

* 'अन्तरं च तादर्थ्ये स्थाने वा प्रवणे...... ।
विनार्थोऽसीयेस्वन्तर्धौ वाक्यभेदेऽन्तमध्ययोः ॥
इत्यादर्शे ।

† अर्थौ विज्ञार्थशालिनोरित्यजयः इति टीकासर्वस्वम् ।

§ 'निःसङ्गे' इत्यादर्शे

अपाचीनं विपर्यस्ते अपागर्थे च कुत्रचित् ।
अभीक्ष्णन्तु पौनःपुन्ये रावेदार्थे च दृश्यते ॥२०॥
अनूचानो नयनम्रे षडङ्गश्रुतिवेदिनि ।
अर्को वृक्षान्तरे ज्येष्ठभ्रातरि स्फटिके रवौ ॥२१॥
अयनं दक्षिणोदीचीगतौ भानोस्तथा पथि ।
भवेदपचितिः पूजाव्ययहानिषु निष्कृतौ ॥२२॥
अत्याहितं महाभीतौ जीवानपेक्षकर्मणि ।
अहिद्विड् गरुडे शक्रे मयूरे नकुले तथा ॥२३॥
अनुकर्षो रथस्याधःकाष्ठेऽनुकर्षणेऽपि च ।
अघशब्दो भवेत् पापे दुःखव्यसनयोरपि ॥२४॥
अवग्रहः प्रतिबन्धे वृष्टिरोधे गजालिके ।
*अन्तः प्रान्ते स्वरूपे च समीपे निधनेऽपि च ॥२५॥
अम्बरं वाससि व्योम्नि सुगन्धिद्रव्यभेदयोः ।
अभिजातो बुधे न्याय्ये समन्ताज्जातधन्ययोः ॥२६॥
अभिषङ्गः स्यादाक्रोशे शापाभिभवयोरपि ।
अमरेन्द्रपुरीस्थूणागुडूचीष्वमरः सुरे ॥२७॥
अग्रमूर्ध्वे पुरः श्रेष्ठे परिमाणेऽधिकेऽपि च ।
अवेलस्त्वपलापे† स्त्री पूगरक्तमुखाम्भसोः ॥२८॥
अभिख्या नाम्नि निर्दिष्टा शोभाभिख्यातिकीर्त्तिषु ।
अवष्टम्भस्तु संरम्भे स्तम्भकाञ्चनयोरपि ॥२९॥
अपवर्गः क्रियाशेषे साफल्यत्यागमुक्तिषु ।
अभिमानवाग् विश्वासौ गर्वे प्रणयहिंसयोः ॥३०॥
अवरं न तोद्गमाभावतारयोः (?) ।
अरुष्करं व्रणाकृति मतं भल्लातकेऽपि च ॥३१॥

* अन्तः प्रान्ते समीपे च स्वरूपे च निधने इति टीकासर्वस्वम्
† 'स्यात्' इत्यधिकमादर्शे

अम्बष्ठा पृथ्व्यां पाठायामम्बष्ठो वैद्यदेशयोः ।
अष्टापदं शातकुम्भे तथा शारिफले मतम् ॥३२॥
अत्ययः कृच्छ्रे नाशे च कथितो दोषदण्डयोः ।
अवधिः सीम्नि गर्त्ते च तथा कालावधानयोः ॥३३॥
अभिनिष्टान उद्दिष्टो विसर्जनीयवर्णयोः ।
अस्रः कोणे मूर्धजेऽस्रमश्रुणि क्षतजे तथा ॥३४॥
अनयस्तृणभेदे वै विपत्तौ व्यसनेऽपि च ।
पश्चात्तापेऽनुतापः स्यादनुबन्धे मतोऽप्यसौ ॥३५॥
अरत्निः स्यात् सप्रकोष्ठे कनिष्ठकरकीलयोः ।
अनीकस्थो नृपारक्षे राजशिक्षाविचक्षणे ॥३६॥
अभिहारोऽभियोगे च चौर्यसन्नाहयोरपि ।
अवतारणं भूताद्युपग्रहे वसनाञ्चले ॥३७॥
अवदानमतिवृत्ते खण्डने रक्षणेऽपि च ।
अङ्गजः सुतकन्दर्पशोणितेषु तथा रजि ॥३८॥
अजिरं विषये काये प्राङ्गने दर्दुरेऽनिले ।
अभिनीतं न्याय्येऽपि स्यादमर्षवति संस्कृते ॥३९॥
अध्यारूढमभ्यधिके समारूढेऽपि दृश्यते ।
भवेदभिमरो युद्धे स्वपक्षबलसाध्वसे ॥४०॥
अनुत्तरमवचने वाक्यभेदेऽपि दृश्यते ।
अङ्गं गात्रे तथाऽपायेऽप्यङ्गो देशेऽन्नशालिनि ॥४१॥
भवेदभिषवः स्नाने बले च मद्यसंहतौ ।
अभिग्रहोऽभियोगे च समन्ताद् ग्रहणेऽपि च ॥४२॥
अपाङ्गो नयनस्यान्ते *तिलके चाङ्गहीनके ।
अंशुकं वसने सूक्ष्मे वस्त्रमात्रान्तरीययोः ॥४३॥

---

*"साचित्रकाप्रधानयोः" इति भरतमल्लिकः

अनेडमूकशब्दोऽयं श्रुतिवाग्वर्जिते शठे ।
अवतारोऽवतरणे तीर्थे दूताद्युपग्रहे ॥४४॥
अन्तर्गतस्तु मध्ये विस्मृते प्राप्तेऽभिधेयवत् ।
अवध्वस्तो निन्दितेऽपि समुज्झितेऽवचूर्णिते ॥४५॥
भवेदवसितं ज्ञाते समासिञ्चितवत्यपि ।
अन्तिकं सन्निधौ दृष्टमन्तिका चुल्लिकापि च ॥४६॥
अश्वीयमश्वसंघाते स्यादश्वानां तथा हते ।
अपवर्जनन्तु दाने च परित्यागेऽपि दृश्यते ॥४७॥
अधिष्ठानं रथस्याङ्गे *तथा चागमनेऽपि च ।
अवगीतन्तु निर्वादेऽनुक्तदृष्टेऽपि गर्हिते ॥४८॥
अपभ्रंशोऽपशब्दे च भाषाभेदापवादयोः ।
†अभिजनः स्यादभिख्याने जन्मभूमौ कुले तथा ॥४९॥
अन्तावशायी चाण्डाले कथ्यते नापिते पुमान् ।
अनिमेषोऽनिमिषश्च पृथुरोम-सुपर्वणोः ॥५०॥
अवतंसः स्यादापीडे तथा कर्णावभूषणे ।
अभया च हरीतक्यामुशीरे भयवर्जिते ॥५१॥
अपह्नवो ह्नुतौ स्नेहेऽनीकः सैन्ये पुमानयम् ।
रणे दृष्टं द्युतावर्चिर्ज्वालेऽपि दृश्यते तथा ॥५२॥
अङ्कः क्रोडेऽन्तिके चिह्ने स्यादर्वा कुत्सिते हये ।
अहिभुक् तार्क्ष्यशिखिनोरभीषुः प्रग्रहे द्विषि ॥५३॥
अववादो विनिन्दायामवज्ञायाञ्च दृश्यते ।
तरोर्मूले (?)अगाधोऽस्त्री तथाचास्ताघरन्ध्रयोः ॥५४॥
अतलस्पर्शने क्लीवमुक्तं बुधगणैरपि ।
अणुर्व्रीहिप्रभेदे च सूक्ष्मेऽहिर्वृत्रसर्पयोः ॥५५॥

---

* "प्रभावेऽध्यासने पुरे" इति रघुनाथचक्रवर्तिभरतमल्लिकधृतः पाठः ।
† "भवेदभिजनः ख्यातौ" इत्यन्यत्र ।

अभ्यक्षोऽधिकृतेऽन्यक्षेऽवलेपो गर्वलेपयोः ।
अर्घ्यमर्घ्यार्थेऽर्घार्हं स्यान्मूल्येऽपि च बुधैर्मतः ॥५६॥
*अव्यक्तो नीलकण्ठे स्यादव्यक्तश्चास्फुटात्मनोः ।
अभिमर्द्दो मृधे मर्द्देऽग्रजन्मा द्विजेऽग्रजे ॥५७॥
अणीरूप्येऽक्षकीलेऽश्चावन्वयोऽन्तकृते कुले(?) ।
अण्डीरः पुंसि† शक्ते स्यादर्घो मूल्ये च सत्कृतौ ॥५८॥
अचलाचलौ भुव्यद्रावविमर्षे गिरौ रवौ ।
अम्लिका चिश्चाचाङ्गेर्योरभीकः कामुकेऽभये ॥५९॥
अद्रिर्द्रुमे गिरावर्के अभ्रं मेघे विहायसि ।
अम्बिकोमामातृकयोरार्त्तिश्चापाग्रपीडयोः ॥६०॥
अकूपारः द्रुमे सिन्धावनीकं रणसैन्ययोः ।
अर्द्धं समांशेऽर्द्धः खण्डेऽप्यनलोऽग्नौ च चित्रके ॥६१॥
‡अम्बुजाख्या च निचुलेप्यब्जेऽप्यन्त्योऽधमेऽन्त्यजे ।
अधमो न्यूने गर्ह्ये स्यादवटोऽपि निगद्यते ॥६२॥
प्रजापतिमयोगर्त्ते चानुमोदनभुक्तयोः(?) ।
अनूकमन्वये शीलेऽप्यक्षरं ब्रह्मवर्णयोः ॥६३॥
अट्टः सद्मातिशययोरर्यस्तु प्रभुवैश्ययोः ।
अन्योऽसदृशेतरयोरशनिः पविविद्युतोः ॥६४॥
अवक्षरो गुह्ये गूथे[प्य]ऽर्द्दितः प्रार्थिते हते ।
अन्धं तमस्यन्धोऽनक्षेऽप्यलिरवृश्चिकभृङ्गयोः ॥६५॥
अयोगो विधुरे श्लेषे अलिशब्दः (?)प्रकथ्यते ।
अशिरस्कोरशुवाच्छा(?)भिरूपो ज्ञ-रूपिणोः ॥६६॥
अतोऽव्ययान्यपि प्रश्ने शङ्कायाश्च समुच्चये ।
सम्भावनायां गर्हायामन्तरेणान्तरा विना ॥६७॥

---

* "अवरोक्षी नीलोष्ठे स्याद्" इत्यादर्शे † "अखोरी अखापुरुषौ" इति शाश्वतः ।
‡ शाश्वतकोषे हैमे च नोपलभ्यतेऽयं शब्दः ।

अस्तु स्यादभ्यनुज्ञाने पीडेर्ष्ययोरतिस्तुते ।
अलं भूषणसामर्थ्यपर्याप्तिष्ववधारणे ॥६८॥
अभितः शीघ्रे कार्त्स्न्ये च समीप उभयोरपि ।
अञ्जसा तु तथा तूर्णेऽप्यमा सहसमीपयोः ॥६९॥
अह द्रुते विनियोगेऽप्यहहाद्भुतखेदयोः ।
अनु सादृश्येऽनन्तरेऽप्यधिः स्यादीश्वरेऽधिके ॥७०॥

[ आ ]

आशयो विभवाधारकिम्पचानेषु चेतसि ।
अभिप्राये तथाजीर्णे कोष्ठागारे च सम्मतः ॥७१॥
आवेशनं स्यादावेशे शालायामपि शिल्पिनाम् ।
आर्त्तवं रजसि स्त्रीणामृतुत्थे च प्रकीर्त्तितम् ॥७२॥
आच्छादनं संपिधानवस्त्रवृतिषु दृश्यते ।
आकारो गोलविकृतावाह्वाने चाऽऽकृतौ तथा ॥७३॥
आसुतीवलशब्दोऽयं कल्यपाले च यज्वनि ।
आधिर्व्यसनेऽधिष्ठाने मनःपीडे च बन्धके ॥७४॥
आस्फोता विष्णुकान्तायां वनमल्लयर्कपर्णयोः ।
आश्रमो ब्रह्मचर्यादौ दृश्यते काननान्तरे ॥७५॥
आनर्त्तो नृत्यशालायां जने जनपदान्तरे ।*
आरोहः श्रोणौ द्रुमाङ्ग उच्छ्रायहस्तिवाहयोः ॥७६॥
आचितो भारदेशके शकटोन्मेयवस्तुनि ।
आधारश्चाधिकरणेऽप्यालवालाम्बुधारयोः ॥७७॥
आनद्धं बद्धमाले च कथ्यते मुरजादिके ।
आयस्तः कुपिते क्षिप्ते क्लेशिते तेजिते तथा ॥७८॥
भवेदाकलनं बन्धे कलनायामपि स्मृतम् ।
आक्रन्दः क्रन्दनारावे भीमयुद्धे नृपे प्रभौ ॥७९॥

---

* भरतमल्लिकेन धृतः

आत्मा बुद्धौ धृतौ शीले यत्ने हृद्ब्रह्मणोस्तनौ ।
आतिथ्यमतिथेरर्थे स्यादातिथ्योऽतिथौ तथा ॥८०॥
आकर्षः पाशके द्यूते आकृष्टौ शारिपीठके ।
आडम्बरः स्यादारम्भे तूर्ये द्विरदगर्जिते ॥८१॥
आहतं ताडिते ज्ञाते गुणितेऽनृतभाषिते ।
आशीरिष्टस्याऽऽशंसायां दंष्ट्रायामनिलाशिनाम् ॥८२॥
आवापः स्यादालवाले प्रक्षेपे विप्रतिस्थले ।
आलीढं धनुषः धन्विनः ? स्थानविशेषे स्वादिते तथा ॥८३॥
आयोगो व्यापृतौ गन्धमाल्याद्युपहृतौ तथा ।
आस्थालम्बन आस्थाने प्रयत्ने च प्रयुज्यते ॥८४॥
आषाढो व्रतिनां दण्डे मासपर्वतभेदयोः ।
आतञ्चनं प्रतीवापजवनाप्यायनेषु च ॥८५॥
आग्रहोऽनुग्रहे ख्यात आसङ्गग्रहयोरपि ।
आसारः प्रसरे राज्ञो वेगिवर्षे सुहृद्बले ॥८६॥
आयतिरागामिकाले दीर्घे दृष्टिप्रभावयोः ।
आर्या च्छन्दसि दुर्गायामार्यः सुहृदि सङ्गते ॥८७॥
आत्मनीनः सुते श्याले प्राणधारे विदूषके ।
आशितम्भवः स्यात्तृप्तावोदनादौ च कथ्यते ॥८८॥
आलानं करिणः स्तम्भे बन्धमाले च कीर्त्तितम् ।
आपन्नमाप्ते विपन्न आरम्भो वध उद्यमे ॥८९॥
आनकः पटहे भेर्यामाज्यं श्रीवाससर्पिषोः ।
आराधनं तोषणाप्तयोराप्तिः सम्बन्धलाभयोः ॥९०॥
आशा ककुभि कृतज्ञायामास्पदं पदकृत्ययोः ।
आलिः सेतौ सखीपङ्क्तयोरागमः शास्त्र आयतौ ॥९१॥
आस्कन्दनं युद्धास्कन्दयोराभीलं कृच्छ्रभीष्मयोः ।
आपातः पाते तदात्वे आगः पापापराधयोः ॥९२॥

आप्लुतः स्नातके स्नाते आश्रयो विबुधे स्मरे ।
आमिषाख्योत्कोचे मांसे आजिर्युद्धे समावनौ ॥९३॥
आभोगो यत्ने पूर्णत्वे आदृतः सादरेऽर्चिते ।
आविद्धः कुटिले क्लिष्टे आकृतिर्देहरूपयोः ॥९४॥
आलोको दर्शने द्योत आकल्पो वेशकल्पयोः ।
आतङ्कस्तापे रुग्भीत्योराङभिव्याप्तिसीमयोः ॥९५॥
क्रियायोग ईषदर्थे आस्तापे क्रुधि चाव्ययम् ।
आराद्दूरे समीपे स्यादा तु स्मरणवाक्ययोः ॥९६॥

[ इ ]

इक्ष्वाकुः स्यात् कटुतुम्बीभूमिपालप्रभेदयोः ।
इन्द्राणी सिन्धुवारे तु शच्यां स्त्रीकरणान्तरे ॥९७॥
भवेदितिकथाऽपार्थवचोऽश्रद्धेयवाक्ययोः ।
इरिणं निराश्रये भूभागे इरिणं कथितमूषरे(?) ॥९८॥
इष्वासो विशिखक्षेपे इष्वासं धनुषि स्मृतम् ।
इला गवि च सौम्यस्त्री-भुवोर्वचनवारिणोः ॥९९॥
इष्टं यागे च तद्दाने वाञ्छिते च प्रयुज्यते ।
इरा वसुन्धरामद्यवचनेषु च वारिणि ॥१००॥
इन्द्रियं हृषीके शुक्रे इन्द्रः पुरन्दरात्मनोः ।
इतरः पामरेऽन्यस्मिन् इज्या याजनपूजयोः ॥१०१॥
इनः प्रभौ दिवानाथे इष्टिरध्वरवाञ्छयोः ।
इति हेतौ प्रकाशादौ समाप्तौ प्रक्रमेऽव्ययम् ॥१०२॥

[ ई ]

ईहामृगो वृके रूपे ईहा तृषि समुद्यमे ।
ईश्वरेशौ प्रभौ रुद्रे ई दुःखे क्रुधि चाव्ययम् ॥१०३॥

[ उ ]

उपकारश्चोपकृतौ प्रकीर्णकुसुमादिके ।
भवेदुपनिषद्धर्मे रहोवेदान्तयोरपि ॥१०४॥
उदर्क उत्तरे काले तथोत्तरफले मतः ।
उन्माथः पाशयन्त्रे स्याद् वधे घाते च दृश्यते ॥१०५॥
उर्वरा सर्वशस्याढ्यवसुधायां क्षितावपि ।
भवेदुच्छिखिताभिख्या समुन्नताग्रे नमूकृते ॥१०६॥
स्यादुत्पतनमुत्पत्तौ तथोर्ध्वगमने मतम् ।
उत्थानमुद्गमे तन्त्रे पौरुषेऽङ्गन उद्यमे ॥१०७॥
उत्तरं श्रेष्ठे वाग्भेदे उदीच्यामपरेषु च ।
उदारो महति व्यासे दानशौण्डे च दक्षिणे ॥१०८॥
उपासनं शराभ्यासे शुश्रूषायाञ्च दृश्यते ।
उपकुम्भं समीपे च निःशलाकेऽपि कीर्तितम् ॥१०९॥
उपगमोऽभ्युपगमे समीपगमने तथा ।
उदान उदरावर्ते वायुभेदे भुजङ्गमे ॥११०॥
उत्तंसः कर्णपूरे तु शेखरेऽपि प्रकीर्तितः ।
उपाधिर्धर्मचिन्तायां कुटुम्बव्यापृतावपि ॥१११॥
उद्यानं संग्रहे याने वनभेदे प्रयोजने ।
स्यादुद्धरणमुन्मूले संभुक्तोज्झित एव च ॥११२॥
उत्थितं प्रोद्यते जाते वृद्धिमत्यपि दृश्यते ।
उदास्थितश्च रुग्भेदे प्रतीहारे च सम्मतः ॥११३॥
उद्ग्राहितमुपन्यस्ते बद्धग्राहितयोरपि ।
उग्रः स्यादुत्कटे क्षत्राच्छूद्रापुत्रे त्रिलोचने ॥११४॥
उपग्रहो भवेद् बन्धामनुकूलित एव च ।
उपस्पर्शः स्नानाचान्त्योर्व्यवधौ स्पर्शनेऽपि च ॥११५॥

अञ्चितो युक्तेऽनुमते निश्चिताभ्यस्तयोरपि ।
उपप्लवोऽध्यासे राहावुत्पाते च प्रयुज्यते ॥११६॥
उपक्रमश्चिकित्सायामुपधारम्भयोरपि ।
उत्सवश्चनिरुत्सर्गे स्यादमर्षे क्षणेऽपि च ॥११६॥
उपाहितो वह्न्युत्पाते दृश्यते निहितेऽपि च ।
उद्घातः पादस्खलिते हलाङ्गे समुपक्रमे ॥११८॥
उष्णीषं मुकुटे शिरोवेष्टने कथ्यते बुधैः ।
उपलब्धिर्भवेत् प्राप्तौ तथा ज्ञानमनीषयोः ॥११६॥
उपनाहो व्रणालेपपिण्डे वीणानिबन्धने ।
उन्मत्त उन्मादवति धुस्तूरे च प्रकीर्त्तितः ॥१२०॥
उडुम्बरो द्रुदेहल्योरुदूढः पृथुलोढयोः ।
उषा निशि तदन्ते स्यादुपोढो निकटोढयोः ॥१२१॥
उपरागः सङ्गे राहोरुदितं प्रोक्त उद्गते ।
[illegible] रुपलः प्रस्तरे मणौ ॥१२२॥
उपाधिर्व्याज [illegible] वक्षसि सत्तमे ।
उत्कटः क्षीबोत्कटयोरुषः प्रत्यूषसन्ध्ययोः ॥१२३॥
उषितं व्युषिते दग्धे उदर्चिरुत्प्रभेऽनले ।
उत्सेध उन्नतौ काये उस्राख्या गवि दीधितौ ॥१२४॥
उद्धानमुद्गमे चुल्ल्यामुपस्थः क्रोडगुह्ययोः ।
उमाऽतसीहैमवत्योरुडुपो भेलचन्द्रयोः ॥१२५॥
उपतापो गदे तापे उत्सर्गस्त्यागदानयोः ।
ररी चोररी चोरी विस्तारेऽङ्गीकृतेऽव्ययम्* ॥१२६॥
उदक् काले देशदिशोरुदीच्ये स्यादनव्ययम् ।
उप हीनेऽधिके दृष्टमुत वाढविकल्पयोः ॥१२७॥

* "विस्तारेऽङ्गीकृतौ त्वयम्" इति भ० पा० ।

[ ऊ ]

ऊर्णा स्याद् भ्रूमध्यलोम्नामावर्त्ते मेषलोमनि ।
ऊर्णायुरूर्णनाभे च मेषे च मेषकम्बले ॥१२८॥
ऊर्जः कार्त्तिकमासेऽपि तथोत्साहेऽपि भाषितः ।
ऊर्मिर्वीचावुत्पीडायामूतिः स्यूतौ च रक्षणे ॥१२९॥

[ ऋ ]

ऋषभो वृषभे श्रेष्ठयां शब्दात् परो वरे स्वरे ।
कर्णरन्ध्रे नक्रपुच्छे ऋषिः स्यान्मुनिवेदयोः ॥१३०॥
*ऋक्षं नक्षत्रे ऋक्षः स्याद् भल्लुके शोणके द्रुमे ।
ऋतुः स्त्रीपुष्पवर्षाद्योः ऋतं सत्ये शिलोञ्छयोः ॥१३१॥

[ ए ]

एकाग्रमेकताने च स्यादनाकुल एव च ।
एकं श्रेष्ठाद्वयान्येषु एनः पापापराधयोः ॥१३२॥
एतः कर्बुर आयाते एनाऽभिधीयतेऽव्ययम् ।
एवं प्रकार औपम्ये एवौपम्येऽवधारणे ॥१३३॥

[ ऐ ]

ऐरावतो नागरङ्गेऽभ्रेभ ऐरावतं हरेः ।
दीर्घर्ज्वस्त्र ऐरावती विद्युद्भेदे च विद्युति ॥१३४॥

[ ओ ]

ओजोऽवष्टम्भवत[बल]योः प्रकाशे त्विषि चेष्यते ।
ओघशब्दः समाख्यातः समूहजलवेगयोः ॥१३५॥

[ औ ]

औषीरश्चामरे दण्डे औषीरं स्वापपीठयोः ।
औडुम्बरं भवेत्ताम्रे प्रसवे यज्ञशाखिनः ॥१३६॥

---

*भल्लुकौ श्योनके ऋक्षो भवत् पुंनपुंसकम् ।

[ क ]

कृष्णो वर्णान्तरे ध्वांक्षे विष्णौ व्यासे धनञ्जये ।
कृष्णा कणायां द्रौपद्यां कृष्णं मरिचलोहयोः ॥१३७॥
कुमारो युवराजे तु शिशौ स्कन्देऽश्ववारके ।
वरुणे कुमारी बालाजम्बुद्वीपौषधिषु च ॥१३८॥
कौतुकं विषयाभोगे मङ्गले च कुतूहले ।
विवाहसूत्र विख्यातः क्वचित् कामेऽपि दृश्यते ॥१३९॥
कल्यं दिनमुखे सज्जे कल्यो दक्षे च नीरुजि ।
कल्या कल्याणभाषायां मदिरायामपि क्वचित् ॥१४०॥
करणं कारणे काये साधनेन्द्रियकर्मसु ।
कायस्थे वालवादौ च नृत्यगीतप्रभेदयोः ॥१४१॥
क्रिया कर्मणि पूजायां निष्कृतौ सम्प्रधारणे ।
आरम्भोपायशिक्षासु चिकित्सारम्भयोः कृतौ ॥१४२॥
काण्डं बाणाम्बुनालेषु रहोविटपयोः क्षणे ।
तरुशाखावधौ गर्ह्ये रत्ने (गुल्मे?)स्कन्धे च शाखिनाम् ॥१४३॥
कूटो दम्भे समूहे च हलावयवयन्त्रयोः ।
अयोघनेऽद्रिशिखरे निश्चलेऽनृतमाययोः ॥१४४॥
कक्षो जन्तोरवयवे तृणकच्छलतासु च ।
कक्षा तु परिधानस्य पृष्ठतो विहिताञ्चले* ॥१४५॥
कालो मृत्यौ महाकाले समये यमकृष्णयोः ।
काली गौर्यां क्षीरकीटे मातृभेदे नवाम्बुदे ॥१४६॥
कला शिल्पे कालभेदे चन्द्रांशे कलनांशयोः ।
द्रव्यवृद्धौ कलोऽस्पष्टमधुरनिस्वने तथा ॥१४७॥
कुहना दम्भचर्यायां मायायां कुहरस्तथा ।
†कुहरं गह्वरे कर्णे कण्ठशब्दो गलेऽन्तिके ॥१४८॥

---

* "कक्षो भित्तौ पापपार्श्वे दोर्मूले शुष्ककानने" इति भरतधृतः पाठः ।

† कुहरं सुषिरे दम्भे नागलोके ततेऽपि च

कामः काम्ये निकामे स्यादिच्छायामथ मन्मथे ।
कामं स्वीकरणेऽसंख्ये काव्याख्या ग्रन्थशुक्रयोः ॥१४९॥
कर्णिका हस्तिहस्ताग्रेऽङ्गुलौ कर्णविभूषणे ।
सरोजबीजकोषे च कुनी परिपण्डतयोग्ययोः ॥१५०॥
कोलं स्याद्बदरे कोलो वृक्षभेदे कलध्वनौ ।
कटित्रं चर्मभेदे च वीक्षितं कटिचर्मणि ॥१५१॥
ककुभोऽर्जुनवृक्षे स्यात् कुशो वीणाप्रसेवके ।
कल्पो न्याये विधौ शास्त्रे संवर्त्ते ब्रह्मवासरे ॥१५२॥
काष्ठा काले प्रकर्षे च मर्यादायां दिशि स्मृता ।
कलापः संचये बर्हे मेखलायाञ्च तूणके ॥१५३॥
कटकं वलये पुर्यां नितम्बे पर्वतस्य च ।
कुशी फाले च वल्गायां कुशो दर्भे कुशं जले ॥१५४॥
क्रूरो भयङ्करे हृष्टो नृशंसे कठिनेऽपि च ।
कटुस्तीक्ष्णे रसे गन्धे कटुकार्ये तु मत्सरे ॥१५५॥
कुशलं दीक्षिते क्षेमे समर्थे शिक्षिते स्मृतम् ।
केतनञ्च ध्वजे कार्ये निमन्त्रणनिवासयोः ॥१५६॥
ककुद्मत् ककुदं श्रेष्ठे वृषाङ्गे नृपलक्षणे ।
कम्बलः प्रावरे भेदे सास्नायां कम्बलं जले ॥१५७॥
करो हस्तांशुशुण्डासु प्रत्यये च घनोपले ।
करहाटोऽब्जसकन्दे स्यात् करटं मप्रसूनके ॥१५८॥
कृत्यं विद्विषि कार्ये च कृत्या क्रियादिर्वौकसोः ।
कुलं सजातिसन्दोहे गोत्रे जनपदे गृहे ॥१५९॥
कल्पनं कर्त्तने क्लृप्तौ कल्पना गजसज्जने ।
कर्कशः काम्पिल्येऽपि स्यात् साहसिकेऽभये दृढे ॥१६०॥
कौशिकः पेचके शक्रे व्यालग्राहे च गुग्गुलौ ।
कायः कदैवते वृन्दे शरीरलक्ष्ययोरपि ॥१६१॥

कुलायः पक्षिणां स्थाने तेषामेव च सद्मनि ।
कञ्चुको वारवाणे च निर्मोके कवचेऽपि च ॥१६२॥
कुसुम्भो महारजने दृश्यतेऽथ कमण्डलौ ।
कूर्चः श्मश्रुणि दम्भे च भ्रुवोर्मध्ये विकत्थने ॥१६३॥
कणा मता तु पिप्पल्यां कणो धान्याङ्गलेशयोः ।
कोकटिको दाम्भिके स्याद् दूरे प्रेरितचक्षुषि ॥१६४॥
कुकूलं कल्यगर्त्ते च कुकूलस्तु तुषानले ।
कोणोऽस्त्रौ लगुडे दृष्टो वीणादेर्वादने तथा ॥१६५॥
कम्बुः शंखे च शम्बूके वलये च स्मृतः क्वचित् ।
कपोतः स्यात् पक्षिभेदे दृष्टः पारावते पुनः ॥१६६॥
कल्कं पापाशये पापे दम्भे किट्टे च भाषितम् ।
कोष्ठः कुक्षौ कुशूले च मन्दिरावयवे निजे ॥१६७॥
कूलं तटे तडागे च स्तूपसैन्यनितम्बयोः ।
कर्णान्दुरुत्क्षिप्तिकायां कर्णपाल्यामपि क्वचित् ॥१६८॥
कुण्डली चित्रलमृगे सर्पकुण्डलधारिणोः ।
किल्विषं दुरिते दृष्टं गरेऽपराध एव च ॥१६९॥
कारिका विवृतिश्लोके यातनायां तथा कृतौ ।
कलहंसस्तु कादम्बे राजहंसे नृपोत्तमे ॥१७०॥
कुम्भीलश्चौरे श्लोकादिच्छायायां शालमीनयोः ।
कुनपः कम्बले काले वाद्यभेदे च बर्हिषि ॥१७१॥
कण्टकः पादपाङ्गे च रोमाञ्चक्षुद्रवैरिणोः ।
केतुश्चिह्ने पताकायामुत्पातेऽपि प्रयुज्यते ॥१७२॥
काचः शिक्येऽक्षिरोगे च मृद्विशेषेऽपि कीर्त्तितः ।
कुमुदं कैरवे ख्यातं कुमुदो दिग्गजे कपौ ॥१७३॥
कोकनदस्तु रक्ताब्जे कथितं रक्तकैरवे ।
कृतान्तो दैवे सिद्धान्ते यमाकुशलकर्मणोः ॥१७४॥

केवलं त्वेकके दृष्टं तथा कृतघ्नेऽवधारिते ।
करेणुः करिहस्तिन्योः कर्णिकारेऽपि दृश्यते ॥१७५॥
क्रमुकः पट्टिकालोध्रे गुवाके ब्रह्मदारुणि ।
कोषः पेश्यां धने दिव्ये परिवारे च कुड्मले ॥१७६॥
कुलीनं स्यात् कुलीनत्वे प्राणिद्यूते जनोदिते ।
कार्मणं योगविद्यायां कर्मकारे कुपूरुषे ॥१७७॥
कीनाशः कर्षके दृष्टः कन्दर्पान्तकयोरपि ।
कान्ता स्त्रियां प्रियङ्गौ च कान्तः प्रियमनोज्ञयोः ॥१७८॥
केशरो वकुले दृष्टः पुन्नागे नागकेशरे ।
कलिङ्गाख्या शक्रफले धूम्याटे तिक्तकेशरे ॥१७९॥
किर्मीहाटकपुन्याश्च शालापलालयोः क्वचित् ।
कुञ्जरा पाटलायां स्याद् धातक्यां कुञ्जरे गजे ॥१८०॥
कूर्च्चिका तूलिकायां स्याच् शूचिपाशुडकेषु च ।
कक्षपाल औपविके शुलापाले च कीर्तितः ॥१८१॥
कूपोऽन्धी गुणावृत्ते च क्वचिद् गर्तेऽपि दृश्यते ।
कुल्याख्या जलप्रणाली-सरितोः कुलजेऽस्थनि ॥१८२
कलकण्ठः परपुष्टे दृश्यते कलवाचिनि ।
कौपीनं त्वपकार्ये च गुह्ये चीरे प्रभाषितम् ॥१८३॥
कक्ष्या साम्ये गजरज्जौ मेखलायां प्रकोष्ठके ।
कमठः कच्छपे दृष्टो भाण्डभेदेऽपि कुत्रचित् ॥१८४॥
काकोल्योषध्यां काकोलो द्रोणकाके विषान्तरे ।
कङ्कणं कथितं सूले मण्डले करभूषणे ॥१८५॥
कुषीदो जिगीषाशून्ये कुषीदं वृद्धिजीवने ।
कोटिरस्त्री प्रकर्षे च संख्याभेदेऽटनौ तथा ॥१८६॥
कीला कफोणिदेशेऽपि कीलः स्थाणवर्च्चिषोरपि ।
कदली मृगभेदेऽपि पताकामोचयोरपि ॥१८७

# संस्कृतसाहित्यपरिषत्

'इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| January, 1935. | १८५७-शकीये पौषे<br>१८श-वर्षस्य ९म-संख्या | Vol. XVIII<br>No. 9 |


## मृच्छकटिके व्यवहारप्रकरणम्

यानि खलु रूपकरत्नानि भाषासौष्ठवेन भावगाम्भीर्येण रसविलासेन वृत्तबाहुल्येन च जगति बहुमानास्पदतामनुप्राप्तानि तेष्वेवेदमन्यतमं मृच्छकटिकसमाख्यं प्रकरणम्। अस्य च रचयिता शूद्रको वा भवतु, भासो वा भवतु अन्यो वा कश्चन भवतु सर्वथा तस्य नैपुण्यमनितरसाधारणमेव। प्रकरणस्यास्य नवमेऽङ्के मृषाभियुक्तस्य चारुदत्तस्याधिकरणे व्यवहारः सरसमधुरया भङ्ग्या समुपवर्णितः। यद्यपि स्मृतिशास्त्रेषु प्रायेण व्यवहारप्रकरणं विलसत्येव, तथापि न खलु ततः सुखेनैव तदानीन्तनी विचारशैली शक्यतेऽधिगन्तुम्। अन्या हि वर्णनप्रणाली कविप्रजापतीनाम्। ते हि समतिक्रान्तमपि कालं प्रभवन्ति प्रत्यक्षतां नेतुम्। अत एव नैतदाश्चर्यं यन्मृच्छकटिकस्थो नवमाङ्कः प्राचीनकालीनव्यवहारस्यावितथं चित्रमस्माकं पुरतः प्रसारयति।

तत्र प्रथमतस्तावदधिकरणिकेन प्रसादरम्येण श्लोकत्रितयेन *व्यङ्ग्य-मर्यादया स्वकार्यस्यातिदुःसम्पादत्वं प्रकाश्यते । एतेन चाधिकरणिकवचनेनाचिरादेव न्यायस्य विपर्यासो भविष्यतीति संसूच्यते ।

श्रेष्ठिकायस्थाभ्यामनुगम्यमानोऽधिकरणिकः शोधनकेन निर्दिष्टमधिकरणमण्डपं संप्रविश्य कः कार्यार्थीति जिज्ञासमानो "राजश्याल एव प्रथमं कार्यार्थी"त्यवगच्छन् व्यवहारवैयाकुलीमाशङ्कमानः 'न खल्वद्य ते व्यवहारो दृश्यते' इति तं विज्ञापितवान्। ततश्च भगिनीपतिसाहाय्येन त्वामधिकारादपसार्यान्यं कञ्चन त्वत्पदे प्रतिष्ठापयिष्यामि इति भीषितः 'आगच्छ दृश्यते ते व्यवहार' इति शोधनकमुखेन तमाहूतवान्। शकारेण

* अहो व्यवहारपराधीनतया दुष्करं खलु परचित्तग्रहणमधिकरणिकैः ।

छन्नं कार्यमुपक्षिपन्ति पुरुषा न्यायेन दूरीकृतं
स्वान् दोषान् कथयन्ति नाधिकरणे रागाभिभूताः स्वयम् ।
तैः पक्षापरपक्षवर्धितबलैर्दोषैर्नृपः स्पृश्यते
संक्षेपादपवाद एव सुलभो द्रष्टुर्गुणो दूरतः ॥

अपि च

छन्नं दोषमुदाहरन्ति कुपिता न्यायेन दूरीकृताः
स्वान् दोषान् कथयन्ति नाधिकरणे सन्तोऽपि नष्टा ध्रुवम् ।
ते पक्षापरपक्षदोषसहिताः पापानि संकुर्वते
संक्षेपादपवाद एव सुलभो द्रष्टुर्गुणो दूरतः ॥

यतः । अधिकरणिकः खलु

शास्त्रज्ञः कपटानुसारकुशलो वक्ता न च क्रोधन-
स्तुल्यो मित्रपरस्वकेषु चरितं दृष्ट्वैव दत्तोत्तरः ।
क्लीबान् पालयिता शठान् व्यथयिता धर्म्यो न लोभान्वितो
द्वार्भावे परतत्त्वबद्धहृदयो राज्ञश्च कोपापहः ॥

*आरूढबहुप्रतर्कोऽपरिच्छेदाकुलमानसः तत्तदपशकुनसन्दर्शनसम्भ्रान्तहृदयः† प्रविवेशाधिकरणमण्डपमार्यचारुदत्तः ।

प्रथमत एवाधिकरणमण्डपस्य रूपमामभिसमीक्ष्योक्तम् अहो अधिकरणमण्डपस्य परा श्रीः । इह हि—

चिन्तासक्तनिमग्नमन्त्रिसलिलं दूतोर्मिशङ्खाकुलं
　　पर्यन्तस्थितचारनक्रमकरं नागाश्वहिंस्राश्रयम् ।
नानावाशककङ्कपक्षिनिचितं कायस्थसर्पास्पदं
　　नीतिक्षुण्णतटं च राजकरणं हिंस्रैः समुद्रायते ॥

ईदृशं दूतचारादिसङ्कुलं पापिष्ठजनपरिचितं धर्माधिकरणं कस्य वा नोद्वेगं समुपजनयति मनसि सहृदयस्य । अत एव नैतदाश्चर्यं यत्

* ज्ञातो हि किं नु खलु बन्धनविप्रमुक्तो मार्गागतः प्रवहणेन मयाऽपनीतः ।
　चारेक्षणस्य नृपतेः श्रुतिमागतो वा येनाहमेवमभियुक्त इव प्रयामि ॥९॥

† रूक्षस्वरं वाशति वायसोऽयममात्यभृत्या मुहुराह्वयन्ति ।
　सव्यं च नेत्रं स्फुरति प्रसह्य ममानिमित्तानि हि वेदयन्ति ॥१०॥

　शुष्कवृक्षस्थितो ध्वाङ्क्ष आदित्याभिमुखस्तथा ।
　मयि चोदयते वामं चक्षुर्घोरमसंशयम् ॥११॥

मयि विनिहितदृष्टिर्भिन्ननीलाञ्जनाभः
　　स्फुरितविततजिह्वः शुक्लदंष्ट्राचतुष्कः ।
अभिपतति सरोषो जिह्मिताध्मातकुक्षि-
　　र्भुजगपतिरयं मे मार्गमाक्रम्य सुप्तः ॥१२॥

स्खलति चरणं भूमौ न्यस्तं न चाऽऽर्द्रतमा मही
　　स्फुरति नयनं वामो बाहुश्च मुहुर्विकम्पते ।
शकुनिरपरश्चायं तावद्विरौति हि नैकशः
　　कथयति महाघोरं मृत्युं न चात्र विचारणा ॥

सम्भ्रमातिरेकाच्चारुदत्तस्य शिरस्तत्रत्ये दारुणि प्रहतम् । तेन चेदमपरमप्यपशकुनं समीक्ष्य समाकुलान्तरात्मनोक्तम्—

सव्यं मे स्पन्दते चक्षुर्विरौति वायसस्तथा ।
पन्थाः सर्पेण रुद्धोऽयं स्वस्ति चास्मासु दैवतः ॥१५॥

इति ।

तत्र च प्रविष्टस्य तस्य* दर्शनमात्रेणैवावगतहृदयमाहात्म्येनाधिकरणिकेन स्वागतासनदानादिना सम्भावितः, पृष्टश्च अस्ति भवतोऽस्या आर्याया दुहित्रा सह प्रसक्तिः प्रणयः प्रीतिर्वा । ततश्चाङ्गुलिनिर्देशेन सन्दर्शिता वसन्तसेनाया माता चारुदत्तेनोत्थायाभिवादिता । व्यतिकरेणानेन विस्मयमानमानसेन पृष्टश्चारुदत्तोऽधिकरणिकेन—आर्य, गणिका तव मित्रमिति ? ततश्च लज्जया 'विस्पष्टं' वक्तुमशक्नुवन् प्रकारान्तरेण प्रोवाच भो अधिकृताः, मया कथमीदृशं वक्तव्यम्, यद्गणिका मम मित्रमिति । अथवा यौवनमत्रापराध्यति न चारित्रम् इति ।

समाजेषु वैदग्ध्यस्येदृशस्य समादृतत्वेऽपि व्यवहार ईदृशं वचनमवलम्ब्य न प्रवर्तते इत्यधिकरणिकेन

व्यवहारः सविघ्नोऽयं त्यज लज्जां हृदि स्थिताम् ।
ब्रूहि सत्यमलं धैर्यं छलमत्र न गृह्यते ॥

इति—मुहुर्निर्बद्धेन चारुदत्तेन प्रतिपन्नं गणिका स्वं मित्रमिति । ततश्चाधिकरणिकेन, आर्य, वसन्तसेना क्व गतेति पृष्टः गृहं गता इति प्रत्युवाचासौ । ततश्च श्रेष्ठिकायस्थाभ्यामनुयुक्तः—कथं गता, कदा गता गच्छन्ती वा केनानुगता इति चारुदत्तः स्वगतं वितर्कयंश्चिरयंश्च शङ्कास्थानं सञ्जातः । ततश्च पुनः पृष्टेन तेनोक्तम्—गृहं गतेति । अवसरे

---

* घोणोन्नतं मुखमपाङ्गविशालनेत्रं नैतद्धि भाजनमकारणदूषणानाम् ।
नागेषु गोषु तुरगेषु तथा नरेषु न ह्याकृतिः सुसदृशं विजहाति वृत्तम् ॥१६॥

चास्मिन् दुर्वृत्तेन शकारेणोक्तम्, मदीयं पुष्पकरण्डकजीर्णोद्यानं प्रवेश्यार्थ-निमित्तं बाहुपाशबलात्कारेण मारिता। तच्छ्रुत्वा तेन सक्रोधमधिक्षिप्तः शकारः*। तद्दर्शनेनाधिकरणिकेनापि तस्य निरपराधत्वं प्रतीतम्। विस्पष्टमेव चोक्तं न खल्वार्यचारुदत्ते सम्भवतीदृशोऽपराधः† इति। ततश्चारुदत्ते बद्धपक्षपात इति शकारेणाक्रुष्टोऽधिकरणिको निपुणं तमुपालेभे‡। उवाच च येन खलु महात्मना निरपेक्षं सर्वस्वमर्थिसात् कृतं कथं तेन तुच्छस्यार्थस्य कृते महापातकमिदमाचर्येत इति।

ततश्च चारुदत्तः पृष्टोऽधिकरणिकेन किमसौ पद्भ्यां गता, उत प्रवहणेनेति। अस्मिन्नन्तरे नगररक्षाधिकृतो वीरकः अधिकरणं प्रविष्टोऽधिकरणिकेन पृष्टः प्रवहणमधिकृत्य जल्पितवान् वसन्तसेना चारुदत्तस्य प्रवहणमारूढा पुष्पकरण्डकजीर्णोद्यानं क्रीडितुं नीतेति। एतेन शकारस्योक्तेरवष्टम्भनेनाधिकरणिकश्चारुदत्तस्य विशुद्धौ सन्दिहानः शकारस्योक्ते-

---

* अये असम्बद्धप्रलापिन्,

अभ्युन्नितोऽसि सलिलैर्न वलाहकानां चापाग्रपक्षसदृशं भृशमन्तराले।
मिथ्यैतदाननमिदं भवतस्तथाहि हेमन्तपद्ममिव निष्प्रभतामुपैति ॥२६॥

† तुलनं चाद्रिराजस्य समुद्रस्य च तारणम्।
ग्रहणं चानिलस्येव चारुदत्तस्य दूषणम् ॥

‡ वेदार्थान् प्राकृतस्त्वं वदसि न च ते जिह्वा निपतिता
मध्याह्ने वीक्षसेऽर्कं न तव सहसा दृष्टिर्विचलिता।
दीप्ताग्नौ पाणिमन्तः क्षिपसि स च ते दग्धो भवति नो
चारित्राच्चारुदत्तं चलयसि न ते देहं हरति भूः ॥२१॥

आर्यचारुदत्तः कथमकार्यं करिष्यति।
कृत्वा समुद्रमुदकोच्छ्रयमात्रशेषं दत्तानि येन हि धनान्यनपेक्षितानि।
स श्रेयसां कथमिवैकनिधिर्महात्मा पापं करिष्यति धनार्थमनार्यजुष्टम् ॥२३॥

यथार्थ्यनिर्णयाय *पुष्पकरण्डकोद्यानं गत्वाऽचिरमेव द्रष्टव्यं तत्र काचिद्विपन्ना स्त्री वर्तते वा न वेति वीरकमादिष्टवान्। वीरकेणापि गत्वा प्रतिनिवृत्तेनोक्तम्—दृष्टं मया स्त्रीकलेवरं श्वापदैर्भक्ष्यमाणम् इति। कथं ज्ञायते स्त्रीकलेवरमिति पृष्टेन तेन सावशेषैः केशहस्तपाणिपादैरुपलक्षितं मयेत्युक्तम्। ततश्च अधिकरणिको दोलायमानमतिः† संवृत्तः, चारुदत्तोऽपि छिद्रेष्वनर्था बहुलीभवन्तीति‡ परिदेवयाञ्चक्रे। ततश्चाधिकरणिकेन, आर्य चारुदत्त सत्यमभिधीयताम् इति प्रचोदितश्चारुदत्तः प्राह—दुर्वृत्तेन मत्सरिणा यदेव वक्तव्यं तत्रैव प्रत्यय आधेयः, न खलु विचारः प्रवर्तनीय इति।

दुष्टात्मा परगुणमत्सरी मनुष्यो
रागान्धः परमिह हन्तुकामबुद्धिः।
किं यो यद् वदति मृषैव जातिदोषा-
त्तद् ग्राह्यं भवति न तद्विचारणीयम् ॥२७॥

अपि च

योऽहं लतां कुसुमितामपि पुष्पहेतो-
राकृष्य नैव कुसुमावचयं करोमि।
सोऽहं कथं भ्रमरपक्षरुचौ सुदीर्घे
केशे प्रगृह्य रुदतीं प्रमदां निहन्मि ॥२८॥

---

* एष भो निर्मलज्योत्स्नो राहुणा ग्रस्यते शशी।
जलं कूलावपातेन प्रसन्नं कलुषायते ॥

† यथा यथेदं निपुणं विचार्यते तथा तथा सङ्कटमेव दृश्यते।
अहो सुसन्ना व्यवहारनीतयो मतिस्तु गौः पङ्कगतेव सीदति ॥२५॥

‡ यथैव पुष्पं प्रथमे विकासे
समेत्य पातुं मधुपाः पतन्ति।
एवं मनुष्यस्य विपत्तिकाले
छिद्रेष्वनर्था बहुलीभवन्ति ॥

ततश्च पुनरपि पक्षपातदुष्टोऽसि इति शकारेणाधिक्षिप्तस्याधिकरणिकस्य निदेशेन शोधनकेनापनीतं चारुदत्तस्याऽऽसनम् । परमिदानीमपि उत्तरासना-पहरणादेशात् समुद्विजमानोऽधिकरणिकः, शोधनकस्य कर्णे एवं क्रियतामिति कथितवान् ।

अत्रेदमवधातव्यम् । कामम् अधिकरणिकोऽयं कुशाग्रबुद्धिर्यथाशक्ति तथ्यावधारणायैव प्रयतते । सर्वेषामेव वचनानां प्रश्नप्रतिप्रश्नाक्षेपादिना तथ्यं निर्णेतुं प्रयस्यति । तथापि प्रथमत एव शकारस्य भीतिप्रदर्शनेन स्वादेश-विपर्यासविधानं नितान्तत एव तस्यानुचितम् । ततश्च तस्यैव दुरात्मनो न मयेति पदद्वयेनास्य मनसि यः सन्देहोन्मेषः सञ्जातः तस्य निराकरणाय कतिचिद्दिनानि व्यवहारस्य रोधः कर्तव्य आसीत् । किञ्च वीरकमुखाद् दृष्टं मया स्त्रीशरीरं श्वापदैरवलुप्यमानमित्युपश्रुत्य तदानीमेव तस्य शरीरस्य विशेषतः परीक्षणमवश्यमेव कर्तव्यमासीत् । एतद्द्वितयं वर्जयित्वाऽधि-करणिककार्याणि सर्वथाऽनवद्यान्येव ।

ततश्चाधिकरणमण्डपं प्रविष्टेन चारुदत्तवयस्येन मैत्रेयेणोपलब्धवृत्तान्तेन शकारं ताडयितुकामेन शकारेण ताड्यमानेन शकारं विप्रतीपं ताडयता कक्षदेशादाभरणानि पातितानि । ततस्तानि गृहीत्वा समवलोक्य ससा-ध्वसं शकारेण 'वसन्तसेनाया आभरणानीमानि । एतेषामेव कृते हता सा वराकी दुरात्मनाऽनेने'त्युक्तम् । एतेन च स्वप्नेऽप्यसम्भावनीयेन व्यतिकरेणाधिकृताः सर्वेऽधोमुखाः स्थिताः । तथाच "किमिति भूतार्थो न निवेद्यते" इति विदूषकेणानुयुक्तश्चारुदत्तः प्राह—

दुर्बलं नृपतेश्चक्षुर्नैतत् तत्त्वं निरीक्षते ।
केवलं वदतो दैन्यमश्लाघ्यं मरणं भवेत् ॥

अधिकरणिकेनापि गण्डस्योपरि स्फोटकमिमं दृष्ट्वोक्तम्—

अङ्गारकविरुद्धस्य प्रक्षीणस्य बृहस्पतेः ।
ग्रहोऽयमपरः पार्श्वे धूमकेतुरिवोत्थितः ॥ इति ।

ततश्च श्रेष्ठिकायस्थाभ्यामनुयुक्तया महानुभावया वसन्तसेनामात्राऽभिहितं

सदृश एष न पुनः स इति। शकारेण चोक्तम्—अक्षिभ्यां मन्त्रितं वाचा मूकितम् इति। यदा च पुनः पुनरनुबध्यमानयाऽपि वृद्धया न प्रतिपन्नं तदाऽधिकरणिकस्यापि मनसि कृतं सन्देहेन पदम्।* आर्यचारुदत्तेन पुनर्विस्पष्टमेव आभरणानीमानि अत्रभवत्या दुहितुरिति निर्दिष्टम्। तथा च 'आर्य चारुदत्त, सत्यमभिधीयताम्।

इदानीं सुकुमारेऽस्मिन्निःशङ्कं कर्कशाः कशाः।
तव गात्रे पतिष्यन्ति सहास्माकं मनोरथैः॥'

इत्युक्तश्चारुदत्तः प्राह—

अपापानां कुले जाते मयि पापं न विद्यते।
यदि सम्भाव्यते पापमपापेन च किं मया॥

इति। ततश्च किमनेन वसन्तसेनाविरहितेन भारायमाणेन जीवितेनेति मनसि पर्यालोच्य जातनिर्वेदेन प्रतिपन्नकल्प एवापराधः केवलं न पारितमनेन वसन्तसेना व्यापादिता इति उच्चारयितुम्†। तत् खलु तस्य निर्देशेन शकारेणैव पूरितम्। किमन्यद्वक्तव्यमिदानीम्। एतस्य दरिद्रचारुदत्तस्य शारीरो दण्डो धार्यताम् इति शकारेणाभ्यर्थितेनाधिकरणिकेन समादिष्टाश्चारुदत्तग्रहणाय राजपुरुषाः। वसन्तसेनामात्रा पुनश्चारुदत्तस्य स्वदुहितृमारकत्वेऽपि तस्य मोचनाय अभ्यर्थिता राजपुरुषाः। अहो औदार्यं च गुणग्राहित्वं च गणिकामातुः। अहो लोकचरितानभिज्ञत्वमधिकरणिकस्य। ततश्च सिद्धं समीहितमिति निष्क्रान्तः शकारः। ततश्चाधिकरणिकेन शोधनकमुखेन विज्ञापितो राजा—

---

* वस्त्वन्तराणि सदृशानि भवन्ति नूनं
रूपस्य भूषणगुणस्य च कृत्रिमस्य।
दृष्ट्वा क्रियामनुकरोति हि शिल्पिवर्गः
सादृश्यमेव कृतहस्ततया च दृष्टम्॥३४॥

† मया खलु नृशंसेन लोकद्वयमजानता।
स्त्रीरत्नं च विशेषेण शेषमेषोऽभिधास्यति॥

अयं हि पातकी विप्रो न वध्यो मनुरब्रवीत् ।
राष्ट्रादस्मात्तु निर्वास्यो विभवैरक्षतैः सह ॥

इति । एवं विज्ञापितेनापि राज्ञाऽविमृश्यकारिणा दुराग्रहग्रहिलान्तःकरणेन तान्येवाभरणानि गले बद्ध्वा सडिण्डिमं ताडयित्वा दक्षिणश्मशानं नीत्वा शूले भञ्जयत इत्यादिष्टम् । आदेशमिमं समाकर्ण्य राज्ञोऽविमृश्यकारिता दूषिता चारुदत्तेन । विचिन्त्य च मन्त्रिणामेव दुर्मतिर्निन्दिता या खलु राजानं लोकविद्विष्टं विदधाति सहस्रशश्च निरपराधान् प्राणैर्मोचयति* । ततश्च 'वयस्य रोहसेनस्य योगक्षेमं वहस्व' इत्युक्त्वा विसर्जितो विदूषकः । ततश्चाधिकरणिकवचनेन समादिष्टाश्चाण्डालाश्चारुदत्तस्य निग्रहाय । तेन च निरपराधेन चारुदत्तेनोद्दीपितामर्षेणोक्तम्—

विषसलिलतुलाग्निप्रार्थिते मे विचारे
क्रकचमिह शरीरे वीक्ष्य दातव्यमद्य ।
अथ रिपुवचनाद्वा ब्राह्मणं मां निहंसि
पतसि नरकमध्ये पुत्रपौत्रैः समेतः ॥

इति ।

( क्रमशः )

श्रीक्षितीशचन्द्रशर्मणः

---

* ईदृशे व्यवहाराग्नौ मन्त्रिभिः परिपातिताः ।
स्थाने खलु महीपाला गच्छन्ति कृपणां दशाम् ।
ईदृशैः श्वेतकाकीयै राज्ञः शासनदूषकैः,
अपापानां सहस्राणि हन्यन्ते च हतानि च ॥

# प्रामाणिक्येव याज्ञिकी पशुहिंसा

[ निबन्धकः-रा-मुत्तुकृष्णशास्त्री शिरोमणिः ]

अयि भोः प्रियपाठकाः, जागरूका भवत शास्त्रैकनिर्णेयपशुहिंसाप्रामाण्ये। आपातमधुरैरप्रकटितशास्त्रतत्त्वैः अनवगतपूर्वोत्तरतन्त्रन्यायसमुच्चारितैः अतिप्राक्तनवैदिकाचारदूरीकरणपरायणैः, *संस्कृतपत्रिकास्वपि दृश्यमानैः कैश्चिद्वाक्याभासैः समाकृष्टचित्ता न परित्यजत परमपावनवैदिकधर्मश्रद्धाम्। अतीतमासनिर्गतसंस्कृतसाहित्यपरिषदि "अपि नाम याज्ञिकी पशुहिंसा प्रामाणिको" इति पृष्ट्वा वस्तुतः स्वाभिमतार्थाननुकूलैरेव कैश्चित्प्रमाणैर्यज्ञीयपशुहिंसाया अप्रामाणिकतां केचित्प्रत्यपादयन्। लेखन्तं दृष्ट्वा न कस्यापि वैदिकवाक्यार्थविचारकुतुकस्य मनो न चित्रीयते, यतो न कुत्रापि शास्त्रे पण्डितमण्डलविवादे वा ईदृशो पूर्वपक्षस्यापि रीतिर्दृष्टचरी श्रुतचरी च। यानि प्रमाणानि प्राधान्येन सिद्धान्तिभिरवलम्ब्यन्ते, कथंचित्काश्चिदन्यादृशीं गतिं तेषां प्रकल्प्य स्वाभिमतानि प्रमाणान्युपन्यस्यन्ति पूर्वपक्षिण इत्यस्तिस्थितिः॥

वेदार्थाभिज्ञम्मन्यैस्तु कैश्चिद्वादिभिः वैधी हिंसा प्रामाणिकीति वदतां वेदतात्पर्यान्वेषणकुशलानां प्रमाणजातेषु नान्यतममप्यन्यथीकृतमित्यहो, कीदृशं कौशलं वेदार्थनिर्णये। युक्त्याभासैकविजृम्भितानीदृशान् वादान् नैव लक्षीकुर्युरभिज्ञाः, नतरां च तत्खण्डनाय प्रवर्तेरन्। तथापि उत्तरेऽदत्ते अप्रतिषिद्धमनुमतं भवतीति न्यायेन परेषामेव मतं श्लाघीय इति तदीययुक्त्याभासमोहितचित्ताः सम्यगनिर्धारितशास्त्रतात्पर्याश्च केचित्प्रियपाठका भ्राम्येयुरित्युत्तरदानाय यत्यते।

तत्रादौ यज्ञे पश्वादिप्राणिहिंसाविधायकानि कानिचित्तत्र तत्र श्रुतिस्मृती-

---

* अत्र नो वक्तव्यं प्रबन्धान्ते द्रष्टव्यम्। सं० सा० प० स०

तिहासपुराणसूत्रादिष्वनायासेनोपलभ्यमानानि प्रमाणानि प्रेक्षकाणां संदेह-निवृत्तये पुरस्कुर्मः ।

"अग्नीषोमीयं पशुमालभेत," "सप्तदशप्राजापत्यान् पशूनालभेत," "कपिञ्जलानालभेत" इत्यादिश्रुतिगतविषयः ।

"प्राणात्यये तथा श्राद्धे प्रोक्षिते द्विजकाम्यया ।
देवान् पितॄन् समभ्यर्च्य खादन्मांसं न दोषभाक् ॥"

(याज्ञवल्क्यस्मृतिः)

"यज्ञार्थं ब्राह्मणैर्वध्याः प्रशस्ता मृगपक्षिणः,"
"यथाविधि नियुक्तस्तु यो मांसं नात्ति मानवः ।
स प्रेत्य पशुतां याति संभवानेकविंशतिम् ॥"
"नियुक्तास्तत्र पशवस्तत्तदुद्दिश्य दैवतम् ।
उरगाः पक्षिणश्चैव यथाशास्त्रं प्रचोदिताः ॥
पशूनां त्रिशतं तत्र यूपेषु नियतं तदा ।
अश्वरत्नोत्तमं तस्य राज्ञो दशरथस्य च ॥
कौसल्या तं हयं तत्र परिचर्य समन्ततः ।
कृपाणैर्विशशासैनं त्रिभिः सा परया मुदा ॥"

(रामायणम् बाल० ४·३३)

"नात्मार्थं पाचयेदन्नं न वृथा घातयेत्पशून् ।
प्राणी वा यदि वाऽप्राणी संस्कारं यजुषाऽर्हति ॥"

(मोक्षधर्म-२४९ ५)

"अशुद्धमिति चेन्न शब्दात् ।" (ब्रह्मसूत्रे तृतीयोऽध्यायः)

किमेतान्यतिस्फुटानि प्रमाणवचनानि दुराग्रहपिशाचिकाविष्टचेतसां परेषां दृष्टिपथं नारोहन्ति ? आरोहन्ति वा साधुसंप्रदायानवगतदुरूहशास्त्रमर्यादानां न यथावदर्थप्रत्ययमुपजनयन्ति, उपजनयन्ति वा सनातनधर्मस्तम्भोन्मूलन-कुठारैः परप्रतारणैकपरायणैः कथंचिदाच्छादितानि वेति न ज्ञायते । यदि वस्तुत एते उत्सर्गापवादन्यायतत्त्वावगमेनाध्वरपशुहिंसाप्रामाण्ये विप्रति-

पद्यन्ते, ततोऽवलम्बन्तां भगवतो वासुदेवस्य निश्चितं मतं निखिलाम्नाय-सारभूतासु भगवद्गीतासु प्रकटीकृतम्। तत्र हि आदौ

"त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः।
यज्ञदानतपः कर्म न त्याज्यमिति चापरे॥"

इति पक्षद्वयमुपन्यस्यानन्तरम्—

"यज्ञो दानं तपः कर्म न त्याज्यं कार्यमेव तत्।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्॥
एतान्यपि तु कर्माणि संगन्त्यक्त्वा फलानि च।
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम्॥"

इत्युक्तम्। तस्मात् यज्ञीयपशुहिंसा प्रामाणिकीति मातृसहस्तेभ्योऽपि हिततमया भगवत्या श्रुत्या प्रतिपादिते कुतः कुदृष्टिवादस्य प्रसरः, इति नेतः परं किमपि प्रमाणमुपन्यसनीयं मन्ये।

अथ विधिनिषेधा एव 'इदं कर्तव्यम्' 'इदं न कर्तव्यम्' इति बोधयन्ति। मन्त्रार्थवादादयः पुनः केवलं स्मारयन्तः, स्तुवन्तश्चान्यत्र विहितं कर्म न स्वातन्त्र्येण कश्चिदर्थं विदधति, निषेधन्ति वेति, मीमांसकघण्टाघोषमविगणय्याविज्ञाय वा स्वाभिलषितसाधनाय परैरुदाहृतानि वचनानि, परामृशामः। यावद्यावद्विचारपथं नीयन्ते तावत्तावत्सिकताकूपानीव तानि शतशो विशीर्यन्ते। विदितवेदितव्याः सनातनधर्मप्रणयिनः पण्डिताः, पश्यत परैरुदाहृतान्मन्त्रान्समालोचयत च तदर्थान् कियदेते तदीयपक्षमुपोद्बलयन्तीति। दर्शपूर्णमासयोः वत्सापाकरणाय सचिह्नां शाखां प्रार्थयते, "यजमानस्य पशून्पाही"ति। किमिदं प्रार्थनं विधिविहितां पशुहिंसां निषेधति? ओमिति चेत् कथमिति त एवोपपादयन्तु। न हि धनं पाहीत्युक्ते भोजनादिकमपि मा कुर्वित्यर्थः प्रतीयते, परं त्ववश्यानपेक्षितं व्ययं मा कुरु, चोरादिभ्यः पालय, इत्यादिरर्थो गम्यते। तथा पशून् पाहीत्युक्त यदर्थं पशवस्सृष्टास्तस्मादपि यागादितो रक्षेति नार्थः, किंतु वृथा पशुघातकेभ्यो निषादादिभ्यो रोगादिभ्यश्च रक्षेत्येव तदर्थः। "यज्ञार्थं पशवस्सृष्टा" इति च स्मृतिः।

तथा "स्वधिते मैनं हिंसीः" इत्येदपि न तत्पक्षानुकूलम्। दीक्षितस्य वपनकाले, अध्वर्युः स्वधितिं प्रार्थयते, "स्वधिते मैनम" इत्यादिना। अस्य चार्थमेवमुपवर्णयन्ति भट्टभास्कराः—"हे स्वधिते, क्षुर एनं यजमानं मा हिंसीः, हिंसाप्रतिषेधो वप्तुरप्रमादाय" इति। नापितस्याप्रमादबोधनाय प्रवृत्तमिमं मन्त्रं पशुहिंसानिषेधपरमिति मुक्तशङ्कं भाषमाणानां कीदृशः प्रज्ञाविलोपः? पशुं त्रायेथामित्यपरमपि वचनं तैरुदाहृतं तत्पक्षसाधनाय। तदपि भाष्ये एवमवतारितं "स्वधितिं स्वरुं च जुह्वामङ्क्त्वा ताभ्यां पशुं समनक्ति" इति। त्रायेथां समञ्जनेन रक्षतेत्यर्थः। "शमसद्द्विपदे" इत्याद्यपराऽपि तैरुदाहृता ऋक् केवलं रुद्रप्रार्थनारूपा न विधिविहितां हिंसां दूषयितुमलम्। एवं तैरुदाहृतानि सर्वाण्यपि वेदवाक्यान्यविचारितरमणीयानि केवलं बालानां मोहनाय, न पण्डितानाम्। अत एव तैर्मन्त्राणामादिममन्तिमं मध्यमं वा भागं स्वपक्षानुकूलमित्युदाहरन्तोऽपि भ्रान्त्या अर्थाभिधाने मूकीभवन्ति।

मान्याः! पश्यतान्यस्मिन्नपि यजुर्मन्त्रे एतेषां दृढतमं मोहम्, "इमं मा हिंसीरेकशफं पशुं कनिक्रदं वाजिनं वाजिनेषु", इति। अयं हि मन्त्रः अश्वशिरस उपस्थाने विनियुज्यते। अस्यायमर्थः। इममेकशफं पशुं—अश्वमिति यावत्, मा हिंसीः—हे अग्ने? ज्वालया मा दह त्वदीयज्वालया व्यथां विनैवाश्वं परलोकं प्रापयेति भावः। अयमपि मन्त्रः अश्वहिंसा न प्रामाणिकीत्यत्रोदाह्रियमाणः "शब्दो नित्यः कृतकत्वात्", इत्यनुमानप्रयोग इव सुष्ठु शोभते। 'इमामूर्णायुमिति' मन्त्रोऽपि वृष्णिशिरस उपस्थाने विनियुक्तः स्वपक्षसाधनायोदाहृतः! 'तदिदमन्यत्राहितमन्यत्र निपतित-मकुशलस्येव धन्विनः शरनिकुरुम्बम्" ।

एव 'मघ्न्या इति गवां नामे"ति मोक्षधर्मपर्वस्थं श्लोकं किञ्चिद्वैपरीत्येनोदाहरन्तो यत्किञ्चिदसंबद्धं भाषन्ते। तत्र चास्य श्लोकस्योत्तरार्धमेवं दृश्यते 'महच्चकाराकुशलं वृथायोगां निहन्ति हि" इति अत्र वृथापददर्शनाद् यः कामाल्लोभाद्वा गां निहन्ति स एव निन्द्यते, न यज्ञपशुहन्ता श्रोत्रिय इति स्पष्टं ज्ञायते। भवतु वा तदभिमतमेवोत्तरार्ध कस्मिंश्चित्कोशे, किं नश्छिन्नं

मेतावता ? तथाहि 'न हिंस्यात्सर्वा भूतानी'' ति श्रौतमिव वाक्यमिदमपि सामान्यप्राप्तपशुहिंसानिषेधकमेव भवेत्, न विशिष्य विधिविहितपशुहिंसा-निषेधकमपि। अनयैव दिशा "किं ते कृण्वन्ति कीकटेषु गावः' इति वैदिक-मन्त्रः, "जानाति को वेदपुराणतत्व' मिति पद्मपुराणश्लोकः 'सर्वकर्मस्वहिंसा हि धर्मात्मा मनुरब्रवीत्। कामचारा हि हिंसन्ति बहिर्वेद्यां पशून् नराः'' इति मोक्षधर्मपर्वस्थश्लोकश्च तदभिमतसाधनत्वेनाभिमन्यमाना दूरतः प्रक्षेपणीयास्साधुभिः। मोक्षधर्मश्लोकस्थं बहिर्वेद्यामित्येकमेव पदं परेषां मुखपिधानायालम्। एवमेव "यदि यज्ञांश्च वृक्षांश्चे'' त्यत्र वृथापददर्शनादवैध-पशुहिंसानिन्दापरमिति विबुधा विजानन्तु।

"भो भोः प्रजापते राजन् पशून् पश्य वृथाऽध्वरे'' इत्यादिभागवत-श्लोका अपि वाक्यतात्पर्यनिर्णयैकसाधनपूर्वतन्त्रवासनाशून्यान्तःकरणैरेव कैश्चित् पण्डितंमन्यैर्यज्ञीयपशुहिंसानिषेधपरा इत्यभिमन्येरन्न शास्त्रार्थभिज्ञैः पण्डितैः। पूर्वतन्त्रे हि यत्र बहुभिर्वाक्यैरेकस्य वाक्यस्य निरोधस्तत्र बह्वनु-रोधेनैकं नेतव्यम्, नैकानुरोधेन बहूनीति निर्णीतं "भूयसां स्यात्सधर्मत्व'' मित्यत्र। तथाच यदि सकलश्रुतिस्मृतिवाक्यवृन्दैर्वस्तुत इमे श्लोका विरुन्धन्ति तदा यज्ञीयपशुहिंसाप्रमाणभूतवचसां बहुत्वादिम एवान्यथा नेया इति शास्त्र-मर्यादा। वस्तुतस्तु प्रकरणादिपरामर्शे क्रियमाणे नाल्पीयानपि विरोधः परिस्फुरति। तथाहि—अत्र कश्चिद्राजा बहुकालानुष्ठितवैदिककर्मापनीत-कल्मषः परश्रेयः अन्वेषमाणः कञ्चिद्योगिवरं पृच्छति।

"न जानामि महाभाग परं कर्मापविद्धधीः।
ब्रूहि मे विमलं ज्ञानं येन मुच्येत कर्मभिः''

इति। सोऽपि मुनिवरः क्षीणकल्मषोऽसौ योग्यस्तत्त्वज्ञानोपदेशायेति ज्ञात्वा कर्मफलेषु वैराग्यं तस्योत्पादयितुं कर्माणि निन्दति—"भो भोः प्रजा-पते राजन्नि''त्यादिना। अतोऽस्य वैराग्योत्पादन एव तात्पर्यं, न कर्मनिन्दा-यामपीति विभावनीयम्। उक्तं च शास्त्रतात्पर्यविद्भिः शबरस्वामिभिः "नहि निन्दा निन्द्यं निन्दितुं प्रवृत्ता अपि तु स्तुत्यं स्तोतुम्'' इति। दृश्यन्ते च

परःशतं वाक्यान्येवंरूपाणि श्रुतिषु स्मृतिषु काव्येषु च। "असन्तं वा एतद्यदच्छन्दोमम्" अश्रुजं हि रजतं यो बर्हिषि ददाति पुराऽस्य संवत्सराद्गृहे रुदन्ती"ति श्रुतिः।

आपस्तम्बादिमहर्षयोऽपि वेदविहितकर्मसु प्रवृत्तिसिध्यर्थमत्युत्तमामपि ब्रह्मसंस्थां बहुधा निन्दन्ति। नैतावता वस्तुतस्तन्निन्दायामेव तेषां तात्पर्यमिति कश्चिद्मूढः कल्पयेत्। तदाहुश्चतुरधिकशतप्रबन्धनिर्मातारस्सर्वतन्त्रस्वतन्त्रा मीमांसकमूर्धन्याश्च श्रीमदप्पय्यदीक्षिताः स्वकीये मध्वतन्त्रमुखमर्दनाख्ये कस्मिंश्चित् प्रकरणग्रन्थे—

"स्फारा तत्तत्पुराणागमवचनशतप्रापितायान्यनिन्दा,
तत्तद्भक्त्यादिसिद्धैस्तवनविरचने सा भवेद् द्वारमात्रम्।
कर्मानुष्ठापनार्थं किमु निरतिशयां ब्रह्मसंस्थादिनिन्दा-
मापस्तम्बादिवाक्ये न कलयसि ततः काऽस्य हानिस्तवेष्टा"

इति। एवं च प्रकृते वैराग्यसंपत्तये कर्मनिन्देति न किञ्चिदेतत्।

किंचानाघ्रातवेदगन्धा अपि निश्शंकमनादिपरंपरागतवेदानुपूर्वीमन्यथयन्तीत्यहो कीदृशी कालस्य कुटिलता। अन्तकाय गोधातमिति स्वकपोलकल्पितमेव किञ्चिद्वाक्यमुदाहृत्य, "तथाचोक्तं यजुषी"ति प्रलपन्ति। तैत्तिरीयब्राह्मणे तृतीयकाण्डे चतुर्थप्रपाठके "अन्तकाय श्वनित-" मित्येव दृश्यते न त्वन्तकाय गोघातमिति। नोपलभ्यते कुत्रापि वेदभागे तादृशमेकं वाक्यमिति नेदं तिरोहितमधीतयजुःशाखिनां विदुषाम्। परं दृश्यते "निर्ऋत्यै गोधातमिति पूर्वोक्त एव प्रपाठके। तदेवं पूर्वोत्तरसन्दर्भज्ञानशून्यैः यथावदर्थानभिज्ञैश्च तैः परमपावनश्रोत्रियाणामधिक्षेपाय केवलमन्यथीकृतमिति भाति। अथवा श्रूयतां कुत्रापि वेदभागे "अन्तकाय गोधातमिति" तथापि तेषां समीहितं न सिद्ध्येत्, गोधातपदेन वधपशुमारक एव श्रोत्रियो गृह्यते,. इत्यत्र प्रमाणानुपलम्भात्। "निर्ऋत्यै गोधातमि"त्यस्य तात्त्विकार्थस्तु—पापदेवतायै विषकण्टकादिभिर्गवां मारयितारमालभेतेति। सर्वोऽप्ययं प्रपाठकः पुरुषमेधविधायक इत्याहुर्भाष्यकाराः,—

"प्रपाठके चतुर्थे तु मेधः पुरुषपूर्वकः ।
उच्यते सूत्रकारेण सविस्पष्टमुदाहृतः ॥"

इत्याद्युपोद्घाते। एतत्प्रपाठकान्तर्गतमिदं वाक्य यज्ञीयप्राणिहिंसानिषेधायोदाहरद्भिरन्यदेवोपक्रान्तमन्यदेवोपसंहृतमिति नैते सर्वथा विस्रम्भणीयवाचो विदुषाम् ।

यदप्यजाश्वादिशब्दानां सकलश्रुतिस्मृतिप्रसिद्धार्थं हित्वा तदुदाहृतप्रमाणवचसामपि तात्पर्यमजानद्भिः किमप्यभ्यधायि, न तद्विशिष्योत्तरदानार्हमिति केवलं काश्चन श्रुतीरुदाहरिष्यामः। कथमिव नास्तस्मिन्पक्षे समाधीयमाने उपपद्येरन्निति विपश्चिदपश्चिमा एव विभावयन्तु ।

"पशुं विशास्ति" "लोहितं निरस्यति" "शकृत्संप्रविध्यति" "वपामुद्धरति" इति श्रुतिः। बीजैर्यागे क्रियमाणेऽग्नीषोमीयप्रकरणस्थानीमानि वाक्यानि कथं नाम नोपरुध्येरन। किंच "सूर्यं चक्षुर्गमयतात्" "वातं प्राणमन्ववसृजतात्" "दिशः श्रोत्रम्" "अन्तरिक्षमसु" इत्यादि पशुयागप्रकरणस्था अपराश्च श्रुतयः कथं नाम सामञ्जस्यमश्नुवीरन। सर्वमिदं गोमेधप्रकरणेऽप्यतिदेशेन प्राप्नुवद्गोशब्दस्य शब्द इत्यर्थाङ्गीकारे सुतरां बाध्येत। अश्वमेधप्रकरणे च "तार्येणाश्वं संज्ञपयन्ति। यज्ञो वै तार्यम्। यज्ञेनैवैनं समर्धयन्ति। यामेन साम्ना प्रस्तोतानूपतिष्ठते। यमलोकमेवैनं गमयति।" इति श्रूयते। तत्र "तार्यमिति घृताक्तस्य कम्बलस्य नामधेयम्। तेन संज्ञपयन्ति मारयन्ति" इत्यादि भाष्ये व्याख्यानम्। अश्वशब्दो यदि ज्ञानवाची तदा कथं तार्येण संज्ञपनम्, कथं च यमलोकप्राप्तिरित्यादि स्पष्टं निरूपणीयं परैः। ईदृशार्थाङ्गीकारे चानुपपद्यमानानां श्रुतीनां दिङ्मात्रमत्रोदाहृतम्। पर्यालोच्यमाने प्रायेण सर्वाण्यपि वेदवाक्यानि न संघटेरन्नित्यलम् ।

अन्ते उदाहृताया ब्राह्मणकथायाः 'अग्निः पशुरासी'दित्याद्यथर्वशिरोवचनस्य च, तन्मतानुकूल्यमस्मत्पक्षप्रातिकूल्यं च कथमिति त एवोपपादयन्त्विति नात्र किञ्चित्प्रस्तूयते। अवशिष्टानामपि द्वित्राणां प्रमाणानामुत्तरदानं पिष्टपेषणन्यायमावहेदित्युपेक्ष्यते ।

२

एतावता सत्यपि हिंसात्वे यज्ञीयपशुहिंसा न दोषावहेति सयुक्तिकं प्रादर्शि। परं तु "अशुद्धमिति चेन्न शब्दात्" इत्येतत्सूत्रस्थभगवद्रामानुजाचार्यभाष्य-पर्यालोचने सा हिंसैव न भवतीति ज्ञायते। एकैकेनापि सनातनधर्मप्रणयिना समयेऽस्मिन्नवश्यमिदमवलोकनीयमिति तद्भाष्यं तथैवात्र लिख्यते।

"शब्दात्—अग्नीषोमीयादेस्संज्ञपनस्य स्वर्गलोकप्राप्तिहेतुतया हिंसात्वा-भावशब्दात्। पशोर्हि संज्ञपननिमित्तां स्वर्गलोकप्राप्तिं वदन्तं शब्दमामनन्ति "हिरण्यशरीर ऊर्ध्वं स्वर्गं लोकमेति" इत्यादिकम्। अतिशयिताभ्युदयसाध-नीभूतव्यापारः अल्पदुःखदोऽपि न हिंसा, प्रत्युत रक्षणमेव। तथाच श्रुतिः 'न वा उ वैतन्म्रियसे न रिष्यसि। देवान् इदेपि पथिभिः सुगेभिः। यत्र यन्ति सुकृतो नापि दुष्कृतः। तत्र त्वा देवः सविता दधातु' इति। चिकित्सकं च तादात्विकाल्पदुःखकारणमपि रक्षकमेव वदन्ति। पूजयन्ति तज्ज्ञाः" इति। शान्तिपर्वण्यपि ग्राम्यानारण्यांश्च पशून् परिगणय्यान्तेऽभिहितम् "यज्ञं षपा-कृतं विश्वं प्राहुरुत्तमसंशितम्। एतस्य चाभ्यनुज्ञातं पूर्वैः पूर्वतरैस्तथा" इति।

सर्वथा कुमतीनामुत्तानदृशां च दुर्वादा दूरीकरणीया विद्वद्भिरिति प्रार्थ्यते।

इति शिवम्

[ संस्कृतपत्रिकास्वपि पशुविशसनप्रतिषेधकाः प्रबन्धाः प्रकाश्यन्त इति दुःखायन्ते लेखकमहाभागाः। कारणं पुनर्वयं न विद्मः। अपि न ज्ञायते महाभागैरमीभिर्यन्निरुक्तादिष्वपि वेदस्यार्थशून्यत्वं सयुक्तिकमुपपाद्य प्रमाणोपन्यासपुरःसरं निराकृतम्। अत एवोक्तमस्माभिः पूर्वपक्षरूपेणै-वायं प्रबन्धः संमुद्र्यते। न खलु प्रबन्धुः पूर्वपक्षत्वे तात्पर्यम्। तेन हि दृढतरसिद्धान्तरूपेणैव विरचितो मूलप्रबन्धः। अस्माभिरेव पितृपिता-महादिक्षुण्णे पथि वर्तमानैः शब्दप्रमाणकैस्तस्य पूर्वपक्षत्वं परिकल्पितम् इति। सम्पादकः ]।

# भट्टभवभूतिः

[ निबन्धकः—श्रीद्विजेन्द्रनाथगुहः]

वीररसाश्रितनाटकं महावीरचरितम्। तत्र रामराज्याभिषेकं यावत् तच्चरितं वर्णितम्।

महापुरुषसंरम्भो यत्र गम्भीरभीषणः।
प्रसन्नकर्कशा यत्र विपुलार्था च भारती ॥

किञ्च—

अप्राकृतेषु पात्रेषु यत्र वीरः स्थितो रसः।
भेदैः सूक्ष्मैरभिव्यक्तैः प्रत्याधारं विभज्यते ॥" (प्रस्तावनायाम्, २,७)

उत्तरचरितं पुनः करुणरसाश्रितं नाटकम्। नाटकमिदं कारुण्यमाधुर्यार्थ-गाम्भीर्यादिपरिपूर्णम्। उत्तरचरिते रामस्य पश्चिमं चरितं सीताविवासनं यावदुपनिबद्धम्। करुणरसात्मकं भवभूतेरुत्तरचरितं हि संस्कृतभाषायां सर्वोत्कृष्टं दृश्यकाव्यं भवति। शृङ्गाररसाश्रितनाटकमेव मालतीमाधवम्। अस्मिन् नाटके भवभूतिः स्वकीयमसाधारणकवित्वशक्तिं लिपिचातुर्यं च प्रकाशयामास।

कोविदस्य साहङ्कारोक्तिः—

"ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान् प्रति नैष यत्नः।
उत्पत्स्यते मम तु कोऽपि समानधर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥

*  *  *  *  *  *  *

अपि च—यद्वेदाध्ययनं तथोपनिषदां सांख्यस्य योगस्य च
ज्ञानं तत्कथनेन किं न हि ततः कश्चिद् गुणो नाटके।

यत् प्रौढित्वमुदारता च वचसां यच्चार्थतो गौरवं
तच्चेदस्ति ततस्तदेव गमकं पाण्डित्यवैदग्ध्ययोः ॥"
मालतीमाधवे (प्रस्तावनायाम्)

परन्तु नाटकरीतिर्न कस्मिन्नपि दृश्यते ।

मुख्यतो गौडीयरीतिमवलम्ब्य समुदयनाटकानि लिखितानि ।

उत्तरचरिते भवभूतेः—

"यं ब्रह्माणमियं देवी वाग्वश्येवानुवर्त्तते ।
उत्तरं रामचरितं तत्प्रणीतं प्रयुज्यते ॥" (१।२)

अन्यत्रापि च—

"सर्वथा व्यवहर्त्तव्ये कुतो ह्यवचनीयता ।
यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः ॥" (१।५)

इत्येषा कविताविषये तस्य स्पर्धां निर्भयत्वञ्च सर्वत्र घोषयति ।

उपजीव्यग्रन्थाः

वाल्मीकिरामायणस्य आदित आरभ्य युद्धकाण्डपर्यन्तं समवलम्ब्य विरचितं वीरचरितम्, रामायणस्य उत्तरभागं पद्मपुराणान्तर्गतपाताल-खण्डञ्च (१।६८ अध्यायाः) अवलम्ब्य संग्रथितम् उत्तरचरितम्, मालतीमाधवस्य कथावस्तु भवभूतेः समकालीनं स्वकल्पितञ्च घटना-विशेषमाश्रित्य सन्दृब्धमेव ।

रामायणे रघुकुलपती रामचन्द्रः स्वकीयवंशगौरवरक्षार्थं सीतां वने प्रेरयामास । भवभूते रामः पुनः प्रजारञ्जनार्थं सीताया वर्जनमकरोत् । रामप्रणिधिरत्र दुर्मुख इत्याख्यातः, रामायणे तु स भद्राभिधानः । इह भवभूतेः कल्पनाऽन्वर्था । द्वितीयेऽङ्के आत्रेयीवनदेवतयोः कथोपकथनं (आख्यानं वा) शम्बूकवृत्तान्तश्च, तृतीयेऽङ्के छायासीतया रामदर्शनं राम-विलपनञ्च, पञ्चमेऽङ्के रामात्मजलवस्य लक्ष्मणात्मसम्भवस्य चन्द्रकेतोश्च

युद्धवर्णनम्, अन्ते च सप्तमेऽङ्केऽपि लवणस्य कार्यकलापो रामेण सह सीतायाः पुनः सम्मेलनमिति सर्वमपि भवभूतिना सम्यगुद्भावितम्। विच्छेदान्त-रूपकोपवर्णनमालङ्कारिकविरुद्धम् इत्येव भवभूतिः सूरिः स्वीयं काव्यं सकल-सहृदयहृदयसंवादि विधातुं सप्तममङ्कमारभते। सप्तमोऽङ्कोऽत्र "गर्भाङ्कः" इत्यभिधेयः। उक्तञ्च साहित्यदर्पणे षष्ठपरिच्छेदे—

"अङ्कोदरप्रविष्टो यो रङ्गद्वारामुखादिमान।
अङ्कोऽपरः स 'गर्भाङ्कः' सबीजः फलवानपि॥"

भवभूतिमते महर्षिर्वशिष्ठः प्रथमः संहिताकार आसीत्, परस्तान-मन्वादयः। तथा च वीरचरितस्य चतुर्थेऽङ्के जामदग्न्यः—

* * * *

"प्राग्धर्मस्य भवन्त एव हि परं द्रष्टार आसन गुरो
लब्ध्वा ज्ञानमनेकधा प्रवचनैर्मन्वादयः प्राणयन॥" (४।२५)

तत्रैव वीरराघवटीकायाम्—हे गुरो वशिष्ठ, भवन्त एव धर्मस्या-लौकिकश्रेयःसाधनस्य वेदैकसमधिगम्यस्य वाऽर्थस्य प्राग् द्रष्टार आसन् प्रथमदर्शिनोऽभवन, मन्वादयः परम्, मनुप्रभृतयः।

---

# मेघनादवधम्

## अष्टादशः सर्गः

[ निबन्धकः—श्रीनित्यगोपालविद्याविनोदशर्म्मा ]

मायागुणैरदृश्यौ तौ पश्यन्तौ राक्षसस्त्रियः ।
मृगाक्षिस्पर्द्धिनीस्तीरे सरसश्चेलतुः सुखम् ॥१॥
कक्षे सुवर्णकलसस्तासामोष्ठे मधु स्मितम् ।
प्रभाते शतपत्राणि विकसन्ति जलाशये ॥२॥
वर्षावृता भीमकायाः शय्यां संत्यज्य कौसुमीम् ।
निर्यान्ति रथिकाः कुत्र कुत्रचिद्वा पदातयः ॥३॥
कैश्चिच्छत्राणि वाद्यन्ते दूरोत्सारितसुप्तिभिः ।
मण्ड्यन्ते वाजिनः कैश्चिद् मुद्गरो ध्रियते गजैः ॥४॥
कौषेयास्तरणं प्रान्तविलम्बिस्थूलमौक्तिकम् ।
पृष्ठे सुशोभते तेषां रथेऽस्त्राणि विभान्ति च ॥५॥
वाद्यं प्राभातिकं हृद्यं मन्दिरेषु यथा मधौ ।
वाद्यते दोलयात्रायां वङ्गेषु कृष्णपूजने ॥६॥
चिन्वती मालिनी पुष्पं सुगन्धि वर्त्म कुर्वती ।
विचित्रगन्धकुसुमैः कुतश्चित् संप्रतिष्ठते ॥७॥
ऊषेव सा प्रसूनाली रूपेणोज्ज्वल्य दिङ्मुखम् ।
धावति सौरभं दिव्यं किरन्ती परितो दिशः ॥८॥
अन्यत्र च दधिक्षीरदुग्धभारान् बहून् मुदा ।
वहन्ति भारिणोऽन्यत्र कल्लोलो वर्द्धते क्रमात् ॥९॥
विबुध्यन्ते पुरे पौरास्तेषां केचिदचक्षत ।
गच्छतोत्तिष्ठत क्षिप्रं प्राकारे युद्धमीक्षितुम् ॥१०॥

तूर्णं यदि न गच्छेम स्थानं नैव लभेमहि ।
रणसन्नद्धमालोक्य युवराजं सुखं भवेत् ॥११॥
सगर्वमाहुरेके च किं प्राचीरसमाश्रयैः ।
युवराजो मुहूर्त्तेन हन्ता रामं सहानुजम् ॥१२॥
सहेत कः शरांस्तस्य वह्निः शुष्कतृणं यथा ।
तथा दहेद् विपक्षान् स रावणिः शत्रुमर्दनः ॥१३॥
विभीषणं पराजित्य बद्ध्वा चानेष्यते सभाम् ।
नृपप्रसादभिक्षुन्तं गच्छताशु सदस्तलम् ॥१४॥ (विशेषकम्)
दृष्ट्वा श्रुत्वा च विविधं हसन् मनसि निर्भयः ।
विभीषणेन सौमित्रिराससाद निकुम्भिलाम् ॥१५॥
कुशासनं समध्यास्य विविक्ते कौषिकांशुकः ।
इन्द्रजिद् यजते यत्र देवमिष्टं स्रजाऽन्वितः ॥१६॥
हसन्त्यां दह्यते धूपो घृतगन्धिः समन्ततः ।
दीपा ज्वलन्ति पुष्पाणि भान्ति सौवर्णभाजने ॥१७॥
खड्गिखड्गकृतः कोषः कोषी च परिपूरितौ ।
तत्राऽऽस्तां जाह्नवीतोयैः सर्वपापप्रणाशकैः ॥१८॥
हेमघण्टा स्थिता पार्श्वे विचित्रा स्वर्णभाजने ।
उपहारा विराजन्ते भक्त्यानीता इतस्ततः ॥१९॥
रुद्धद्वारि गृहे चास्त एकाकी स तपोरतः ।
रथीन्द्रः शिवसङ्काशः कैलासगिरिशीर्षके ॥२०॥
क्षुधातुर इव व्याघ्रो गोष्ठगेहं महाभुजः ।
लक्ष्मणः प्राविशन्मायाप्रभावेणेष्टिमन्दिरम् ॥२१॥
कोषे दध्वान निस्त्रिंशो बाणस्तूणीरपट्टके ।
चङ्क्रम्यते स्म मन्दिरं वीरपादभरार्दितम् ॥२२॥
निमील्योन्मील्य नेत्रे स ऐक्षिष्ट चकितं पुरः ।
रावणिस्तिग्मकिरणं मध्याह्न इव भास्करम् ॥२३॥

अष्टाङ्ग्या प्रणमन् वीरो बद्धाञ्जलिपुटस्तथा ।
प्रोवाचायष्ट वह्ने त्वामद्य दासः शुभक्षणे ॥२४॥
तेन लङ्का विविक्तासीत्त्वत्पवित्रपदार्पणात् ।
किन्तु ब्रूहि कथं प्रागा मर्त्यलक्ष्मणरूपधृक् ॥२५॥
यदीह त्वं प्रसन्नोऽसि दासे लीलामय प्रभो ।
कोऽयं विलास इत्युक्त्वाऽनमन्नमितमस्तकम् ॥२६॥
नाहं विभावसुर्भद्र लक्ष्मणोऽहं रघूद्भवः ।
एवं प्रत्यब्रवीद्दर्पाद् वीरो दशरथात्मजः ॥२७॥
हन्तुं त्वां वीरशार्दूल गतिर्मे तव सन्निधौ ।
देहि युद्धं मया वीर कालं मा क्षिप रावणे ॥२८॥
निरीक्ष्य बलिनं वीरो लक्ष्मणं सहसा पथि ।
दृष्टसर्पो यथा भीतस्तथा भीतिवशं गतः ॥२९॥
हन्त पिण्डोऽगलत्तापात्तमोऽग्रसत भास्करम् ।
निदाघः शोषयामास सिन्धुं कलिरगान्नलम् ॥३०॥
प्राह सविस्मयं वीरस्तथ्यं तदाह यद्भवान् ।
ब्रवीतुच्छद्मना केन प्राविशद्राक्षसीं पुरीम् ॥३१॥
शतानि राक्षसाः शक्त्या यक्षराजभयङ्कराः ।
भीमास्त्रपाणयः सर्वे शश्वद्रक्षन्ति गोपुरम् ॥३२॥
प्राचीरमूर्ध्नि सूत्तुङ्गे चक्राकारेण सर्वतः ।
भ्रमन्त्ययुतयोद्धारः कथन्तान् भ्रान्तिमानयन् ॥३३॥
देवानां मानवानाञ्च विश्वेऽस्मिन् कोऽस्ति यो रणे ।
विमुखयेत् क्षपाटानां वृन्दं साक्षाद् यमोपमम् ॥३४॥
कथं प्रवञ्चयते देव दासोऽयं भवता नतः ।
सर्वभुक् कौतुकं किन्ते प्रियकौतुकमूर्द्धग ॥३५॥
निराकृतिरसौ देव लक्ष्मणो न भवेन्नरः ।
मन्दिरं प्राविशत् पश्य यद्द्यापि समावृतम् ॥३६॥

वरं देहि प्रभो लङ्कां निःशङ्कां करवाण्यहम् ।
हत्वा राघवमद्यैव किष्किन्ध्येशं हनान्यहम् ॥३७॥
बद्ध्वा विभीषणं राजद्रोहिणं कुलकज्जलम् ।
दास्ये राजपदे दुष्टं शृणु शृङ्गमहाध्वनिम् ॥३८॥
विलम्बिते मयि रक्षःसैन्याः स्युर्भग्नचेष्टिताः ।
अनुमन्यस्व मां क्षिप्रं विधास्ये गमनं युधे ॥३९॥
देवाकृतिः प्रतिप्राह लक्ष्मणोऽहं तवान्तकः ।
गतायुषं कृतबिलः किं न वेत्सि दशत्यहिः ॥४०॥
मदोन्मत्तो बली दैवाद्देवान् मूढावमन्यसे ।
एभिर्दिनैर्नश्यसि त्वमाहवे देवनोदितः ॥४१॥
उक्त्वैतावद् बली कोषाद् मुमोचासिं यमाकृतिम् ।
शुशुभे स वज्रकल्प आग्नेयः शत्रुदोषणि ॥४२॥
रावणिराह सत्यश्चेत् सौमित्रिस्त्वं महाभुज ।
रणस्पृहां महायुद्धे नूनं ते शमयाम्यहम् ॥४३॥
विरतो जातु संग्रामान्मेघनादः श्रुतस्त्वया ।
आतिथ्यं पूर्वमादत्स्व वीर मदतिथीश्वरात् ॥४४॥
रक्षोऽरिरपि वीरेन्द्र पूजनीयोऽतिथिर्मम ।
आयुधानि ग्रहीष्येऽहं प्रतीक्षस्व सदग्रणीः ॥४५॥
न हन्यात् कोऽपि निःशस्त्रमेषा वीरत्वपद्धतिः ।
नूनं ते विदिता क्षत्र किमन्यद् व्याहरामि ते ॥४६॥
मेघमन्द्रं प्रत्युवाच लक्ष्मणस्त्वां निहन्म्यहम् ।
किं मन्द मुञ्चति व्याघ्रं मृगाविज्जालसंयतम् ॥४७॥
रक्षोऽन्वयप्रसूतिस्त्वं केनाद्य रक्षितो भवेः ।
विद्धि क्षात्रविधिं जाल्म शत्रुर्वध्यो यतः कुतः ॥४८॥
अभिमन्युर्यथा दृष्टसप्तशूरस्तथेन्द्रजित् ।
तप्तायःपिण्डसङ्काशो रोषाद्वाग्वज्रमक्षिपत् ॥४९॥

धिक् क्षत्रियकुलग्लानिं लक्ष्मणं त्वामपत्रपम् ।
पापं नाम तव श्रुत्वा रोत्स्यन्ति क्षत्रियाः श्रुतीः ॥५०॥
वेश्मंतश्चौरवत् प्राप्तं त्वां निरस्यामि साम्प्रतम् ।
तार्क्ष्यनीडं प्रविष्टः किं निर्गच्छेद् भुजगस्तलः ॥५१॥
निमेषात् कोपमुद्यम्य भीमबाहुर्जघान सः ।
बलाच्च शिरसि सौमित्रेः सद्यः स न्यपतद् भुवि ॥५२॥
घोरं दध्वान दिव्यास्त्रं चकम्पे देवमन्दिरम् ।
भूकम्पादिव सुस्राव रक्तधारा सहस्रशः ॥५३॥
मेघनादोऽदधाद्दिव्यखड्गमुद्यन्तुमक्षमः ।
भूत्वाचकर्ष चापञ्च दोर्ष्ण्यस्थाल्लक्ष्मणस्य तत् ॥५४॥
चर्माचकर्ष कोपात् स वैकल्यं तद् गतं बलम् ।
तथाकर्षद् वृथा तूणं शृङ्गमद्रेर्यथा करी ॥५५॥
एवं वीरगणापीडो मेघनादो हतोद्यमः ।
जातो मायाप्रभावेण दुर्बोधेन बलीयसा ॥५६॥
धावमानं प्रतिद्वारं मान्यदर्शत् सुविस्मितः ।
शूलपाणिमग्निकल्पं पितृव्यं रणभैरवम् ॥५७॥
विषण्णः प्राह वीरेन्द्रस्तथ्यं बुद्धं मयाऽधुना ।
कथं लक्ष्मण आगच्छद् रक्षोरक्षितं पुरम् ॥५८॥
हन्त तातोचितं किन्ते कार्यं रावणसोदर ।
निकषागर्भजातस्य कुम्भकर्णानुजस्य वा ॥५९॥
प्रदर्शयसि पन्थानं चौरं स्ववेश्मनः कथम् ।
अध्यासयसि चण्डालं नृपासनमनुत्तमम् ॥६०॥
ममानिन्द्यो गुरुस्त्वं हि मुञ्च द्वारं व्रजाम्यहम् ।
अस्त्रागारं निहत्याद्य लक्ष्मणं कीर्त्तिमश्नवै ॥६१॥
विभीषणः प्रतिप्राह प्रार्थनेयं वृथैव ते ।
रामदासोऽस्म्यहं केन करिष्यामि विपक्षताम् ॥६२॥

रावणिः कातरः प्राह पितृव्य कथमब्रवीः ।
रामदास इदं वाक्यं श्रुत्वा लज्जाहतोऽस्म्यहम् ॥६३॥
शम्भुभाले विधात्रेन्दुः स्थापितः किं भुवस्तले ।
पतितः स रजोराशौ दृश्यते लुठितो जनैः ॥६४॥
रक्षोरथिन् कथं भ्रान्तं क्व ते जन्म महाकुले ।
को वा रामोऽधमो मर्त्यो न बुध्येय किमप्यहम् ॥६५॥
राजहंसोऽमलवारिविहारी पद्मकानने ।
किं चरेत् पङ्किलापेषु शैवालदलधामसु ॥६६॥
उपतिष्ठेत किं सिंहः शृगालं वीरकेशरिन् ।
दासोऽयमज्ञ इत्येतत् सर्वं ते विदितं सुधीः ॥६७॥
लक्ष्मणोऽयं लघुचेता नो चेद्वीर कथं वा माम् ।
आह्वयेत निरस्त्रं भो इदं किं वीरलक्षणम् ॥६८॥
लङ्कायां शिशवः श्रुत्वा हसिष्यन्ति न किं गुरो ।
मुञ्च वर्त्म निरीक्षेऽहं सौमित्रेर्विक्रमावधिम् ॥६९॥
स्वचक्षुर्भ्यामपश्यस्त्वं वीर्यं दासस्य संयुगे ।
देवदैत्यनरैः सार्द्धं कुतस्त्रस्यामि भिक्षुतः ॥७०॥
निकुम्भिलां प्रविवेश दम्भी धार्ष्ट्येन पामरः ।
रिपुं शास्स्यनुजानीहि दासं त्वच्चरणार्चकम् ॥७१॥
अहो धातर्दुष्टदैत्यो वनं भ्रमति नन्दनम् ।
कीटदष्टं प्रफुल्लाब्जमवमानं कथं सहे ॥७२॥
म्लानवक्त्रो ह्रिया वीरो मन्त्रानतफणः फणी ।
यथालक्ष्य कुमारं स प्रत्युवाच सयुक्तिकम् ॥७३॥
वत्साहं दोषमुक्तोऽस्मि धिक् करोषि वृथैव माम् ।
स्वकर्मदोषदहनैर्लङ्कां दहति ते पिता ॥७४॥
द्रुह्यन्ति पापिने देवा लङ्कैषा पापपूरिता ।
भूर्मज्जति कालतोये कल्पान्तसमये यथा ॥७५॥

तेनाहं राघवपदं शरणं कृतवाञ्छुभम् ।
परपापेन कस्तात जगत्यस्मिन् निनङ्क्षति ॥७६॥
रुरोप वासवत्रासो निशीथेऽम्बुदसन्निभः ।
प्रत्यवादीच्च गम्भीरं वज्रनिर्घोषभीषणम् ॥७७॥
रक्षोराजानुज ख्यातो भुवि त्वं धर्मसेवकः ।
ब्रूहि तात कथं ज्येष्ठं कुलं ज्ञातींस्तथाऽत्यजः ॥७८॥
परश्चेत् सगुणस्तात स्वजनो यदि निर्गुणः ।
सर्वथा स्वजनः श्लाघ्यो निर्गुणोऽपि परः परः ॥७९॥
शास्त्रस्थितिरियं लोके लङ्घिताऽभूत् कथं त्वया ।
यद् वा नीचसहचरो नीचत्वमेव गच्छति ॥८०॥
इतश्चैतन्यमासाद्य सौमित्रिर्मायिग्राहतः ।
समाकृष्य धनुर्वीरो विव्याधेन्द्रजितं शरैः ॥८१॥
असृग्धारोक्षितं वक्त्रं शोणितार्द्रा च मेदिनी ।
बभूवास्य तथा देहः सपत्राकृत आशुगैः ॥८२॥
शङ्खघण्टादिकं यज्ञपात्राणि च रुषान्वितः ।
वीरश्चिक्षेप सर्वाणि हन्तुं तमाततायिनम् ॥८३॥
अभिमन्युं यथा सप्त रथिकाः स तथायुधैः ।
भग्नखड्गेन चक्रेण दण्डेन च रिपुं न्यहन् ॥८४॥
निराकरोत्तु तत् सर्वं माया दूरं यथा प्रसूः ।
मशकान् सुप्ततनयात् करपद्मविधूननैः ॥८५॥
अभ्यधावल्लक्ष्मणं स रावणिः क्रोधमूर्च्छितः ।
गर्जन् भीमं यथा सिंहः पुरस्थितप्रहारकम् ॥८६॥
मायामोहितवीरेन्द्रो ददर्श परितो यमान् ।
आरूढभीममहिषाञ्छूलपाणींश्च शूलिनम् ॥८७॥
शङ्खचक्रगदापद्मधरं वीक्ष्य चतुर्भुजम् ।
युयुत्सु देववृन्दश्च विमाने चकितोऽभवत् ॥८८॥ (युग्मम्)

सविषादं विनिश्वस्य तस्थौ वीरो विधुर्यथा ।
राहुग्रस्तकलः किं वा पाशबद्धो मृगाधिपः ॥८९॥
त्यक्त्वा चापं महातेजा निष्कोषमकरोदसिम् ।
लक्ष्मणस्तेन च रिपोर्नेत्रे दग्धे बभूवतुः ॥९०॥
हन्तेन्द्रजिद् बली खड्गघातेन शोणिताप्लुतः ।
चुचुम्ब पृथिवीं सद्यश्चकम्पे च वसुन्धरा ॥९१॥
जगर्ज भैरवं सिन्धुः पूरितं विश्वमारवैः ।
स्वर्गे मर्त्त्ये च पाताले जीवाः सर्वे भयं गताः ॥९२॥
हैमसिंहासनस्थस्य रक्षोराजस्य शीर्षकम् ।
पपात सहसा भूमौ रथचूडेव खण्डिता ॥९३॥
दक्षिणाक्षि प्रमीलाया ननर्त्ताहो सती हठात् ।
विस्मृतात्मा ललाटस्थसिन्दूरबिन्दुमक्षिपत् ॥९४॥
मूर्च्छितं सहसा देव्या मन्दोदर्या महार्त्तया ।
शिशुनाक्रन्दितं मातृक्रोडे निद्राहृतात्मना ॥९५॥
यथा वा गोपशिशुभिर्गते श्याममणौ व्रजात् ।
वियोगतिमिराच्छन्नान्मधुपुर्यां व्यरुद्यत ॥९६॥ (युग्मम्)
युद्धेऽधर्म्ये निपतितो मेघनादः सुरं द्विषन् ।
क्रव्यादकुलसर्वस्व आह लक्ष्मणमप्रियम् ॥९७॥
वीरसंघकुलग्लानिं सौमित्रिं धिक् सहस्रधा ।
रावणस्याऽऽत्मजः किं भो बिभेति रविनन्दनात् ॥९८॥
पामराहं मृतस्तेऽस्त्राघातेनान्याय्यसंगरे ।
खेदोऽयं स्थास्यति स्वान्ते यावच्चन्द्रदिवाकरौ ॥९९॥
जितदैत्यकुलं शक्रं विजित्य समरेऽन्वहम् ।
हतस्त्वया केन घातः पापेन बोद्धुमक्षमः ॥१००॥
किमन्यद् वच्मि पाप त्वां वार्त्तेयं प्राप्स्यते यदा ।
रक्षोनाथेन केन त्वं त्रास्यसे समरेऽधम ॥१०१॥

प्रवेक्ष्यसि यदि तलं सागरागाधपाथसाम् ।
औवानल-प्रभो राजरोषस्त्वां तत्र धक्ष्यति ॥१०२॥
निबिडं काननञ्चेत्त्वमाश्रयिष्यसि कातरः ।
नूनं दावोल्बणो रोषस्तस्य त्वां भस्म नेष्यति ॥१०३॥
नापिधास्यति रात्रिस्त्वां मूढ देवा न दानवाः ।
शक्ष्यन्ति रक्षितुं क्रुद्धाद्रावणाद्धतपुत्रकात् ॥१०४॥
को वा भङ्क्ष्यति विश्वे ते कलङ्कं घोरपापजम् ।
पातितं त्वं महापङ्के तथा रघुकुलं महत् ॥१०५॥
इत्युक्त्वा विषण्णः स स्मरन् पित्रोः पदाम्बुजम् ।
प्रमीलाननपूर्णेन्दुमभूद्भातीव विक्लवः ॥१०६॥
प्रेमाश्रूणि पङ्कजाक्ष्णोर्गलित्वाऽनर्गलं शतम् ।
सिषिचुर्धरणीं कृत्स्नां हेमन्तसौ हिमानि वा ॥१०७॥
निर्वाणार्चिरिवाप्यित्तं सूर्यो वा शान्तरश्मिकः ।
पतितः सोऽभवत्तत्र भूपृष्ठेऽसुविवर्जितः ॥१०८॥
विभीषणोऽश्रुनयनः शुशोच तं सुदुःखितः ।
विस्मारयति शोकार्तिर्वैरं स्वजनसम्भवा ॥१०९॥
सुपट्टशयनस्वापिन् केन दुःखेन भूतले ।
शेषेऽद्य त्वं महाबाहो रक्षोवंशसुधाकर ॥११०॥
शयानं धूलिशय्यायां वीक्ष्य त्वां राजनन्दन ।
किं नु वक्ष्यति ते तातस्त्रैलोक्यविजयी नृपः ॥१११॥
मन्दोदरी च ते माता रक्षोनृपकुलेन्दिरा ।
जितशारदेन्दुवक्त्रा पत्नी वा किं वदिष्यति ॥११२॥
जितदेवसुतारूपाः किङ्कर्यस्ते दितेः सुताः ।
वृद्धा पितामही साध्वी निकषा किं प्रवक्ष्यति ॥११३॥
रक्षांसि किं वदिष्यन्ति त्वं येषां कुलभूषणम् ।
तातोत्तिष्ठ खुल्लतातस्तव शब्दापयाम्यहम् ॥११४॥

श्रृणोषि न कथं वत्स मह्यं क्रुद्धोऽसि पुत्रक ।
द्वारं मुञ्चामि सद्यस्ते गच्छाऽऽशु शस्त्रमन्दिरम् ॥११५॥
निशाचरसरःपद्म लङ्कागौरवभास्कर ।
कलङ्कं मोचयाद्य त्वं मध्याह्नेऽर्कस्तिरोऽस्ति किम् ॥११६॥
यशस्विन् कथमद्य त्वं शयानोऽसि महीतले ।
श्रृणु श्रृंङ्गध्वान दन्तिवरास्त्वामाह्वयन्ति च ॥११७॥
हेषन्ते भैरवं वाहाः संनह्यन्ति च सैनिकाः ।
दुर्द्धर्षो रुन्धते द्वारं नगरस्य निरस्य तान् ॥११८॥ (युग्मकम् )
रक्षःकुलोच्चसम्मानं रक्ष रक्षोनृपात्मज ।
विललाप भृशं दीन एवं बली विभीषणः ॥११९॥
मित्रं निरीक्ष्य शोकार्त्तमूचे सौमित्रिकेशरी ।
विश्ववर्य त्यज खेदं किं विलापेन लभ्यते ॥१२०॥
विधिना नोदितोऽहं ते न्यहनं पूर्वजात्मजम् ।
दोषगन्धो न तेऽस्त्यत्र शिबिरं गच्छ साम्प्रतम् ॥१२१॥
तत्र चिन्ताकुलश्चिन्तामणिरस्ति विनाऽनुजम् ।
आकर्णय शुभातोद्यं ध्वनति त्रिदशालये ॥१२२॥
श्रुतो विभीषणेनासौ वादित्रध्वनिरद्भुतः ।
सुरालयाद् यथा स्वप्नाविष्टवत् सुमनोहरः ॥१२३॥
निर्जग्मतुरुभौ तूर्णं शार्दूल्याः सन्निधौ यथा ।
हतव्याघ्रशिशुर्व्याधस्त्वरितः प्रपलायते ॥१२४॥
यद्वा द्रौणिर्यथा रात्रौ हत्वा पञ्च शिशून् द्रुतम् ।
निर्ययौ शिबिरात् पाण्डुसुतानां राजतुष्टये ॥१२५॥
अदृश्यौ चेलतुर्मायाप्रसादेन यतः स्थितः ।
निवेशे मैथिलीकान्तो हितार्थी भ्रातृमित्रयोः ॥१२६॥
बद्धाञ्जलिः प्रणम्याङ्घ्रिपद्मे सौमित्रिरब्रवीत् ।
"किङ्करोऽयं जयी जातो हत्वेन्द्रजितमाहवे ॥१२७॥

चुम्बित्वा मस्तकं रामः परिष्वज्य च लक्ष्मणम् ।
बाष्परुद्धस्वरं प्राह हर्षाश्रुप्लाविताननः ॥१२८॥
त्वद्बाहुविक्रमेणाद्यालप्स्येऽहं जानकीं पुनः ।
धन्यस्त्वं वीरगर्वोऽसि रत्नगर्भा प्रसूस्तव ॥१२९॥
नूनं दशरथः श्लाघ्यो यस्त्वां सूनुमजीजनत् ।
पूर्वजोऽहं चिरं धन्यो धन्याऽयोध्या च जन्मभूः ॥१३०॥
आकल्पं ते यशः स्थायि व्याप्य भूमिमथो दिवम् ।
नृभ्योऽबलेभ्यो दातृ त्वं शक्तो दैवं समर्चय ॥१३१॥
विभीषणं स सम्बोध्य मित्ररत्नं मधुस्वरम् ।
प्राह मित्रालभेऽहं त्वां सुक्षणे रक्षसां पुरे ॥१३२॥
इक्ष्वाकुकुलकल्याणकुम्भ क्रीतं रघोः कुलम् ।
त्वया निजगुणैर्मित्र यथा मित्रोऽन्वयेश्वरः ॥१३३॥
सर्वे गच्छत देवीं तां यक्ष्यामहे शुभङ्करीम् ।
यत्कृपापाङ्गपातेन कृतार्थाः स्मो वयं रणे ॥१३४॥

अमरा ववृषुः कुसुमानि दिवः
ककुभो जयमङ्गलनादवृताः ।
शिबिरं परितः पृतना ककृशुः
पुरवासिजनाश्चकिता अभवन् ॥१३५॥

इति श्रीमेघनादवधे महाकाव्ये इन्द्रजिद्वधो नाम
अष्टादशः सर्गः ।

# संस्कृतसाहित्यपरिषत्

•इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| February, 1936. | १८५७-शकीये माघे<br>१८श-वर्षस्य १०म-संख्या | Vol. XVIII No. 10 |

## लक्ष्य-पञ्चकम्

[निबन्धकः—म० म० श्रीदुर्गाप्रसादद्विवेदः]

एकं ब्रह्म न तच्च देव इव है नानाकृति स्मर्यते
देवस्त्वेकविधोऽपि भूमकलया नानावृतिर्वर्ण्यते ।
एवं तत्त्वत एक एव महिमोपासाकृते व्यस्यते
तस्माद् वेदपुराणमार्मिकदृशा भेदाङ्कुरश्छिद्यते ॥१॥

मेघैर्मेदुरमम्बरं वनभुवः श्यामास्तमालद्रुमै-
र्नक्तं भीरुरयं त्वमेव तदिमान् लक्ष्मीगृहान् प्रापय ।
इत्थं बोधनिदेशतश्चलितयोः प्रत्यध्वकुञ्जद्रुमं
लक्ष्मीकेशवयोर्जयन्ति यमुनाकूले रहः संविदः ॥२॥

वीरः कोऽपि स एव यस्य महसि ब्राह्मी श्रिया श्लाघ्यते
शृङ्गारप्रसरेति भारतधरा व्यत्यासतां लम्भिता ।

प्रत्याशां धनधान्यधर्मवपुषि म्लानाय मानागमे
किं श्रेयः कविकर्मणः कपितया कान्तारकान्तारसान् ॥३॥
लक्ष्यं व्याकरणागमस्य परिपन्न्यायस्य तर्कश्रियः
किं वाच्यं व्यवहारपद्धतिकृते यन्मूलमुन्मीलितम् ।
तत्साहित्यमनर्गलेन विधिनाऽकाण्डेऽपि शृङ्गारितं
पाठ्यध्वंसकृतेऽजनीति कृतिनामुद्दामवाग्विस्तरैः ॥४॥
पाराशर्यस्य शास्त्रे स्फुरदुपनिषदि ब्रह्म जिज्ञास्यमाहु-
स्तत्प्राचां ज्ञानदृष्ट्या प्रकृतिविमलया सच्चिदानन्दरूपम् ।
नानातर्कोऽपतर्कैः प्रतिपदविषमा गूढतत्त्वप्रमेया
यत्र ब्रह्माण्डसृष्टिर्गगनकुसुमया सन्निभा भाति विष्वक् ॥५॥ इति

---

# नव्यन्यायविवरणम्

[ निबन्धकः—श्रीविधुभूषण-व्याकरणतीर्थः ]

अज्ञानतिमिरोच्छेदानन्ददानाधिनायकः ।
सर्वत्र ख्यातमाहात्म्यस्तारानाथोऽस्तु नाथकः ॥

विदितमेवैतत् सुरभारतीप्रेयसां विदुषाम् यदष्टादशसु विद्यास्थानेषु परमाभ्यर्हितं निःश्रेयसाधिगमसाधनं पदार्थतत्त्वनिरूपणपरं जगति जगत्प्राणः पवमान इव सकलशास्त्राणि समाश्रित्य प्रवर्त्तमानं तर्कशास्त्रापरनामकं नव्य-न्यायशास्त्रं नितरामभिराजतेतराम् ।

श्रवणादनु पश्चादीक्षा अन्वीक्षा, "श्रोतव्यो मन्तव्य" इत्यादिश्रुतिप्रतिपाद्यं मननमिति यावत् । तन्निर्वाहकतया "आन्वीक्षिकी"त्यपरनामकस्य अस्य प्राधान्यं पुनरन्यैरपि शास्त्रकारैः शिरसा उह्यते इति स्पष्टमेव प्रमाणं

तान्त्रिकाणाम् "आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिश्च शाश्वती"त्यादिप्रस्ताव-प्रक्रमे प्रथममन्वाख्यानादेव ।

विपक्षमतखण्डनेन सर्वथा स्तुतमाहात्म्यमिदमपूर्वालोकसम्पातेनाज्ञानान्धकारं निरस्यत् प्रदीप इव सर्वशास्त्राणां, कर्णधारीभूतं दुस्तरशास्त्रसागरं तितीर्षूणां धरातले किमप्यनिर्वचनीयरत्नस्वरूपमिति निसर्गादेव कुतूहलं प्रेरयति जनानां चेतांसि तावदस्य प्रणेतृस्वरूपप्रयोजनप्रभृतिविषयक-जिज्ञासासु सततमेव ।

विद्वत्स्वपि शास्त्रेऽस्मिन्नतुलनपाण्डित्यमण्डितेषु विपक्षकरिकुञ्जरकेशरिषु तार्किकवर्गेषु, प्रचलितेऽप्यस्याध्ययनाध्यापने प्राधान्येन, नितरामेव दुरदृष्टतया विषयेऽस्मिन् तादृशी न दृश्यते समालोचना, यया खलु सर्वैरेव ज्ञातुं शक्यन्ते सारल्येन याथार्थ्येन च विषया ह्येते बुभुत्सुभिः । प्रबन्धेऽस्मिन् विषयानेतानवलम्ब्य समालोच्यते संक्षेपेण, तत्र वर्त्तते चेद् भ्रमः, सुधीभिः कृपाकटाक्षसम्पातेन विज्ञापनीयोऽयमिति ।

तत्र सञ्जाते खलु वितर्के परिलक्ष्यते यद् गौतमीय-न्यायदर्शन-काणाद-वैशेषिकदर्शनयोः संमिश्रणेन भागीरथीयमुनासङ्गमेन प्रयाग इव ततोऽप्यधिक-मुत्कर्षान्वितमुत्पन्नमिदं प्रथमतः परस्परमास्तिकदर्शनेषु विवदमानेषु, सूत्ररूपयोर्निरुक्तदर्शनयोर्यथार्थमर्थमजानद्भिर्योगाचारचार्वाकादिनास्तिकवादि-दिग्गजैराक्रम्याक्रम्य उन्मूल्यमाने ते ।ररक्षिषया विपक्ष-फणिसमुद्यतशिरो-विनतिकारि नव्यन्यायशास्त्रं नाम ।

प्रथमे तावदविज्ञातयथार्थमाहात्म्यस्यास्य सम्यक् प्रचाराभावेऽपि शिवा-दित्यस्य 'सप्तपदार्थी'ति नामधेये पुस्तके तथोदयनाचार्यस्य 'लक्षणावली'षु च किञ्चित् स्वरूपप्रकाशेन लब्धसमादरमिदम् तदापि वैशेषिकसमाख्य-यैव प्रसिद्धमासीदिति केषाञ्चिन्मतम् ।

ततः खलु नैयायिककुलगुरुणा जगद्वन्दितपदारविन्देन महामहोपाध्यायो-पाधिकेन श्रीमता गङ्गेशोपाध्यायेन सकलसंशयनिराकरणाभिलाषाणां चिन्तामणिमिव तत्त्वचिन्तामणिं नाम ग्रन्थं प्रणीय वादिकुलं निराकृत्य

विपुलविभवमिदमकारि । तदवधि गङ्गेशप्रसादेन नव्यन्यायरसपीयूष-धारास्वादनेन धन्याः खलु विद्वांसः ।

चिन्तामणेस्तस्य च वर्द्धमान-पक्षधर-प्रगल्भ-वाचस्पति-यज्ञपति-वासुदेव-सार्वभौमभट्टाचार्य--रघुनाथशिरोमणि--मथुरानाथ- भवानन्दादिभिर्वाग्देवतावतारैर्जगद्विदितपाण्डित्यैर्नानाव्याख्यानानि निरमायिषत । तान्यपि जगदीश-गदाधरादिभिः प्रकामं परिवर्द्धितानि । तत्र हि सगरवंशोद्धारणार्थमासादितभूमण्डला जाह्नवीव जगति गङ्गेशपदामृतधाराऽपि रघुनाथहृदय-क्षेत्रमवाप्यैव लब्धप्रतिष्ठा नव्यन्यायमाधुरी । तत्रापि रघुनाथरचिता दीधितिर्नाम विख्याता टीका प्रायो मूलवदेव प्रामाणिकतया परिगृह्यते । एवञ्च साम्प्रतं नव्यन्यायशब्दसमुच्चारणेन गङ्गेशस्य तत्त्वचिन्तामणिस्तस्य रघुनाथदीधितिर्मथुरानाथस्य च "रहस्यं" नाम टीका, दीधितेश्च जागदीशी गादाधरी चेति समुज्ज्वलं व्याख्यायुगलं प्रतिभाति नव्यन्यायशब्दप्रतिपाद्यं लोकसमाजे । एवं खलु बहुभिर्हेतुभिर्वङ्गदेश एव नव्यन्यायराजस्य प्रधानं राजस्थानमित्यपि व्यपदिश्यते ।

वस्तुतस्तु मिथिलाऽपि न स्तोकं समृद्धिशालिनी नव्यन्यायेन । गङ्गेशात्मजवर्द्धमानोपाध्यायेन तदात्मजेन यज्ञपतिना च पितृपितामहयोः केषाञ्चिन्निबन्धानां व्याख्यानं व्यरचि । ततो महामतिना प्रसिद्धयशसा पक्षधरमिश्रेण चिन्तामणे"रालोको" नाम स्वरूपप्रकाशकालोकटीका निरमायि । ततश्च आलोकटीकोपरि महेशठाकुराख्येण केनचिद् विचार-कुशलेन "दर्पण"नाम्नी विरचिता कापि सुनिर्मला टीका । इत्थं वंशानुक्रमेण चिन्तामणेर्बहुधा व्याख्यां निर्माय मैथिलैः समृद्धिमयं कृतं नव्यन्यायशास्त्रम् । एवं वङ्गीयानां मैथिलानाञ्च नव्यन्यायपाण्डित्यमालोकयतां विभिन्नप्रदेशीया-नामपि "श्रेयान् खलु चिन्तामणिरत्नलाभ" इति बुद्धिरजायत चेतःसु । तेन च महाराष्ट्रीयेण सार्थकनाम्ना विद्वद्वरेण धर्मराजाध्वरीन्द्राख्येण सम-पादि चूडामणिरिव तर्कचूडामणिनामधेया नव्यन्यायस्य कापि टीका । इत्थं सञ्जातश्च तदा सर्वत्र शास्त्रविग्रहः पण्डितानां नव्यन्यायमाश्रित्य

प्रधानतः। एवं वादिवारणपञ्चास्यैः सिद्धसारस्वतैर्नैयायिकवर्यैः कालीशङ्कर-गोलोकनाथ-चन्द्रनारायण-प्रभृतिभिर्वङ्गीयैरेतच्छास्त्रस्य फक्किकोत्तरादि-भावेनात्युपादेयक्रोडपत्रविरचनया सुमहद् गौरवं प्रादुष्कृतमिति भगवदि-च्छया साम्प्रतं वङ्गीयानामेव विशेषेण करकवलितमिदमपूर्वरत्नम्।

समासादितं मधुरवस्तुजातं केवलं स्वयमेवोपभुञ्जानो न सम्यगानन्द-मनुभवति मानव" इति नव्यन्यायमपि गङ्गेशविरचितं नितरामेव दुरधि-गमं समीक्ष्य साधारणानपि परमानन्दमुपभोजयितुमस्य दार्शनिकप्रधानैः सूक्ष्मधीभिः सुधीभिः क्रमेण तर्कसंग्रह-भाषापरिच्छेद-पदार्थदीपिका-प्रभृतीनगणितान् ग्रन्थान् प्रणीय साधितः खलु महानुपकारः शास्त्ररस-पिपासूनाम्, सृष्टश्च नव्यन्यायाविर्भावेण नवयुगावतारो दार्शनिकजगति।

साम्प्रतं खलु पदार्थनिचयप्रकाशकनव्यन्यायरवेरालोकसम्पातेन व्याकरणालङ्कारसांख्यपातञ्जल-मीमांसा-वेदान्तप्रमुखाणि सर्वाण्येव शास्त्राणि वस्तुतो निरूप्यन्ते। किं बहुना गौतमीयन्यायदर्शनं कणाद-वैशेषिकदर्शनञ्चापि नव्यन्यायप्रभया समधिकमौज्ज्वल्यमावहति। अन-धीतनव्यन्यायः पुनरधीतविविधशास्त्रोऽपि प्रकृत्या "पण्डित" इति न विवेच्यते। दिवाकरकिरणावलिरिव पदार्थतत्त्वनिरूपणे चक्षुष्मतां नव्य-न्याय इत्यस्योत्पत्तिवार्त्तासंक्षेपः।

साम्प्रतं किमयं नव्यन्याय इति समालोच्यते। अत्रापि विद्यते विपश्चितां मतभेदः। तथाहि केचित् कथयन्ति "चिन्तामणिरेव प्रथम-ग्रन्थो नव्यन्यायस्य। शिवादित्यस्य सप्तपदार्थी, आचार्योदयनस्य लक्षणा-वली, विश्वनाथस्य मुक्तावली, श्रीमदन्नंभट्टस्य तर्कसंग्रहश्च न नव्यन्यायः। यतः केवलं सप्तपदार्थवादित्वमेव न नव्यन्यायत्वप्रयोजकम्। तथा सति अधिकरणसिद्धान्तबलेन वैशेषिकेऽपि फलतः सप्तपदार्थवादसत्त्वात् तस्यापि नव्यन्यायत्वापत्तेः।"

अपरे तु—"शिवादित्योदयनाचार्ययोः सप्तपदार्थीलक्षणावलीत्युभयन्तु न नव्यन्यायः। अपि तु केवलं चिन्तामणिरेव सः। मुक्तावल्यादिषु च

नव्यप्राचीनयोः संमिश्रणम्। तथाचानुमित्यादिषु नव्यानां सूक्ष्मत्वग्रहणेन नव्यत्वम्, गोतमीयप्रमाणचतुष्टयग्रहाच्च पुनः प्राचीनत्व"मित्याहुः।

अन्ये च—यत्र केवलं प्रमाणमेव प्राधान्येनालोचितं न च प्रमेयविषयिणी तथालोचना, केवलं तर्कशास्त्रमेव यत्—अलक्ष्यश्च यस्य मोक्षोपाय-जगत्कारणादिनिर्णयनिरूपणं तदेव नव्यन्यायशास्त्रम्। बौद्धन्यायात् पुनः प्राप्तजन्मा सः। दृश्यते च यतो धर्मकीर्त्तिरचितन्यायबिन्दुपुस्तकमेव बौद्धन्यायस्य गङ्गेशात् प्राक् प्रमाणमात्रपर्यालोचनकारीति वदन्ति।

वयं पुनरनुपश्यामः—शिवादित्यविरचितसप्तपदार्थीपुस्तकसमये प्रकटितं स्वरूपं नव्यन्यायस्य। उत्पत्तिरस्य पुनः स्वरूपतो न ज्ञायते। अपि च तद्ग्रन्थस्य सप्तपदार्थीति सार्थकं नामैव नव्यन्यायत्वं तस्य प्रमाणयति। षट्पदार्थवादित्वं कणादस्य पुराणादिषु प्राचीनशास्त्रेषु परिलक्ष्यते, तथाहि कणादस्य षट्पदार्थवादित्वे सांख्यानामुक्तिः—"न वयं षट्पदार्थवादिनो वैशेषिकादिवत्" इति। शाङ्करभाष्यमपि वेदान्तदर्शनस्य षट्पदार्थवादित्वं प्रमाणीकरोति, तथाच वेदान्तदर्शनस्य द्वितीयाध्याये द्वितीयपादे सप्तदशसूत्रे—"अपि च वैशेषिकास्तन्त्रार्थभूतान् षट् पदार्थान् द्रव्य-गुण-कर्म-सामान्य-विशेष-समवायाख्यान् अत्यन्तभिन्नान् भिन्नलक्षणानभ्युपगच्छन्ति" पुनस्तत्रैव—"न च वैशेषिकैः कल्पितेभ्यः षड्भ्यः पदार्थेभ्यः अन्ये अधिकाः शतं सहस्रं वाऽर्थाः कल्पितव्या इति निवारको हेतुरस्ति" इति। अतः सप्तपदार्थवादमुपजीव्य प्रणयनादेव शिवादित्यग्रन्थस्य वैशेषिकान्यत्वं प्रतिपाद्यते।

अत एव फलतः सप्तपदार्थवादित्वेनाधिकरणसिद्धान्तबलेन काणादस्यापि नव्यन्यायत्वापत्तिरित्यपि नाशङ्कनीयम्। तथाहि वैशेषिकनये अभावस्याधिकरणप्रतियोग्यादि-स्वरूपत्वेनैवोपपत्तिमाहृत्य मुख्यतः पृथक्पदार्थत्वं नाङ्गीकृतमिति न तेषां वस्तुतः सप्तपदार्थवादिता। नव्यमते तु अभावस्याधिकरणातिरिक्ततया अभावाभावस्य पृथक्प्रतीयमानतया च भिन्न एवान्येभ्यः कश्चिदभावपदार्थः स्वीकृतः।

यत्तु—"प्रमेयतत्त्वं सम्यगनालोच्य प्रमाणतत्त्वालोचनप्राधान्यमेव चिन्तामणेर्नव्यन्यायत्वे बीजमिति मतम् तत्तुच्छम्। उपमानचिन्तामणौ शक्तिसादृश्ययोः सप्तपदार्थातिरिक्तत्वखण्डनेन पदार्थानां सप्तत्वव्यवस्थापनादिभिः प्रमेयतत्त्वालोचनस्यापि तत्र विशेषेण वर्त्तमानत्वात्।

प्रमेयनिरूपणफलमपि प्रतिपादितम्। वस्तुतस्तु परमात्ममननार्थं प्रवृत्तयोर्न्याय-वैशेषिकयोर्यथा प्रमाणादिपर्यालोचनेन परमात्मा निरूपणीयस्तथा नव्यन्यायस्यापि। एवं सति "प्राधान्येन सप्तपदार्थवादित्वमेव नव्यन्यायलक्षणं वेदितव्यम्।

पण्डितप्रवरेण जगदीशेन तदीयतर्कामृतग्रन्थे, शिवादित्येन तस्य सप्तपदार्थीतिनामके च पुस्तके शास्त्रस्यास्य प्रयोजनमीदृशमेव वर्णितम्। एतेन दर्शनशास्त्रप्रतिपाद्यो मोक्षोपायनिर्देश एवास्यापि प्रयोजनमिति स्पष्टतया प्रतिपादितम्।

एतदप्यनुमातव्यम्—वेदाप्रामाण्यवादिनो नास्तिकान् निरसितु' वेदस्यापौरुषेयत्वं शब्दानाञ्च नित्यत्व' प्रतिपाद्य वेदप्रामाण्यप्रतिपादनप्रवृत्तेषु मीमांसकेषु, वेदस्य ईश्वरजन्यत्वं शब्दानित्यत्वञ्च प्रतिपाद्य भिन्ननयेन वादिनिराकरणरतेषु नैयायिकेषु वैशेषिकेषु च, मीमांसकप्रवराणां प्राभाकराणां तत्र विपक्षताचरणेन गृहविवादे समुपस्थिते, ये खलु प्राज्ञा नैयायिक-वैशेषिकोभयमतसामञ्जस्यपूर्बकपदार्थतत्त्वव्यवस्थापनेन मीमांसकानां विरोधित्वमापन्नास्तेषामेव गवेषणया नव्यन्यायोत्पत्तिरिति। अतः खलु नव्यन्यायस्य पितरौ तावद् गौतमीयन्यायदर्शन-वैशेषिकदर्शने। ज्ञातिशत्रवश्चास्य मीमांसकाः, जैन-बौद्धादिनास्तिकमतपरिपोषकाश्च विजातीयाः खलु रिपवः। ये पुनरस्य वैशेषिकादविशेषं कथयन्ति तद्वचनमपि न मनोरमम्। प्रमाणवर्त्मन्येव महावैषम्योपलब्धेः। तथाहि प्रत्यक्षानुमानप्रमाणद्वयवादिनो वैशेषिकाः, एते पुनः प्रत्यक्षानुमानोपमानागमप्रमाणचतुष्टयवादिन इति संक्षेपः॥

---

# अभिमन्यौ निहते सुभद्रासकाशे उत्तराया विलापः

[ पण्डितः —श्रीहरिपद-भारती । ]

मातः किं जनतामुखादयनियतं संश्रूयते साम्प्रतं
सत्यं ते तनयः सुधांशुरगमत् कालाम्बुधौ लीनताम् ?
तादृग् वीरजनुः स्फुलिङ्ग इव किं स्पृष्ट्वा भुवं सामरीं
निर्वाणं गतवानहो कथय मे किं वृत्तमत्यद्भुतम् ॥
तातः श्रेष्ठमहारथः पशुपतिर्यस्मात् पराजीयत
श्रीकृष्णो जननीसहोदरवरो यः पाण्डवानां सुहृत् ।
गन्धर्वामरदैत्यदानवजितोर्युद्धे तयोरग्रतः
पञ्चास्यस्य शिशुर्हतो मृगकुलैश्छिन्नन्तु माननं किम् ?
हाहा किं समरस्य दुःसहतरो वृत्तान्त उज्जृम्भितः
सम्यङ् मे कृपयाकलय्य सुमहानुद्वेग आशम्यताम् ।
मातस्ते तनयं महारथगणैर्द्रोणादिभिः सप्तभिः
सम्भूयैव विनाशयन्निरवनौ श्रावान्विनैर्भूयते ॥
वीरा मे श्वशुराः सुरेन्द्रजयिनो जीवन्ति नो साम्प्रतम् ?
नो जाने कथमित्यहो न हि सुतं युद्धे ररक्षुस्तदा ।
तत् किं गाण्डिवकार्मुकप्रहरणं (?) विध्वस्ततेजोऽभवद्
भाग्यादम्बुनिधिर्विशुष्कममृतं (?) सम्भूतमुग्रं विषम् ॥
किं क्षत्राः पशुधर्मिणो रणगतां नीतिं पदाऽताडयन्
कारुण्यं हृदये किशोर इति किं जातं न तेषां क्षणम् ।
हत्वा सप्त महारथा रणमुखे बालं निरस्त्रं छलात्
क्षात्रं धर्ममुदीरयन्ति किमहो नो लज्जितास्ते शठाः ॥
मातर्मातः प्रवहति भृशं रक्तमुष्णं शिरासु
हृतपिण्डं मे स्फुरति नितरां कम्पते देहयष्टिः ।
त्वत्तः श्रुत्वा घृणितचरितं कर्म पैशाचिकं तत्
कर्णद्रोणप्रभृतिरथिनां धिक् शतं तद्रथित्वम् ॥

स्नुषा मृगेन्द्रस्य मृगेन्द्रकन्या मृगेन्द्रपत्नी च मृगेन्द्रवीर्या ।
अहो शृगालीव वने श्वभीता दुःखाश्रुसिक्ताऽत्र गृहावरुद्धा ॥
तीव्रः प्रचण्डो वडवायमानः क्रोधाग्निरन्तर्ज्वलयत्यजस्रम्‌ ।
शाम्येन्न यावच्छिशुघातिनस्तान्‌ जयद्रथादीन्‌ प्रभवेन्न दग्धुम्‌ ॥
वैधव्यदग्धे रिपुताडनार्त्तैः किं जीवनैर्मे क्षणभङ्गुरैस्तैः ।
एकोऽपि तेषां यदि घातितः स्यात्‌ श्लाघ्या मृतिर्मे युधि वैरिहस्तात्‌ ॥
रणाङ्गणे मे मरणं वरं स्यात्‌ सोढुं न शक्यः प्रियविप्रयोगः ।
प्रणम्य याचे भवतीप्रसादं (?) स्वर्गे लभेयं पति-पाद-पल्लवम्‌ ॥

सुभद्रा युद्धगमनोद्यतामुत्तरामुपसान्त्वयति

भद्रा सुभद्रा स्रुतबाष्पधारा श्रुत्वा स्नुषायाः करुणं विलापम्‌ ।
दीर्घं विनिःश्वस्य मुहुः कदुष्णं जगाद शोकाश्रुनिरुद्धकण्ठा ॥
मातस्त्वया यत्‌ समुदीरितं मे तदत्र सम्पादयितुं समर्था ।
तथैव तेऽहं युधि पुत्रगोप्त्री समूलघातं द्विषतो निहन्याम्‌ ॥
किन्त्वत्र मातः कति युक्तिसिद्धं (?) पूर्वं विचार्यं करमस्प्रयोगात्‌ ।
अद्याप्यजेया भुजवीर्य-शौर्या (?) जीवन्ति सत्रं ननु पाण्डुपुत्राः ॥
तांश्चेदुपेक्ष्यैव रणाय यामो नार्यो वयं क्रोधपरीतचित्ताः ।
तत्‌ किं न तेषां गुरुगौरवाणां हानिर्भवेत्‌ कीर्त्तिशशाङ्कभाजाम्‌ ॥
लोकालये संसदि राजमार्गे शैले च दुर्गे गगने वने च ।
बाला युवानः स्थविराश्च नार्यो निन्देयुरस्मान्नहि पाण्डुपुत्रान्‌ ?
पाण्डीवधन्वाऽशनिपाततुल्यं हृद्यन्त्रविध्वंसि वचो निशम्य ।
अकाण्ड एव प्रलयं न दध्यात्‌ कालं क्षणं यापय धीरचित्ता ॥
अन्यच्च मातः प्रतिबाधते त्वां रणाय गन्तुं कुरुपाण्डवानाम्‌ ।
वंशप्रदीपस्तव गर्भमध्ये देदीप्यते सोऽपि सुरक्षणीयः ॥
तद्युक्तिपूर्णात्महितार्थवाचं पुत्री विराटस्य निशम्य सम्यक्‌ ।
अन्तः प्रवृद्धं रमणीविरुद्धं रणाय यत्नं शिथिलीचकार ।

---

# नलिनीवसन्तम्

[ निबन्धकः—श्रीशिवशङ्करशास्त्री ]

आस्तां काञ्चनपुरे वीरविक्रमसेननामानौ धनवन्तौ। अस्मात्तकाला-दारभ्यानयोरन्वययोरामरणान्तिकवैरं समजनि। तद्वैरं वृद्धिमेतादृशीमगमद् वंशानुक्रमेण यत् साक्षात्कारश्चेद् यदृच्छयाऽनयोरन्वययोरभवद् द्वयस्य तर्हि वाग्युद्धाद्रक्तस्रावोऽप्यभवत्। अकाण्डदर्शनानवरतसञ्जातकलहः काञ्चनपुरप्रशान्तेः प्रत्यर्थीभूतो जातः।

अथ कदाचिद्वीरसेनविरचितवसन्तमहामहे ललनाकुलललामायमाना बहुशो वामलोचना विक्रमोपहसितकार्त्तिकेयाश्च पुरुषसिंहा निमन्त्रिताः सन्न्यपतन्। निमन्त्रितान् विक्रमसेनान्वयजेभ्यः परि परि सर्वांस्तत्रोपस्थिता-नार्जिहद्वीरसेनः। अस्मिन् वसन्तोत्सवे विक्रमसेनात्मजस्य वसन्ताभिधस्य काञ्चनप्रभा नाम प्रणयिनी तत्राससाद। विक्रमसेनान्वयजस्य तत्र गमनं विपज्जनकमपि स्वसुहृद्धेमन्तप्रेरितोऽसौ वसन्तो वैदेशिको नाम भूत्वा मनो दधे तत्र गन्तुं काञ्चनप्रभायै। काञ्चनप्रभायामासीत्तस्य प्रणयो महान्। वसन्तो ह्यकृत्रिमप्रणयो। दूरगतमन्मथो हि सः। यस्य प्रणयस्य कृते तेन हारितनिद्रेण काञ्चनप्रभागतचित्तेन कृता समाजान्निर्जनपलायनक्रिया प्रदर्शितास्नेहया काञ्चनप्रभयाऽवगणितवसन्तेन प्राप्तं न तुल्यानुरागपिशुनं प्रतिदानम्।

अथ तद्वसन्तोत्सवे सहहेमन्तो वसन्तो जगाम। यातयामवीर-सेनस्तौ सम्भावयामास। ततो गीतं प्रावर्त्तत। तत्र गीतं शृण्वन्नलोकसामान्य-ललनामेकामवलोक्यानङ्गशरनिषङ्गीभूतचेताः संजातो वसन्तः। स इत्थं मनसि चिन्तयाम्बभूव—"अधिरात्रि तत् सौन्दर्यं वर्त्तिकाया अपि चाधिकां शोभां दधानं शोभते। सौन्दर्यं हि लोकेऽस्मिन्नतिदुर्लभम्। इयञ्च निजालिजनेभ्यश्चाधिकामभिख्यां पुष्यति।"

अगुर्वीरसेनसोदरात्मजश्रुतिपथं तद्वसन्तगदितस्तुतानि । तेन वसन्तोऽयमिति ननसंघुषितेन चिच्चिते । कोपनस्वभावत्वाद् विक्रमसेनान्वयजः कश्चिद्वैदेशिको नाम भूत्वा तेषामुत्सवमागम्य मोदतेति तस्य सहनानीतं सञ्जातम् । वीरसेनस्तादृशं कोपाध्मातहृदयं वसन्तमारणव्यवसायिनं तं न्यवारयत् । वीरसेनो हि प्रमदप्रिय आसीत् । तदाननं हर्षोत्फुल्लं सदा बभौ । स सोदरात्मजं वीरविक्रमं मारणव्यवसायान्निवार्येत्युपादिशत्—"मा वधीरकृतान्यायाचरणं वसन्तम् । स हि धार्मिकः सुनीतिशासितश्च, काञ्चनपुरनिवासिनां प्रशंसापात्रं जातम् ।"

वीरविक्रमस्त्वनिच्छया धैर्यमवलम्ब्य संरम्भं समक्षिपत् । विक्रमसेनवंशजापसदो वसन्तश्चेद् यद्योऽप्यागच्छेत्तर्हि सोऽन्याय्यवधं दण्डनीयश्चेत्युवाच । अथ गीतावसाने सा योषित् किञ्चिद्दूरमपसृत्यातिष्ठत् । वसन्तस्तत् स्थानमवलोक्य निर्जनं तस्यां निधाय दृष्टिं ससङ्कोचं तदन्तिकमुपसृत्य तां च हस्ते धृत्वाऽब्रवीत्—"पुण्यतीर्थोपमोऽयं पाणिस्ते । अनभिज्ञस्तीर्थयात्री चेदिमं पाणिं स्पृष्ट्वाऽपवित्रं कुर्यात्तर्हि तीर्थयात्रयं पाणिमिममोष्ठाभ्यां मार्ष्टुं व्यवसितोऽस्मि ।"

"ननु तीर्थयात्रिन् ! आर्यवृत्तसदृशस्त आचारः, तीर्थयात्रिणः साधूनां हस्तान् मार्ष्टुमलं न तु चुम्बितुमिति" प्रत्यभाषत नलिनी ।

'सद्वृत्ते ! अवधेहि तावत् प्रार्थनां मे । पूरय च नाम् ।'

इत्थम्भूते व्यतिकरे सा ललना मात्रा समाहूताऽभवत् । का हि तस्याः मातेत्यनुसन्धाय—'अलौकिकसौन्दर्येण तन्मनःपश्यतोहरा हि सा नलिनी नाम्ना वीरसेनजा जीवितसर्वस्वीभूतोत्तराधिकारिणी चेत्यज्ञासीत् सः ।

अज्ञातवैरतया नलिनीसहसादत्तप्रणयस्य तस्यादूयत हृदयम् । परन्तु तमलमभून्निवारयितुं प्रणयव्यवसायान्नैषा विचारणा । नलिन्यपि—येनाऽऽर्यवृत्तेन समं सा जल्पति स्म स हि विक्रमसेनात्मज इति विवेद । सा तस्या अतर्कितावितर्कितकामजन्मना सन्तापेनाभिभूताऽपि स्ववंशावधीरिते तस्मिन् वसन्ते पूर्वस्मादधत्त चाधिकां प्रीतिम् ।

अर्द्धरात्रतया गतो वसन्तः ससहचरः। परन्तु स्थानं तन्न्यस्तचेतसं विरहय्य स्थातुमशक्नुवन्ननुचरानुपलक्षितो लङ्घितनलिन्यनुगृहकालवाटिकाप्राकारोऽभिनवप्रणयचिन्ताबद्धमनाः स्थितः। इत्येवं चिन्तयत्येव तस्मिन्नुदग्रवातायनाविर्भूताया गवाक्षेणाभिनिष्पतद्रूपं नलिन्या अलोकसामान्यं दिशि वासव्यामुदीयमानदिनमणिमयूखजालमिवाद्योतिष्ट। नलिन्या उदय इवाधिदीधितेर्मणेर्दिवसस्यौदये शमितरुचितया दुःखरुग्णपाण्डुरमिवाधिगगनं वपुः प्रतीयते स्म क्षामधामभास्वच्छीतांशुमालिनः। करकमलावसक्तकपोलाया नलिन्याः कपोलस्पर्शसुखानुभवाय तत्पाणिपङ्कजस्य स्पृहयाञ्चकार स मणिबन्धाय नितराम्। एतावत्कालमाकलय्याऽऽत्मानमेकाकिनमायततरञ्च निश्वस्य व्याजहार—"हन्त!" [ विमोहितो जातो वसन्तः स्वप्रणयिनीसंघुषितमाकर्ण्य ]। वसन्तः शनैरवादीत्—अयि देवाङ्गने! भूयोऽप्यभिधीयताम्। उपरिष्टाद्वर्त्तमाना त्वं, देवदुहितेवानुमीयसेऽस्माभिः। स्वर्गाङ्गनामालोक्य यथा नराः किञ्चिदपसृत्य निपुणं निभालयन्ति, त्वां वयं तथा पश्याम इति।

( क्रमशः )

# सेतुः

[ निबन्धकः — आर रङ्गाचार्यः शिरोमणिः ]

यवनराजः। अये ब्राह्मण! वृथा मम कालो याति। युद्धं कर्तु मिच्छामि। को नामास्मान् द्वेष्टि। को जेतव्यः।

अमात्यः। देव! सामन्तराजोऽस्मान द्वेष्टि। मन्ये स जेतव्य इति।

य। किंनामधेयः सः।

अ। महामोह इति।

य। किं तस्य राज्यम्।

अ। कुबेरपट्टणमिति।

य। कियद्दूरं तद्वर्तते।

अ। इतो विंशतिक्रोशाद्दूरं।

य। अच्छ, सेना युद्धाय प्रवर्त्यताम् जयश्च निर्वर्णताम्।

अ। यदादिशति देवः। ( इति निष्क्रान्तः )

य। कः कोऽत्र भोः। ( प्रविश्य प्रतीहारी )

प्र। यदाज्ञापयति देवः।

य। अमात्यः समाहूयताम्। ( तथेति निष्क्रम्य पुनः प्रविश्य)

प्र। विजयतां महाराजः। अमात्यो विज्ञापयति।

य। अये अमात्यब्राह्मण! कथमासीद्युद्धम्।

अ। दिष्ट्या जयश्रिया विजयते महाराजः।

य। अपि नामास्माकं सेनायाः कापि क्षतिः।

अ। न कापि। महाराजस्य सेनां युद्धाय संनद्धां ज्ञात्वा सामन्तो महामोहः स्वयमेवाऽऽगत्य करप्रदानेन महाराजस्य सौहार्दमपेक्षते। श्रुत्वा देवः प्रमाणम्।

य। अच्छ, को दोषः। तथैव भवतु। तद्राज्यमहं द्रष्टुमिच्छामि। केन पथा गम्यताम्।

अ। नातिदूरे रोहणगिरिर्नाम कश्चन शैलो वर्तते तस्य शिखरमारुह्य महाराजः सर्वं द्रष्टुमर्हति

य। कः कोऽत्र भोः। (प्रविश्य प्रतीहारी)

प्र। यदाज्ञापयति देवः।

य। सज्जीक्रियतां रथः। (तथेति निष्क्रम्य पुनः प्रविश्य)

प्र। विजयतां महाराजः। सज्जो रथः।

य। (रथमारुह्य गच्छन् मध्येपथं झटिति स्थित्वा) अये! ब्राह्मण! किमद उज्ज्वलं किञ्चिद्दूरे दृश्यते।

अ। कालननदी प्रवहति। तस्या जलं दूरे उज्ज्वलं दृश्यते।

य। कुतः सा प्रवहति।

अ। सद्यो देवेन हस्ते कृतात् कुवेरपट्टणात्।

य। तज्जलं कुत्र गत्वा विश्राम्यति।

अ। समुद्रं संगत्य।

य। तर्हि तत् सर्वं जलं वृथा खलु भवति, न तत् सम्यक्। नद्या मध्ये महान् कश्चन सेतुः क्रियताम्। निरुद्धेन तेन जलेन अस्माकं राज्ये सुभिक्षं भविष्यति।

अ। यदादिशति महाराजः।

य। कियता कालेन शक्यम्?

अ। मासत्रयेण।

य। नो। दिनत्रयमवधिः। शीघ्रं क्रियताम्। (इत्यादिश्य अवरोधं प्रविष्टः)।

अ। (शिरसि हस्तं निधाय) अहो पारतन्त्र्यं दुःखावहम्। किं कुर्मः। (इति सचिन्तो निष्क्रान्तः)।

य। कः कोऽत्र भोः।

(प्रविश्य प्रतीहारी)। यदाज्ञापयति देवः।

य। अमात्यः समाहूयताम्। (प्रतीहारी निष्क्रम्य अमात्येन सह प्रविशति)

अ। विजयतां महाराजः।

य। अपि नाम सेतुर्निर्मितः।

अ। बाढम्।

य। तमहं द्रष्टुमिच्छामि।

अ। यथा रोचते महाराजाय।

य। (रथमारुह्य प्रस्थितः। मध्येपथं झटिति स्थित्वा। साश्चर्यम्) अये ब्राह्मण, किमिदमकाण्डे दोषाभूतमहः।

अ। (स्वगतम्) दिष्ट्या रक्षितोऽस्मि। अत्र सूर्योपरागः। मूर्खस्तमजानानः पृच्छति। भवतु। एवं ब्रवीमि। (प्रकाशम्) महाराज! भवता सेतुः कारितः किल। तेन सामन्तजनानां महदिव कष्टमापतितम्। कृतस्य प्रतिकर्तव्यमिति धिया कुपितैस्तैः सूर्यप्रकाशस्य सेतुः कृतः। ततस्तमासि।

य। अहो प्रमादः! सूर्यप्रकाशोऽस्माकमवर्जनीयः। सेतुर्माऽस्तु। शीघ्रं स भज्यताम्।

अ। (स्वगतम्) दिष्ट्या कष्टान्मोचितोऽस्मि। (प्रकाशम्) यदादिशति महाराजः। (तदात्व एव राहुणा सूर्योऽपि विमुक्तः। क्षणेन प्रतिनिवृत्य) महाराज! सेतुरभज्यत।

य। अच्छ, सूर्यः प्रकाशतेतराम्। तैरपि सूर्यसेतुरभज्यत इति मन्ये।

अ। बाढम्!

य। अहो! सूर्योऽद्य सम्यक् प्रकाशते। साधु। महान् सन्तोषः। गृह्यतामिदं पारितोषिकम्। (इति सुवर्णशतमर्पयति)।

अ। (तत् प्रतिगृह्य मुदितो गृहं गतः।

"मतिरेव बलाद्गरीयसी ॥"

अजयपालकृतो

# नानार्थसंग्रहः

## पूर्वानुवृत्तिः

काल्यायन्युमायामर्द्धभिक्षुक्यधवयोषितोः ।
कामगुणः स्मृतो रागे विषयाभोगयोरपि ॥१८७॥
कविर्विदुषि शुक्रे च स्यात् कवी तु खलीनके ।
किंशब्दः कथितः क्षेपे प्रश्ने कुत्सा-वितर्कयोः ॥१८९॥
कनिष्ठश्च कनीयांश्च यून्यल्पे च खुल्लके ।
करभः पाणेः कनिष्ठाया मणिबन्धान्तरुष्ट्रयोः ॥१९०॥
कपालं मस्तकास्थिन स्याद् घटाद्यवयवे तथा ।
कुवलं कोले नीलाब्जे कलुषं पाप आविले ॥१९१॥
*केशराथकणे वृष्णौ कारणं हेतुघातयोः ।
कन्दलं करिणि वाल्यां कुलालं कुण्डशिक्ययोः ॥१९२॥
कार्मुकं कर्मठे चापे केशवः केशि-कृष्णयोः ।
करालो दन्तुरे तुङ्गे कान्तारं वन-दुर्गयोः ॥१९३
कितवो धुस्तुरे धूर्त्ते किस्कुर्वितस्तिहस्तयोः ।
क्लीवः क्षुद्रेऽलसे षण्डे कच्छपील्यलि-वीणयोः ॥१९४॥
कम्बुर्नद्याङ्करीषाग्नौ केशरी सिंहवाजिनोः ।
कृच्छ्रं प्रायश्चित्ते दुःखे कुजोऽङ्गारक-भूरुहोः ॥१९५॥

---

* केशटश्चौकणे विष्णौ इति स्यात् ।

करजः करजे नखे* कोकश्चक्राह्वये वृके ।
कञ्चुकी सर्पे स्थापत्ये कलङ्कोऽङ्कापवादयोः ॥१९६॥
क्रन्दनं† रोदने ह्वाने कादम्बः शर पक्षिणोः ।
कलत्रं जघने पत्न्यां कुञ्जो हनुनिकुञ्जयोः ॥१९७॥
कलितं गृहीते ज्ञाते कर्बुरं हेम-शिवलयोः ।
कैतवस्तु च्छले द्यूते कृष्टिर्विदुषि कर्षणे ॥१९८॥
कृषकः कर्षके फाले करो नक्षत्र-हस्तयोः ।
दिग्वस्तुनि तरौ वृन्दे कृपीटमुदरेऽम्भसि ॥१९९॥
कृतं युगेऽपि पर्याप्ते क्रव्यान्मांसाद-रक्षसोः ।
कारुजः कलभे नाकौ कल्माषश्चित्र-कृष्णयोः ॥२००॥
कन्दं मूलं चार्शाम्बुः‡ कृमिः स्यात् कीट-लाक्षयोः ।
कुसुमं पुष्पे स्त्रीपुष्पे कौलेयकः श्व-कुल्ययोः ॥२०१॥
अतोऽव्ययानि कथ्यन्ते कु पापेऽल्प-जुगुप्सयोः ।
किं प्रश्ने च जुगुप्सायां किमुत प्रश्न-वाक्ययोः ॥२०२॥
कं शिरःसुखतोयेषु किल सम्भाव्य-वार्त्तयोः ।

ख

खरस्तु गर्दभे तीक्ष्णे दुस्पर्शे राक्षसान्तरे ॥२०३॥
खलं भूस्थानकल्केषु खलस्तु क्रूर-नीचयोः ।
खनकश्चिसततस्वज्ञे मूषिके चावदारके ॥२०४॥
खोलकः पाकभेदे तु पूगकोश-शिरस्त्रयोः ।
खिंखिरवः शिवाभेदे खट्वाङ्गे च खिखीरवे ॥२०५॥
खेटः कफे मृगव्ये च ग्रामभेदे च कुत्सिते ।
§खटस्तु लाङ्गले कूपे घाते टङ्के च कत्तृणे ॥२०६॥

---

* अत्र "चैव" इत्यधिकम् आदर्शे ।
† क्रन्दनं रुदिताराव आह्वाने च निगद्यते
‡ "कन्दं मूलेऽब्दे ऽर्शांसि" इति वा "कन्दं मूले चार्शांसि च" इति वा पाठः स्यात् ।
§ हैमे खूट इति पठ्यते ।

खाटिरेकग्रहे खर्वे किणे शव-रथं तथा ।
खदिरी शाकभेदेऽपि खदिरो दन्तधावने ॥२०७॥
खेलिः कार्यां जिनस्तुतौ* बाणार्कपक्षिजन्तुषु ।
खपुराख्या पूगे वेष्टे [मुस्ते ?] खमाकाशे दिवीन्द्रिये ॥२०८॥
खड्गो गण्डके निस्त्रिंशे खर्जूरं फलरूप्ययोः ।
खलु निषेधजिज्ञासावाक्यभूषासु सान्त्वने ॥२०९॥

ग

गोशब्दः कथितो बाणे वाचि दिग्वज्रयोर्जले ।
षण्डनेत्रमयूखेषु भूमौ स्वर्गे च दृश्यते ॥२१०॥
गौरः कनकसङ्काशे सिते शुद्धे च कीर्त्तितः ।
गौरी† त्वष्टवर्षकन्या-हिमालयतनूजयोः ॥२११॥
गुरुर्महति पित्रादौ दुर्जरे सुरमन्त्रिणि ।
निषेकादिकरे चापि भवेल्लघुविपर्यये ॥२१२॥
गुणो मौर्व्यामप्रधाने सत्त्वादौ द्रव्यसंश्रिते ।
शुक्लादावपि सन्ध्यादौ स्तम्भे शौर्यादि-सूदयोः ॥२१३॥
ग्रहणं स्यादुपलब्धौ चन्द्रसूर्यग्रहे तथा ।
स्वीकारादरवन्दीषु प्रत्याये ग्रहणी रुजि ॥२१४॥
गन्धर्वः पशुभेदे च गायने खचराश्वयोः ।
अन्तराभवसत्वे च ग्राहो ग्रहावहारयोः ॥२१५॥
गव्या गवां गणे गव्यं गोक्षीरादौ च गोहिते ।
रागवस्तुनि मौर्व्याञ्च गोधा तलनिहाकयोः ॥२१६॥
गृह्योऽस्वैरिणि पक्ष्ये च गृहासक्तमृगाण्डजे ।
गृह्या शाखापुरे प्रोक्ता गुह्यं‡ हृद-रहस्ययोः ॥२१७॥

---

* कदाचिद् 'गीतस्तुत्योः' इति पाठः स्यात् ।

† त्वष्टवर्षीया कन्या—ग्र.० ।

‡ हृदब्धयक्षियोः इति ग्र०

गोपो गोष्ठनियुक्ते तु नलने ग्रामणिपुंते (?) ।
गोपी स्याच्छारिवायान्तु गोपतिः षण्डसूर्ययोः ॥२१८॥
गोत्रं कुले वने नाम्नि गोत्रस्तु भरणीधरे ।
गोत्रा भुवि गवां वृन्दे गृहं दारेषु वेश्मनि ॥११६॥
गात्रं गजाग्रे जङ्घायामङ्गे वपुषि च स्मृतम् ।
गुच्छो हारप्रभेदे च कलापे स्तवके मतः ॥२२०॥
गर्भो भ्रूणे भवेत् कुक्षिशिशौ पनसकण्टके ।
गन्धनं सूचनायां स्याद् उत्साहे च प्रकाशने ॥२२१॥
ग्रामः पुरे जनावासे शब्दादिपूर्वको गणे ।
गन्धवहा तु नासायां गन्धवहोऽनिले मृगे ॥२२२॥
गोपुरं द्वारि पूर्द्वारि कैवर्तीमुस्तकेऽपि च ।
गन्धः सुगन्धिर्गाने स्यांके सुरभौ घ्राणसञ्ज्ञते ॥२२३॥
गुल्मो घट्टेऽथ सेनायां विटपातङ्कभेदयोः ।
ग्रहो राहौ पूतनादौ निर्बन्धेऽर्कादि-भावयोः ॥२२४॥
गणना राजि विद्यायां खड्गे वटचतुस्तये । ?
गञ्जः खनौ भाण्डगृहे गञ्जा तु मदिरालये ॥२२५॥
गणः सैन्यान्तरे वृन्दे संख्यायां प्रमथे बले ।
गोलको गुडके गोलो जारतो विधवासुते ॥२२६॥
गोरक्षजम्बुर्गोधूमे तथा गोरक्षतण्डुले ।
गोकर्णोऽनामिकाङ्गुष्ठमाने सर्पे मृगान्तरे ॥२२७॥
गोष्पदन्तु गवां गम्ये गोपदेऽथ मिते तथा ।
गर्जितं मेघनिस्वाने गर्जितो मत्तदन्तिनि ॥२२८॥
गुहः स्कन्दे गुहाक्षायां पृश्निपर्ण्यां च गह्वरे ।
गण्डूषा मुखपूर्णे च गण्डूषः प्रसृतोन्मिते ॥२२९॥
गतिर्वर्त्मनि यात्रायामुपायदेशयोरपि ।
ग्रस्तं ग्रासीकृते दष्टं विलुप्तपदवाचि च ॥२३०॥

गदोऽच्युतानुजे रोगे गदा शस्त्रान्तरे मता ।
ग्रामणीर्नापिते श्रेष्ठे भोगिकाधिपयोरपि ॥२३१॥
गुडा स्नुहीगुडिकयोर्गुड ऐक्षवगोलयोः ।
गुञ्जा स्याद् वाद्यभाण्डे तु काकचिञ्च्यामपि क्वचित् ॥२३२॥
गिरिर्गैरोयके क्रीडागुडे शीर्षे महीधरे ।
गाण्डीवं गाण्डिवञ्चापि कोदण्डे पार्थधन्वनि ॥२३३॥
गणिका करिणीयूथे वेश्यायामग्निमन्थयोः ।
गेयो गीते विगातव्ये गरुत्मान् खग-तार्क्ष्ययोः ॥२३४॥
गडुः कण्ठगुडे कुब्जे ग्रावा भूमिधराश्मनोः ।
गम्भीरो जम्बीरे निम्बे गाथा वाग् भेद-पद्ययोः ॥२३५॥
गोप्यो दासीसुते रक्ष्ये गहनं गह्वरे वने ।
गोविन्दो विष्णौ गोऽध्यक्षे गाङ्गेयं हेमभीष्मयोः ॥२३६॥
गुन्द्राख्याऽब्दे शरे कल्मां गैरिकं धातु-रुक्मयोः ।
गुणन्यभ्यासे (?)क्षे ग्रहराजोऽर्कचन्द्रयोः ॥२३७॥
गोमुखं लेपने वाद्ये गह्वरं विल-दम्भयोः ।
गायत्री वृत्ते खदिरे गतं ज्ञाते गतौ तथा ॥२३८॥

[ घ ]

घनोऽब्दे दार्ढ्ये संघाते विस्तारे लोहमुद्गरे ।
मुस्ते घनं सान्द्रे वाद्ये घृतमिद्धेऽम्बु-सर्पिषोः ॥२३९॥
भवेत् घनरसो नीरे सान्द्रनिर्यासयोरपि ।
घर्घरिका वाद्यभेदे वादित्रे लगुडे तथा ॥२४०॥
घनाघनो मत्तनागे वर्षुकाब्द-महेन्द्रयोः ।
घनसारस्तु कर्पूरे दक्षिणावर्त्तपारदे ॥२४१॥
घोषस्तु खरभेदे स्याद् गोपपल्लीनिनादयोः ।
घटा संघाघटनयोः करिसङ्घटनेऽपि सा ॥२४२॥

घर्मः स्वेदोष्णयोर्ग्रीष्मे घृणा दयाजुगुप्सयोः ।

[ च ]

चित्रा सुभद्राखुपर्ण्योः सरिद्भत्तारभेदयोः ॥२४३॥
गोभूम्याश्चित्रतिलक आलेख्ये कर्बुरेऽद्भुते ।
चक्रं सैन्ये रथाङ्गे च राष्ट्रे दम्भान्तरे तथा ॥२४४॥
आयुधे सलिलावर्त्ते चक्रो रथाङ्गनामनि ।
*चन्द्रं सुवर्णे कर्पूरे चन्द्रः काम्पिल्य-सोमयोः ॥२४५॥
स्याद्बर्हिचन्द्रके काम्ये चेलं गर्हित-वस्त्रयोः ।
चिलमीलिका तु खद्योते कण्ठीभेदे च विद्युति ॥२४६॥
चपलाख्या रसे लोले शीघ्रे चाप्यचिरद्युति ।
चमसः पर्पटे पात्रे पिष्टभेदे च लड्डुके ॥२४७॥
चिक्लन्तु सहयुक्ते स्यात् क्लिन्नाक्षे क्लिन्नलोचने ।
चैत्य उद्देशवृक्षे स्याच् चैत्यं चिह्ने जिनालये ॥२४८॥
चटुश्चाटुनि विज्ञातः स्नुसायथ पिच्चिण्डके ।
चरणो वेदशाखादौ पद-पादपमूलयोः ॥२४९॥
चलनं भ्रमणे पादे दृष्टं वस्त्रान्तरेऽपि च ।
चतुरश्चक्रगण्डौ स्याद् दक्षे लोचनगोचरे ॥२५०॥
चतुष्की मशके हर्म्ये भवने यष्टिकान्तरे ।
चामरपुष्पो माकन्दे काश-केतकयोरपि ॥२५१॥
चिरण्टी तु सुवासिन्यां यौवनान्वितयोषिति ।
चूर्णवाग् वासयोगे तु धूलि-क्षारप्रभेदयोः ॥२५२॥
चन्द्रहासो रावणासौ खड्गमात्रे च दृश्यते ।
चिपिटः पिष्टभेदे स्यात् तथा सिद्धितारस्रुते ॥२५३॥

---

* चन्द्रं मेचककात्र्ययोरित्यजयः इति रघुनाथः चन्द्रं स्वर्णे च कर्पूरे चन्द्रो मेचक; काम्ययोः इति अजय इति भरतमल्लिकः ।

चिकुरश्चञ्चले दृष्टः केश-पादपभेदयोः ।
चर्चा देव्याञ्च चिन्तायां स्थासकेऽपि प्रकीर्त्तितः ॥२५४॥
चञ्चुः स्यात् लोटावेरण्डे चोक्षो गीतमनोज्ञयोः ।
चित्रभानू रवावग्नौ चक्री विष्णौ भुजङ्गमे ॥२५५॥
चित्रको भेषजे व्याघ्रे चक्रपादो रथे गजे ।
चोद्यं चित्ते चोदनीये चारश्चरप्रवासयोः ॥२५६॥
चयो वृन्दे प्रबन्धे च चितिश्चित्या-समूहयोः ।
चूडा शिखायां वडभौ चरश्चारेऽथ चञ्चले ॥२५७॥
चर्म स्यात्त्वचि फलके चिह्नमङ्क-पताकयोः
चराचरश्चरे लोके चरुर्हव्यान्नभाण्डयोः ॥२५८॥
अन्वाचये समाहारे चान्योऽन्यार्थे समुच्चये ।

[ छ ]

छत्रा मधुरिकायां स्याच् छत्रमातपवारणे ॥२५९॥
छाया पंक्तौ दीप्त्यभावे प्रतिमार्कस्त्रियोस्त्विषि ।
छेको गृहासक्तपक्षिमृगयोर्नागरे तथा ॥२६०॥
छिकुरः पक्षिभेदेऽपि गृहबभ्रौ भुजङ्गमे ।
छलं छद्म-सालितयोश्छदनं पत्रपक्षयोः ॥२६१॥
छदो गरुति पत्रे च छन्दनं रहसि स्मृतम् ।
छन्दः श्रुतौ गायत्र्यादौ छद्म कैतवशाठ्ययोः ॥२६२॥
छिद्रं स्याद् दूषणे गर्त्ते छन्दः स्यादाशये वशे ।

ज

जन्या नवोढाभृत्यादौ जामातुरपि वत्सले ॥२६३॥
जननीये जनितरि जन्यं कौलीन-युद्धयोः ।
जगती पिष्टपे लोके पृथ्वी-छन्दोविशेषयोः ॥२६४॥
जगत्तु जङ्गमे दृष्टं जिनोऽर्हति तथागते ।
जीवको भैषज्यभेदे क्षपणे वृद्धिजीविनि ॥२६५॥

जन्तौ श्रेष्ठे पीतशाले जीवनं वर्त्तनाम्बुनोः ।
जीवातुः कथितो जीवे तथा जीवितभेषजे ॥२६६॥
जम्भितं जम्भणोत्फुल्लप्रवृद्धेषु विचेष्टिते ।
जीवो जन्तौ गुरौ जीवं प्राणे जीवा धनुर्गुणे ॥२६७॥
जिगीषाशब्द उद्दिष्टो व्यवसाय-जयेच्छयोः ।
जटा केशविकारः स्याद् मांसी-पादपमूलयोः ॥२६८॥
जघनन्तु कटीपूर्वभागे योषित्कटावपि ।
भवेज् जनपदो देशे जने च परिकीर्त्तितः ॥२६९॥
जयनं तुरगादीनां सन्नाहे विजयेऽपि च ।
ज्योत्स्ना चन्द्रमसो भासि स्फुरज्ज्योतिर्निशि स्मृता ॥२७०॥
ज्योतिर्दीप्तिग्रहमितारासु वेदाङ्गान्तर-नेत्रयोः ।
जगलः पिष्टमद्ये स्याद् मोदके कितवे तथा ॥२७१॥
जैवातृकः शशधर आयुष्मति कृपीवले ।
जातिश्छन्दसि सामान्ये मालत्यां जन्म-गोत्रयोः ॥२७२॥
ज्यायाञ्ज्येष्ठे चातिशये प्रशस्येऽतिजरत्यपि ।
जालक्षारक आनाये दम्भे गवाक्षवृन्दयोः ॥२७३॥
जीवितेशो यमे ख्यातो वल्लभे च धनागमे ।
जम्भो दमे च जम्बीरे दैत्य-दन्तप्रभेदयोः ॥२७४॥
जर्जरः कथितो जीर्णे शक्रध्वजे च कोकिले ।
जघन्यं गर्हिते पश्चाज् जिष्णुः पार्थेन्द्रजेतृषु ॥२७५॥
जङ्गलं निर्जले मांसे ज्वलितं दग्ध-भास्वतोः ।
जठरं कठिने कुक्षौ जातं जन्मनि सन्ततौ ॥२७६॥
जिह्मस्तु कुटिले मन्दे जामिः स्वसृकुलस्त्रियोः ।
जम्बुको वरुणे फेरौ जीमूतोऽब्दे नगान्तरे ॥२७७॥
जघन्यजोऽनुजे शूद्रे ज्या पृथिव्यां धनुर्गुणे ।
जया गौरी-जयन्त्योश्च जवा पुष्पे जवाजपे ॥२७८॥

जम्बालः शैवले पङ्के जोषं तूष्णीं सुखेऽव्ययम् ।

[ झ ]

झर्झरिः केशचक्रे च शुद्धे क्लेदेऽपि दृश्यते ॥२७६॥

झिल्ली कीटान्तरे स्थालीलग्नदग्धान्धसि स्मृता ।

झषा नागवलायां स्याज् झषो मत्स्ये झषं खिले । २८०॥

[ ट ]

टटरी वितथाख्याने लम्पा-पटहवाद्ययोः ।

टगरष्टङ्कणाक्षारे केकराक्षेऽपि स स्मृतः ॥२८१॥

[ ड ]

डिम्भः शिशौ च मूर्खे च डिम्बः प्लीहनि विप्लवे ।

[ त ]

तलस्ताले चपेटे च तलश्चाधःस्वरूपयोः ॥२८२॥

कार्यबीजे प्रकोष्ठे च ज्याघातवारणे मतः ।

तारो गाढस्वने मुक्ताशुद्धौ निर्मलमौक्तिके ॥२८३॥

तारं रूप्ये तार इव तारा च नेत्रमध्ययोः ।

तालो गीतिक्रियामाने मध्यमाङ्गुष्ठनामिते ॥२८४॥

तृणराजे हस्ततले तालं तु हरितालके ।

तीर्थं क्षेत्रेऽध्वरे पात्रे शास्त्रे सलिलगोचरे ॥२८५॥

योषिद्रजस्युपाये स्यादुपाध्याये च मन्त्रिणि ।

तन्त्रीर्वीणागुणे नाड्यां तन्त्रं द्व्यर्थे परिच्छदे ॥२८६॥

तन्तुवाये वरे जायौ सिद्धान्ते राष्ट्रवृद्धयोः ।

तरलो भास्वरे हारे हारमध्यमणौ चले ॥२८७॥

तरला सुरा-यवाग्वोस्त्रिदिवः खे सुरालये ।

तमोपहस्तमोनुच्च मार्त्तण्डे वह्निचन्द्रयोः ॥२८८॥

तृष्णातर्षतृषः शब्दाः पिपासायामथेप्सिते ।

तपस्विनी जटामांस्यां तपस्वी तापसे मतः ॥२८९॥

तपो धर्मे व्रते चापि तपा माघे च दृश्यते ।
तुला पलशते माने सादृश्ये भाण्डपीठयोः ॥२८०॥
तमो राहौ तमः शोके गुणभेदतमिस्रयोः ।
तीक्ष्णं विषे रणे लोहे कथ्यते खर-योगिनोः ॥२८१॥
अथकूटः शिक्यभेदेऽपि धौताजन्यो च कुलान्वित् ।
ताडितं तौलितपटे वाद्यभाण्डे गुणे तथा ॥२८१॥
त्रुटिः कालप्रमाणे स्यादेलायां संशये लवे ।
तमिस्रा तामसीरात्रौ दृश्यते च तमस्तती ॥२८२॥
तल्पं कलत्रे शयने गृहभेदे च दर्शितम् ।
तालगुः क्षुद्रताते स्यात्तथा तातहिते मतः ॥२८३॥
तोक्मं यवे हरिन्माले कर्णयोर्मलकेऽपि च ।
तिलकं चित्रके क्लोम्नि जट्टुल-द्रुमभेदयोः ॥२८४॥
ततं वीणादिवाद्ये स्याद् व्यासविस्तृतयोरपि ।
तितिलं नन्दके शार करणे तिलपिष्टके ॥२८५॥
तारलं तप्तमाले स्यात् तायनोऽपि व्रजे मतः ।
तिक्ता स्यात् कटुरोहिण्यां तिक्तस्तु सुरभौ रसे ॥२८६॥
तलिमं कुट्टिमे तल्पे त्रपु रङ्गे च सीसके ।
त्रयी वेदे त्रिविद्यायां त्वक्तु चर्मणि प्रकथ्यते ॥२८७॥
तुङ्गो महति पुन्नागे लक्षकस्तम्भ-नागयोः ।
तरस्वी वेग अनिले त्याग उत्सर्ग-दानयोः ॥२८८॥
तृणता तृणत्वे चापे च त्रेता वह्नित्रये युगे ।
तरणिर्नौ सहार्केषु तरुणं युव-नव्ययोः ॥२८९॥
तोदनं व्यथने तोत्रे तलिनं स्वच्छ-लेशयोः ।
तुषोऽन्नधान्यत्वचोस्त्विट् कान्तौ भासि च स्मृता ॥३००॥
ताम्रं वर्णान्तरे शुल्वे तन्द्रीर्निद्राप्रमीलयोः ।
तेमनं व्यञ्जने क्लेदे तामो भीषण-दोषयोः ॥३०१॥

तोकं स्यादात्मजे पुत्रयां तुषारः शीकरे हिमे ।
तिष्यं नक्षत्रके मासे तार्क्ष्यः स्याद् गरुडाश्वयोः ॥३०२॥
तरो बले तथा वेगे तेजोंऽशौ बल-शुक्रयोः ।
तावन्मानेऽवधौ कार्त्स्न्ये[तथाऽ]वधारणेऽव्ययम् ॥३०३॥
तिरोऽन्तर्द्धौ तिर्यगर्थे तु स्याद् भेदेऽवधारणे ।

[ द ]

दक्षिणा दानभेदे च दक्षिणो वामतोऽन्यतः ॥३०४॥
सरले दक्षिणोऽद्भुते परच्छन्दानुवर्त्तिनि ।
दायः स्याद्यौतकद्रव्ये लयादिदानयोरपि ॥३०५॥
विभक्तव्यपितृद्रव्ये दृष्टः सोल्लुण्ठभाषणे ।
दृढं वाढे तथा स्थूले दृढः स्याद् बलवत्यपि ॥३०६॥
द्वितीया कथ्यते पत्न्यां पूरण्यामपि च द्वयोः ।
दिग्धो विषाक्तविशिखे लिप्ते स्नेहप्रबन्धयोः ॥३०७॥
दुग्धतालीयशब्दोऽयं दुग्धांशे दुग्धफेनके ।
दण्डो दमे च मन्थाने सेनायां लगुडे तथा ॥३०८॥
द्रोणोऽर्जुनगुरौ वृद्धकाक-मानप्रभेदयोः ॥३०९॥
दशमीस्थो नष्टबीजे स्थविरे च मृताशने ।
दृग्दृष्टी दर्शने बुद्धौ लोचने दृक् च बीक्षके ॥३१०॥
दर्शनं स्वप्नधीज्यासु नेत्रशास्त्रोपलब्धिषु ।
दुरोदरं पणे द्यूते दुरोदरोऽक्षदेविनि ॥३११॥
द्रविणं द्युम्नं च द्रव्ये कथ्यते च पराक्रमे ।
द्रव्यन्तु भेषजे भव्ये द्रविणे पित्तले तथा ॥३१२॥
दाक्षायणी स्मृता गौर्यामश्विन्यादौ च कथ्यते ।
दिवाभीतो भवेच्चौरे पेचके कुमुदाकरे ॥३१३॥
दशनोच्छिष्ट उच्छ्रासे चुम्बनाधरयोरपि ।
दरो भये तथा गर्ते मनागर्थे दराव्ययम् ॥३१४॥

दिवाकीर्त्तिस्तु चण्डाले नापिते च प्रयुज्यते ।
दक्षस्तु निपुणे शम्भुवृषे धातरि कुक्कुटे ॥३१५॥
दवो दावो वनाग्नौ स्याद् गमनेऽपि प्रयुज्यते ।
दृष्टान्तशब्द उद्दिष्ट उदाहरण-शास्त्रयोः ॥३१६॥
देवनं व्यवहारे च जिगीषाक्रीडयोरपि ।
दुन्दुभिः कथ्यते भेर्यामक्षबिन्दुत्रिकद्वये ॥३१७॥
दुर्जातं व्यसने दृष्टमसम्यग् जातवस्तुनि ।
दर्शः पक्षान्तयोगे स्याद् दृष्टौ सूर्येन्दुसंगमे ॥३१८॥
द्वीपवती भवेन्नद्यां द्वीपवान् जलधौ नदे ।
दानं करिमदाहत्योः खण्डनावनशुद्धिषु ॥३१९॥
दुकूलं सूक्ष्मवसने क्षौमेऽपि परिकीर्त्तितम् ।
देवो राज्ञि सुरे देवी महिषी-मूर्क्योरपि ॥३२०॥
द्वन्द्वं रहस्यमिथुनकलहेषु तथा युगे ।
द्योदिवौ नभसि स्वर्गे दमो दमन-दण्डयोः ॥३२१॥
दायादस्तनये ज्ञातौ दीक्षा तु यजनेऽर्दने ।
द्रवो नर्मणि निर्यासे द्रुघनो मुकुरे विधौ ॥३२२॥
दिवौकाश्चातके देवे द्वापरः संशये युगे ।
द्विजो विप्रेऽण्डजे दन्ते द्युतिः कान्तित्विषोरपि ॥३२३॥
दस्युः शठे च चौरे च द्रुतं शीघ्र-विलीनयोः ।
द्रुमो वृक्षे पारिजाते द्विजिह्वो भुजगे खले ॥३२४॥
दुर्गतिर्नरके दुःखे दिष्टिरानन्द-मानयोः ।
द्वारन्तु द्वार्युपाये च दर्शको द्रष्टृ-दुःस्थयोः ॥३२५॥
दुर्वर्णं कुवर्णे रूप्ये दुर्विधो [ निर्धने ] खले ।
दलं पत्रे दलः खण्डे दिष्टाख्या विधि-कालयोः ॥३२६॥
दोला मानान्तरे नील्यां दन्तोऽद्रिकटके रदे ।
दीप्तं स्फुरत्प्रभे दग्धे दार्वं द्योदेवदारुणोः ॥३२७॥

[ ध ]

धर्माख्या सोमपे न्याये यागाद्याचारधन्वसु ।
पुण्याहिंसास्वभावेषु सादृश्ये साधुसङ्गमे ॥३२८॥
धातुः स्याद्रसरक्तादौ महाभूते च तद्गुणे ।
श्लेष्मादावश्मविकृतौ चक्षुरादौ च कीकसे ॥३२९॥
ध्रुवं नित्ये शश्वत्तर्के ध्रुवश्च स्थाणु-कीलयोः ।
निश्चितेऽपि ध्रुवा शालपर्ण्यां स्रग्गीतिभेदयोः ॥३३०॥
धावनी स्याद् धौताञ्जन्यां रजन्यां धावनं जतौ ।
शौचे शीघ्रगतौ चापि धनदो दातृ-यक्षयोः ॥३३१॥
धारा सन्ततौ सैन्याग्रे खड्गाङ्गे वाजिनां गतौ ।
धवलो गोप्रभेदे च वरुणस्य फले तथा ॥३३२॥
धिष्ण्यं स्थानाग्निगृहेषु नक्षत्र-बलयोरपि ।
धन्व स्थलेऽथ कोदण्डे धन्वा तु मरुमण्डले ॥३३३॥
धराख्या कच्छिस [कूर्मेशे ?] भूमौ शैले कार्पास तूलयोः ।
धिषणः स्यात् सुराचार्ये धिषणा बुद्धि-निद्रयोः ॥३३४॥
धाम तेजसि गेहे च प्रभाव-जन्मनोरपि ।
धर्मराजो यमे बुद्धे कथ्यते च युधिष्ठिरे ॥३३५॥
धात्री त्वामलकीभूम्योरुपमातरि चेष्यते ।
धृतिः सौख्ये च धैर्ये च धारणे चाध्वरे स्थितौ ॥३३६॥
धवला गवि धवलश्चारौ शुभ्रे वृषे रवे ।
ध्वजो लिङ्गे पताकायां चिह्ने पूर्वदिशो गृहे ॥३३७॥
धनन्तु गोधने वित्ते धनञ्जयोऽग्नि-पार्थयोः ।
धीरः संख्यावति धैर्ययुक्ते च कथ्यते बुधैः ॥३३८॥
धूर्त्तः खले च धुस्तूरे धूतं त्यक्ते च कम्पिते ।
धमनी स्याच्छिराकन्ध्योर्धवो वृत्ते नरे प्रभौ ॥३३९॥

धेनुका धेनुहस्तिन्योर्धराद्यश्चातके हये ।
धर्षणं रताभिभूत्योर्ध्वांक्षः काके बकेऽपि च ॥३४०॥
धाराङ्कमवतारेऽसौ धोद्रा सुताभियोरपि ।
धूमकेतुरुत्पातेऽग्नौ धिक् निर्भत्सन-निन्दयोः ॥३४१॥

[ न ]

निष्कमष्टोत्तरस्वर्णशते हेम्नि च तत्पले ।
उरोविभूषणे कर्षे दीनारेऽपि प्रयुज्यते ॥३४२॥
निःसरणं भवेद् याने मारणे भवनिर्गतौ ।
उपाये निर्गमद्वारे नाकः स्वर्गान्तरीक्षयोः ॥३४३॥
नागो गजे काद्रवेये नागं सीसकरङ्गयोः ।
निर्वेशो मूर्छने स्यात उपभोगे च वेतने ॥३४४॥
नीवी जघनवस्त्रस्य ग्रन्थौ मूलधने तथा ।
नभाः प्रावृषि वृद्धे च श्रावणे च नभोऽम्बरे ॥३४५॥
निकायो लक्ष्ये संघे च भूरिवस्तुचये गृहे ।
निगमो नगरे वेदे निश्चये च वणिक्पथे ॥३४६॥
निर्द्वेटः परकीलीनप्रिये निर्दयभाषिणि ।
निर्वातो दृढसन्नाहे निवासे वातवर्जिते ॥३४७॥
निर्वृतिर्मनसस्तोषे मोक्षेऽस्तमय-वाडयोः ।
नेत्रमक्षे गुणे वस्त्रभेदेऽलिवृक्षमूलयोः ॥३४८॥
निर्यूहो नागदन्ते च निर्यासे द्वारि शेखरे ।
निष्क्रमो बुद्धिसामर्थ्ये निर्गमे दुष्कुले तथा ॥३४९॥
निर्भत्सनं खलीकारे दृष्टमेतदलक्तके ।
निह्नवस्त्वपलापे स्याद् विश्वासे निष्कृतावपि ॥३५०॥
निशाचरी शिवाऽसत्योर्निशाचरोऽहि-रक्षसोः ।
निर्यातनं वैरशुद्धौ दाने न्यासार्पणे तथा ॥३५१॥

निर्वासनं वधे दृष्टं नगरादेर्बहिष्कृतौ ।
नाशोऽनुपलम्भेऽदृष्टौ निधने च पलायने ॥३५२॥
निर्देशः कथने दृष्ट आज्ञायां देशवर्ज्जिते ।
न्युब्जं कर्मरङ्गफले न्युब्जोऽधोमुख-कुब्जयोः ॥३५३॥
नाभीलं मेखलाबन्धे वरस्त्रीरक्षणेऽपि च ।
नियामकः पोतवाहे दृश्यते च नियन्तरि ॥३५४॥
नन्द्यावर्त्तो गेहभेदे तथा तगरपादपे ।
स्यान्नागराजिको* राजहस्तिप्रासगणस्थयोः ॥३५५॥
नक्षत्रनेमिः शीतांशौ रेवत्यामपि दृश्यते ।
निष्ठा नाशेऽन्तनिष्पत्त्योर्याच्ञानिर्वाहयोरपि ॥३५६॥
नासा द्वारोर्द्धकाष्ठे स्यान्नासिकायां च कीर्त्तिता ।
न्युङ्खः सामवेदोङ्कारषट्के चात्यन्तसुन्दरे ॥३५७॥
निर्यानं हस्तिनेत्रान्ते निर्गमे मरणे तथा ।
नितम्बः स्त्रीकटीपश्चाद्देशे योषित्कटावपि ॥३५८॥
निह्नुतः स्याद्विप्रलब्धे तथा विप्रकृतेऽपि च ।
निरस्तन्तु विरामे स्यात्तथा त्वरितभाषिते ॥३५९॥
नाभिः प्राण्यङ्गचक्रान्तक्षत्रियेषु नृपोत्तमे ।
स्यान्निस्तरणमुपाये तरणेऽपि प्रयुज्यते ॥३६०॥
निराकृतिर्निराकारे प्रत्यादेशेऽथ निर्जये ।
नाडी देहशिरायां स्यान्नाल-कालप्रभेदयोः ॥३६१॥
भवेन्निरसनं घाते क्षेपणेऽपि प्रयुज्यते ।
निकारः स्यात् परिभवे धान्यस्योत्क्षेपणे तथा ॥३६२॥
नियमो यन्त्रणायां तु व्रते संविदि निश्चये ।
निषधो देशेऽद्रिभेदे कठिने निषधाधिपे ॥३६३॥

---

* कोषान्तरेषु नागवारिक इत्युपलभ्यते ।

निर्वाणं निर्वृतौ मोक्षे विनाशे गजमज्जने ।
न्यग्रोधस्तु वटे व्यामे न्यग्रोध्यौषधिकान्तरे ॥३६४॥
निगद्यते निशमनमालोकने श्रुतावपि ।
निरूपणं विचारे तु दर्शनेऽपि प्रकीर्त्तितम् ॥३६५॥
नैगमः पौरवणिजोर्नग्नः क्षपणवन्दिनोः ।
नीलकण्ठः शिखिन्युग्रे नरेन्द्रो वार्त्तिके नृपे ॥३६६॥
निर्देशः परिसंवादे निन्दापवादकुत्सयोः ।
निर्ग्रन्थः क्षपणे निःस्वे श्रेयसं शिवेऽमृते ॥ ३६७ ॥
नरः पार्थे मनुष्ये च नालीकश्चाब्ज-बाणयोः ।
निसर्गः स्वभावे सृष्टौ कृशानुशोकयोः ॥ ३६८ ॥
निदाघः स्वेदोष्मोष्णेषु निग्रहो भर्त्सनेऽवधौ ।
निजं नित्ये तथात्मीये निशान्तं गृह-शान्तयोः ॥ ३६९ ॥
नियतिः संयमे दैवे निरोधो रोध-नाशयोः ।
निर्गुण्डीन्द्राणीशेफाल्योर्निस्त्रिंशं क्रूरखड्गयोः ॥ ३७० ॥
निकृतिस्तु शठे शाठ्ये निधनं वंशनाशयोः ।
निमित्तं कारणे चिह्ने न्यक्षं कार्त्स्न्यनिकृष्टयोः ॥३७१॥
निषङ्गः सङ्गतौ तूणे निपाकः स्वेदपाकयोः ।
नलिनी पद्माकरेऽब्जे च नलं बन्धनभुम्नयोः ॥३७२॥
निभो व्याजे समाने च नगः पर्व्वतवृक्षयोः ।
नाम प्राकाश्यसम्भाव्यकुत्साभ्यु स्वीकृतेऽव्ययम् ॥३७३॥
ननु प्रश्नेऽप्यनुज्ञायां सम्बुद्धाववधारणे ।
नु पृच्छायां विकल्पे च नूनं निश्चित-तर्कयोः ॥३७४॥
नानोभयस्मिन्नेकेच निर्निश्चयनिषेधयोः ।

प

प्रत्ययः शपथे हेतौ ज्ञानाधीनगमादिषु ॥३७५॥
प्रथितत्वे च विश्वासे प्रख्याते परिकीर्त्तितः ।

अजयपालकृतो

# नानार्थसंग्रहः

## पूर्वानुवृत्तिः

पद्मोऽम्बुजे च संख्याने नागे ना च प्रकीर्त्तितः ।
पद्मं द्विरदबिन्दौ च पद्मा भार्गी-श्रियोरपि ॥३७६॥
परिग्रहः कलत्रे च मूलस्वीकारयोरपि ।
शपथे परिवारे च राहुवक्त्रस्थभास्करे ॥३७७॥
पदं भवे परित्राणे व्यवसाये* च कीर्त्तितम् ।
वाक्ये वस्तुनि शब्दे च दिग्गजेत्तुप्रभेदयोः ॥३७८॥
पुष्करं हस्तिहस्ताग्रे तीर्थ-भेषजभेदयोः ।
व्योम्नि खड्गफले पद्मे तूर्यवक्त्रे जलेऽपि च ॥३७९॥
[ प्रकृति... ... ... ... ]
स्वभावे पङ्कजे चैव पौरामात्यादियोनिषु ॥३८०॥
सत्त्वरजस्तमःसाम्ये प्रत्ययात् प्रथमे तथा ।
पूर्णानकं पूर्णपात्रं वलयस्वीफयज्जितम् (?) ॥३८१॥
यत्र तत्र यथासंख्यं पूर्णं पटह-पात्रयोः ।
प्राक् प्रत्यग् द्वितयं देशे दिशि कालेऽव्ययं स्मृतम् ॥३८२॥
प्राच्ये चैव प्रतीच्ये च वर्त्तमाने त्वनव्ययम् ।
†पादोऽङ्घ्रौ च तुरीयांशे गिरेः प्रत्यन्तपर्वते ॥३८३॥
दीधितौ तरुमूले [च] पुराख्या गुग्गुलौ पुरि ।
पौरुषेयं भवेत् कार्ये पादान्तरेष्वपि क्वचित् ॥३८४॥

---

* व्यवस्थायाञ्च—ख

† पद—ख

प्रदोषोऽपि निशाद्यायां कदाचिद् रात्रिमात्रके ।
प्रभवा जन्महेतौ स्यात् पयोमूले पराक्रमे ॥३८५॥
आद्योपलब्धये स्थाने* पार्श्वशक्तलक्षणाम् (?) ।
प्लवो भेके कूपे भेले शब्दे च श्वपचे† प्लुतौ ॥३८६॥
‡क्रमनिम्नमहीभागे पक्षिभेदे जलोत्तरे [ जलान्तरे ? ] ।
भवेत् परिकरो वृन्दे परिवार-विवेकयोः ॥३८७॥
प्रारम्भ-गात्रिकाबन्ध-पर्यङ्केषु परिच्छदे ।
प्रसवः शाखिनां पुष्पे फलेऽथ गर्भमोचने ॥३८८॥
परम्पराप्रसङ्गे च जनना-पत्ययोरपि ।
पणो विक्रय्यशाकादिमुष्टौ द्यूते भृतौ ग्लहे ॥३८९॥
व्यवहारे §पुराणोऽर्थे मूल्ये गण्डकविंशतौ ।
पक्षः सख्यौ बले साध्ये करिपार्श्व-विरोधयोः ॥३९०॥
गरुत्-सहाययोश्चुल्लीरन्ध्रे केशात् परश्चये ।
प्रतिग्रहः क्रियाकारे सैन्यपृष्ठे पतद्ग्रहे ॥३९१॥
द्विजदेयग्रहे तस्य स्वीकारे च प्रयुज्यते ।
पुण्डरीकं सितच्छत्रे सिताम्भोजे च कीर्त्तितम् ॥३९२॥
पुण्डरीको व्याघ्रभेदे §§पाकः पचनडिम्भयोः ।
पक्ष्म सूत्रे च सूक्ष्मांशे नेत्रलोमनि वर्त्तते ॥३९३॥
दृष्टं पुष्पच्छदे वापि प्रतिघा रोष-घातयोः ।
प्रग्रहो भासि योक्त्रे च बन्धाश्च नियमे तथा ॥३९४॥
तुलासूत्रे सुवर्णालौ प्रतीकोऽङ्ग-प्रतीकयोः ।
भवेत् प्रतिसरः सूत्रे व्रणशुद्धौ चमूकटौ ॥३९५॥

---

* आद्योपलब्धायेष्टौ—भा † प्लवो भेके कपौ भेगालधंच पवे प्लुतौ—भा
‡ प्रवनिके
§ पुराण—कार्षापण । §§ पचने पाकडिम्भयोः—भा

मण्डलाग्रयोः प्रैष्ये प्रकाशः स्फुट-रोचिषोः ।
प्रमाणं कारणे माने शास्त्रे सत्यप्रवक्तरि ॥३९६॥
मर्यादायां तथा नित्ये पर्णाख्या किंशुके दले ।
*पालिः श्रोत्रलतायां स्यात् प्रदेशे पङ्क्ति-चिह्नयोः ॥३९७॥
†दृष्टश्मश्रुस्त्रियामस्त्री पर्यायोऽवसरे क्रमे ।
पर्व प्रतिपत्पक्षान्तसन्धौ विषुवदादिके ॥३९८॥
ग्रन्थिप्रस्तावयोश्चापि प्रीतिः प्रेम-प्रमोदयोः ।
‡कुरङ्गे च प्रपौत्रे च तनये[ऽपि] निगद्यते ॥३९९॥
परम्परा सन्तानेऽपि पङ्कः पापे च कर्दमे ।
पाशः कर्णादिहेम्नि स्यात् समूहे केशपूर्वकः ॥४००॥
खड्गादिबन्धने चापि प्रसूनं कुसुमे फले ।
परागः पुष्परेणौ स्यात् पानीय-रजसोरपि ॥४०१॥
प्रतीतः प्रथिते दृष्टो हृष्टज्ञानमनीषिषु ।
पौरुषं नृभुजोन्माने पुंसो भावे च कर्मणि ॥४०२॥
परिवेशो रवेर्बिम्बे मण्डले वेष्टने तथा ।
पिप्पल्याख्या §सलिले च वृत्त[वस्त्र]च्छेदविशेषयोः ॥४०३॥
प्रकरः स्तबके पुष्पे समूहेऽपि प्रयुज्यते ।
पार्ष्णिरुन्मत्तयोषायां सैन्यपृष्ठाङ्घ्रिमूलयोः ॥४०४॥
पिणाकः स्याद्रजोवर्षे शम्भोर्धन्वनि शूलके ।
पाचनो रन्धनद्रव्ये पाचनं पाचने मतम् ॥४०५॥
पातनी रन्धनस्थाल्यां वागुरायामपि क्वचित् ।
पतङ्गः शलभे सूर्ये शालिभेदे च पक्षिणि ॥४०६॥

---

* प्रमाणच्च लतायां—आ † दृष्ट श्मश्रुस्त्रियामस्त्री—आ

‡ कदाचित् "प्रतिनप्ता प्रपौत्रे च" इति वा "अनङ्गस्य कलत्रे च योगभेदे निगद्यते" इति वा स्यात्।

§ वस्त्रवृक्षभेदच्छेदविशेषयोः—आ

*प्रसूतिः प्रसूते† पुत्रे तनयायामपि स्मृता ।
पवनं कुम्भकृत्पाकस्थाने स्यात् पवनोऽनिले ॥४०७॥
पक्षतिस्तु गरुन्मूले तथा प्रतिपदि स्मृता ।
पर्याप्तं यथेष्टे शक्ते तृप्तौ निवारणे तथा ॥४०८॥
पटुस्तीक्ष्णे स्फुटे दक्षे पटोले निष्ठुरारुजोः ।
परीष्टिः परिचर्यायां दृश्यते च गवेषणे ॥४०९॥
प्रदरो रोगभेदे स्याद् विदारे बाण-भङ्गयोः ।
पुलकस्तुच्छधान्ये स्यात् संक्षेपे भक्तसिक्थके ॥४१०॥
‡पललं तिलमिश्रे च पिशिते कर्दमान्तरे ।
परिवारः परिजने दृष्टः खड्गपिधानके ॥४११॥
§पक्को विनाशाऽभिमुखे जने परिणते [ त्रिषु ] ।
पक्षचर एकचरे यूथभ्रष्टे विहङ्गमे ॥४१२॥
पादपः पादपीठेऽपि तरौ पादरथे तथा ।
पीलुः पुष्पे गजे वृक्षे काण्डे तालास्थिखण्डके ॥४१३॥
प्रेतः परेतो ना मृते [तथा] भूतान्तरेऽपि च ।
प्रतिश्रयः सभायां स्यादाश्रये मन्दिरेऽपि च ॥४१४॥
पिण्डमाजीवने देवे निवापे गोलके तथा ।
प्रायो मरणबाहुल्यतुल्येष्वनशनेऽपि च ॥४१५॥
परिवापो जलस्थाने स्यादावापे¶ परिच्छदे ।
पल्लवो विटपे** षिड्गे पाले किशलये तथा ॥४१६॥
परिघो मुद्गरेऽस्त्रे च कथ्यते शूल-घातयोः ।
पुरस्कृतोऽतिशस्ते च पूजिते चाग्रतः कृते ॥४१७॥

---

* प्रसूतः—भा
† प्रसुते—उत्पादे
‡ पुलकित् चित्तहर्ते च पिशितं कर्दमान्तरे—भा
§ पक्को विलासेऽभिमुखे—भा
¶ स्थाप्यजीवे—भा
** विसरे—भा

प्रसिद्धः प्रजव-ख्यात-कृतप्रसाधनेषु च ।
प्रणीतः संस्कृताग्नौ स्याद् विहितेऽपि प्रवेशिते ॥४१८॥
पुलकः कृमि-रोमाञ्च-प्रस्तरेषु प्रयुज्यते ।
पटलञ्चनि पिटके नेत्ररोगसमूहयोः ॥४१६॥
प्रियकः कदम्बफल्यां पीतसाले मृगान्तरे ।
प्रकाण्डो विटपे शस्त्रे तरुशाखाशिफान्तरे ॥४२०॥
पृषच्च पृषतो बिन्दौ प्रायश्चित्ते प्रयुज्यते ।
प्रवणं क्रमनिम्ने च प्रह्वे चतुष्पथेऽपि च ॥४२१॥
प्रकोष्ठः कूर्परान्नीचे कक्षायामपि दृश्यते ।
प्रघनोऽपि बहिर्द्वारेऽलिन्दके लोहमुद्गरे ॥४२२॥
पाटला गवि पुष्पे च पाटलो व्रीहि-वर्णयोः ।
परिभाषणञ्च नियमे निन्दोपालम्भवाक्ययोः ॥४२३॥
प्रग्रहस्तु तुलासूत्रे* रश्मावपि च वाजिनाम् ।
पेचकः करिलाङ्गूलमूल-कौशिकयोरपि ॥४२४॥
प्रतियत्नस्तु संस्कारे तथोपग्रन्थ-लिप्सयोः ।
पत्तिः सैन्यप्रभेदे स्यात् पदातौ गमने तथा ॥४२५॥
प्रणयः प्रेम-विश्रम्भ-याञ्चासु च प्रकीर्त्तितः ।
प्रथमं प्रमुखं चादौ प्रधाने परिकीर्त्तितम् ॥४२६॥
पारायणं भवेत् कार्त्स्न्ये समासङ्गेऽपि कीर्त्तितम् ।
परिबर्हो नृपार्हे स्याद् दृश्यते च परिच्छदे ॥४२७॥
पार्श्वं चावयवे जन्तोर्वक्रोपाये च कीर्त्तितम् ।
पराख्या केवले श्रेष्ठे रिपौ योग्ये स्वतोऽन्यतः ॥४२८॥
भवेत् प्रतिकृतिः ख्यातौ प्रतिमा-प्रतिकारयोः ।
अस्ति प्रतिहतो द्विष्ट-प्रतिस्खलितयोरपि ॥४२६॥

* प्रतियत्नस्तुलासूत्रे—श्वा

भवेत् पिप्पलकं स्यूतिसूत्रे च स्तनचूचुके ।
पलाशाख्या हरिद्रच्छःशठोषु† किंशुके दले ॥४३०॥
भवेत् प्रणिहितं प्राप्ते न्यस्ते चापि समाहिते ।
प्लवङ्गमः प्लवङ्गश्च मतो वानर-भेकयोः ॥४३१॥
परमं स्वीकरेऽसंख्यं परमस्तु परेऽपि च ।
प्रतिमानं प्रतिमेभदन्तद्वितयमध्ययोः ॥४३२॥
भवेत् प्रवचनीयाख्या प्रवाक्ये च प्रवक्तरि ।
प्रासादो विबुधावासे निवासे च महीभुजाम् ॥४३३॥
भवेत् प्रवचनं वेदे कल्याणभाषिते मतम् ।
पिण्याकः सिह्लके दृष्टस्तिलकल्के च कुत्रचित् ॥४३४॥
पराक्रमः समुद्योगे प्राणमात्रे च दृश्यते ।
पराभवः परिभवे नाशेऽपि परिकीर्त्तितः ॥४३५॥
प्रलयो मृत्यु-संवर्त्त-मूर्च्छासु परिकीर्त्तितः ।
प्रणाय्यो लोभनिर्मुक्ते स्यादसम्मत एव च ॥४३६॥
भवेत् परिमलः ख्यातो गन्धे जनमनोहरे ।
प्रतिरूपः सहाये च वार्त्ताहारे पुरोगमे ॥४३७॥
पितसन् पिपतिषन्तुभौ पतनेच्छु-विहङ्गयोः ।
पूर्वस्तु पूर्वपुरुषपुरस्तादग्रजेष्वपि ॥४३८॥
पिशुना मता स्पृक्कायां पिशुनः सूचके खले ।
पुरस्तु गुग्गुलौ दृष्टः पुरं पूर्देहरश्मिषु ॥४३९॥
पवित्रं यज्ञोपवीते कुशे पूते च दृश्यते ।
प्रतिपादनं प्रतिपत्तौ पटो रोमपटे मृगे ॥४४०॥
पतिः प्रभौ गतौ मूले पारावतः खगे मृगे ।
पुष्टो रोमणि पाषाणे पामरः खल-नीचयोः ॥४४१॥

---

† हरिद्राख्यषष्ठीषु—श्रा

पारदः क्षपणी-गुर्वोः पार्थिवो भुवने नृपे ।
प्रवेणी तु कुथे वेण्यां पुद्गलश्चाऽऽत्म-देहयोः ॥४४२॥
प्रगाढं कठिने कृच्छ्रे * प्रवापो देह-वेश्मनोः ।
प्लक्षो जव्यां गर्द्दभाण्डे पोतः शिशु-वहित्रयोः ॥४४३॥
पद्धतिः पथि पङ्क्तौ स्यात् पूर्वश्च खण्ड-साध्ययोः ।
प्रतिष्ठा यशसि स्थाने पत्री श्येने खगे शरे ॥४४४॥
प्राणो वायौ वने जीवे पुङ्गवो वृषभे वरे ।
प्रज्ञः प्राज्ञे स्त्रियां बुद्धौ पिण्डितं गलिते घने ॥४४५॥
पृथग्जनोऽधमे मूर्खे पृथुकश्चिपिटेऽर्भके ।
पुरुषो नाथतुङ्गेषु पटः पियाल-वस्त्रयोः ॥४४६॥
पयोधरः स्त्रीस्तनेऽब्दे पयः क्षीरे तथाऽम्भसि ।
प्रयोजनं योग-हेत्वोः प्रेम स्निग्धत्व-नर्मणोः ॥४४७॥
पक्तिः स्याद् गौरवे पाके प्रतिपत् तिथि-संविदोः ।
प्रतीहारो द्वाःस्थ-द्वारोः प्रेक्षा धीर्नृत्यदर्शयोः ॥४४८॥
प्रस्थः सानुनि माने च प्रततिस्तति-वीरुधोः ।
पत्रं पक्षे दले युग्ये प्रार्थितं याचिते हते ॥४४९॥
प्रपञ्चो विस्तरे दम्भे पातालं क्ष्मातलौर्वयोः ।
प्रकारो भेद-सदृशोः प्रियङ्गुः कङ्गु-वृक्षयोः ॥४५०॥
†प्रहतं क्षुण्णे वितते प्राप्तिर्लाभे तथोदये ।
प्रविदारणं भिदाज्योः पीतिः पान-तुरङ्गयोः ॥४५१॥
प्रज्ञानं धी-लक्षणयोः पूगः क्रमुक-वृन्दयोः ।
प्रवृत्तिर्वृत्तौ वार्त्तायां पुरुषो मनुजात्मनोः ॥४५२॥
पुष्पं प्रसून-रजसोः पेशलं चारु-दक्षयोः ।
प्रोक्षणं तु वधे सेके प्रैष्यः प्रेषण-पीडयोः ॥४५३॥

---

* प्रविणी क्वतके—श्रा          † प्रभूतं क्षुण्णे व्यूने—श्रा

प्रसूरश्व-जनन्योश्च प्रणिधिः प्रार्थने चरे ।
प्रश्रयः प्रणये वेगे प्राप्तौ लब्धे समप्रसे ॥४५४॥
पिच्चिण्डः कुक्षौ पश्चन्ते पोत्रं कोलाहलास्ययोः ।
पिङ्गः क्लिन्नदृक्-क्लिन्नाक्षणोः पुष्यो मासर्क्षयोः स्मृतः ॥४५५॥
पलं माने च मांसे च पलाशी राक्षसे द्रुमे ।
*प्लक्षः पिप्पल-पर्कट्योः पार्थिवो भूभवे नृपे ॥४५६॥
प्रागरूपोऽभिरूपे च पल्लिर्ग्राम-निवासयोः ।
पर्य्युपोपर्यु पर्यन्तः पूजा सम्मान-लोकयोः ॥४५७
प्रत्याभिमुख्ये वीप्सायां लक्षण-प्रतिदानयोः ।
इत्थम्भूतस्य †चाख्याने मात्रार्थे तुल्य-भागयोः ॥४५८॥
पुरा प्रबन्ध-निकट-चिरन्तनेष्वनागते ।
पूर्वेद्युः पूर्वदिवस-प्रत्यूषयोरुदाहृतम् ॥४५९॥
पुरस्तात् प्रथमे प्राच्यां पुरार्थे च पुरस्तथा ।
पुनरप्रथमे भेदे प्राक् तुल्येऽन्तर-पूर्वयोः ॥४६०॥
पश्चात् प्रतीच्यां चरमे प्रादुः स्फुटे च सम्भवे ।

[ फ ]

फलं लाभे फलोऽस्त्राग्रे व्युष्टौ हेतूत्थसम्पदोः ॥४६१।
फली च फलके वृक्षे प्रियङ्गु-मतस्यभेदयोः ।
फेनिलं फेनसंयुक्ते बदरी-विटयोरपि ॥४६२॥
फालः स्यात् कृषके फाले फल्गु रेणु-विसारयोः ।

ब

बलो रामेऽसुरे काके बला वाट्यालके बलम् ॥४६३॥
स्थौल्ये शक्तौ तथा रूपे पूतनायां बलान्विते ।
बहुलः कृष्णपक्षेऽग्नौ मेचके बहुलं द्वयोः‡ ॥४६४॥

* पुक्षश्च पिप्पपर्कटीः—भा † चये व्रतस्य—भा ‡ बहुनि पयोः—भा

बहुला त्रुटि*-माहेयी-कृत्तिकासु प्रकीर्त्तिता ।
बलिः करे दैत्यभेदे पूजायां गृहदारुणि ॥४६५॥
जठरावयवे चापि जराशिथिलचर्मणि ।
बालिका वालूकायान्तु कुमार्यां कर्णभूषणे ॥४६६॥
बालकं कटके दृष्टमङ्गुलीयेऽपि कुत्रचित् ।
बृत्तं छन्दसि वृत्तौ च निस्तलातीतयोरपि ॥४६७॥
दृढाधीतचरित्रेषु बल्लभाऽध्यक्ष-कान्तयोः ।
बडवा कुम्भदास्यां स्यादश्वायां योषिदन्तरे ॥४६८॥
बारवाणिर्धर्माध्यक्षे भवेत् संवत्सरे क्वचित् ।
बाहुजः क्षत्रिये दृष्टो गृहासक्तशुके क्वचित् ॥४६९॥
बभ्रुः स्यान्नकुले पिङ्गे विपुले गरुडध्वजे ।
बलजा क्षेत्रे मत्स्ये च पुरद्वार-स्त्रियोर्मता ॥४७०॥
बन्धुलं बन्धुलीनम्र सुन्दरेऽपि प्रयुज्यते ।
बाणिनी तु विदग्धायां नर्त्तकी-मत्तयोषितोः ॥४७१॥
बिटपः पल्लव-स्तम्ब-शाखासु विटनायके ।
बालो डिम्बार्भकेशेषु ह्रीबेरे श्वेतवालधौ ॥४७२॥
बाणो दानवभेदे तु शरे बाणं फलेऽपि च ।
बेला कालेऽब्धिकूले च मर्यादाम्बुविकारयोः ॥४७३॥
बृहती क्षुद्रवार्त्ताकी-छन्दः-क्षुद्रात्रासनवरादिषु ।
बत्सं वक्षसि बत्सस्तु तर्ण-वर्ष-सुतादिषु ॥४७४॥
बीभत्सो विकृते पापे क्रूरे पापि-घृणात्मनोः ।
बराटकः सरोजस्य बीजकोषे कपर्दके ॥४७५॥
ब्रह्म वेदात्मतपःसु ब्रह्मा विप्रे प्रजापतौ ।
द्वादशाङ्गुले बितस्तिः स्यात् प्रशान्तेऽङ्कुशकर्मणि ॥४७६॥

---

* एला

बल्गुकं रुचिरे दृष्टं चन्दने विपिने परो ।
ब्राह्मण्यं ब्रह्मणो भावे ब्रह्मविद् वेदवित्तरि ॥४७७॥
मुखे चाव्यवहारे च विप्रे च भाषितासयोः ।

[ भ ]

भाण्डं मूलधने पात्रे भण्डवृत्तौ प्रकीर्तितम् ॥४७८॥
भिन्नं विदारिते दृष्टं व्यतिरिक्ते च मिश्रिते ।
भुजिष्यः स्यादनायत्ते प्रेष्ये च हस्त-खातयोः ॥४७९॥
भंगा शणतूणे* भङ्गो भेद-वीच्योः† पराजये ।
भारः सहस्रद्विलग्ने पलानां चापि वीवधे ॥४८०॥
भूजम्बुरपि गोधूमे वैकंकतफले तथा ।
भंडनं कवचे युद्धे खलीकारे च दृश्यते ॥४८१॥
भेदो विदारणे दृष्ट उपजाप-विशेषयोः ।
भिक्षा सेवा-प्रार्थनयोर्भृतौ भिक्षितवस्तुनि ॥४८२॥
भृङ्गमुक्तादिभृङ्गश्च धूम्याटे षट्पदेऽपि च ।
भागधेयः करे भाग्ये दायादेऽपि च दृश्यते ॥४८३॥
भवो भद्राप्तिसत्तासु शिव-संस्कार-जन्मसु ।
भोगवती तु नागानां नगर्यां च प्रकीर्त्तिता ॥४८४॥
[भद्राख्या............
राज्ञायां भद्रवर्षे तु समार्थां च गजे शुभे ।
भूयोऽव्ययं पुनरर्थे भूयान् बहुतरे मतः ॥४८५॥
भव्यं योग्ये च कल्याणे भाविन्यपि श्रुतं क्वचित् ।
भङ्गः पराजये दम्भे गमने जलनिर्गमे ॥४८६॥
भीमो वृकोदरे शम्भौ दृश्यते च भयानके ।
भवेद् भगवती गौर्यां भगवान् बुद्ध-पूज्ययोः ॥४८७॥

---

* गणपतने—पा०

† भेदवीयों—पा०

भूतिकं भूमिनिम्बे च यवान्यां च तृणे तथा ।
भुवनं पिष्टपे तोये भ्रूणः स्त्रीगर्भ-पोतयोः ॥४८८॥
भेलो दिवाकरे चन्द्रे भुजङ्गः षिड्ग-सर्पयोः ।
भ्रातृव्यो भ्रातृजे शत्रौ भ्रमरोऽलिनि कामुके ॥४८६॥
भूतात्मा तु विधौ देहे भक्तिर्भावे च सेवने ।
भूमिर्भूश्च क्षितौ स्थाने भरोऽतिशय-भारयोः ॥४६०॥
भीरुः शतावरी भीते भानुर्दिनकरे त्विषि ।
भागो भाग्य एकदेशे भेलः प्लवे च भीरुके ॥४६१॥
भित्तिः कुड्ये प्रदोषे च भूतिर्भस्मनि सम्पदि ।
भरणं वेतने भृत्ये भूभृद्भूपाल-शैलयोः ॥४६२॥
भूमिस्पृग् वैश्य-नरयोर्भर्त्ता स्वामिनि धारके ।
भूरि प्राये सुवर्णे च भर्म चामीकरे भृतौ ॥४६३॥

[ म ]

मध्यमा स्याद् दृष्टरजोनार्यां मध्याङ्गुलेऽपि च ।
मध्यमी हेतुमध्ये तु मध्यमाङ्गुलिगह्वरे ॥४६४॥
मात्रा परिच्छदे माने स्तोके कर्णविभूषणे ।
अक्षरावयवे द्रव्ये यात्रायां कालभेदके ॥४६५॥
मण्डलं ग्रामसन्दोहे परिधौ प्रतिबिम्बके ।
वृन्दे शुनि मृगे चापि बिम्बे द्वादशराजके ॥४६६॥
महावीरो मृगेन्द्रेऽपि तार्क्ष्ये शूरे मखाग्निषु ।
सुभटे रश्यो श्वे तार्क्ष्ये प्रवरे खगे (?) ॥४६७॥
मत्सरः कृपणाढ्ये स्यात् परस्वे द्रोहकारिणि ।
महामुनिः कृपे काले मन्युर्दैन्ये क्रतौ क्रुधि ॥४६८॥
मधुर्दैत्यान्तरे चैत्रे मधुके सुरभौ-मधु ।
क्षौद्रे पुष्परसे मद्ये मह उत्सव-तेजसोः ॥४६६॥

मन्दो मूढे च रोगार्त्ते स्वैरेऽभाग्ये शनैश्चरे ।
प्रलये द्विपभेदे च मरुः शैले च धन्वनि ॥५००॥
मणिर्दोले च मेढ्राग्रे रत्ने चाजगलस्तने ।
मल्लिर्मत्स्यविशेषे च करङ्के च कपालके ॥५०१॥
मूर्द्धाभिषिक्तो राजन्ये प्रधाने पृथिवीपतौ ।
मन्थरः सूचके मन्दे तथा वैशाख-कोपयोः ॥५०२॥
महामात्रः समृद्धे तु हस्त्यारोहाधिपेऽपि च ।
मौलिः संयतकेशे च चूडामुकुटयोरपि ॥५०३॥
माधवोऽपि वसन्ते च राधेशे दृश्यते तथा ।
मदनाख्या स्मरे वृक्षे मधूच्छिष्ट-वसन्तयोः ॥५०४॥
मञ्जुलो रमणीये तु जलरङ्कविहङ्गमे ।
माणवको भवेद् बाले हारभेदे कुपूरुषे ॥५०५॥
मङ्गलम्भविके हृष्टं तथा लब्धानुरञ्जणे ।
महालयस्तु वीहारे वीक्षिते परमात्मनि ॥५०६॥
मागधी पिप्पली-शुण्ठ्योर्बन्दियोषिति युज्यते ।
मृगः पशौ मार्गशीर्षे एणे यज्ञे भभेदयोः ॥५०७॥
मधुका मधुयष्टी च मधुकः स्तुतिपाठके ।
माता तु गवि रेवत्यां सेनानी-पितृयोषितोः ॥५०८॥
मिथुनं यूथ-दम्पत्योर्मिथुनो राशिभेदतः ।
मूलं निजे शिफायां स्याद् ऋक्षभेदेऽपि सन्निधौ ॥५०९॥
मानं प्रसूतिप्रस्थादौ मानश्चित्तसमुन्नतिः ।
मार्गो गवेषणे मासभेदे मृगपदाध्वनोः ॥५१०॥
भवेन्मदकलो मत्तद्विपे मदास्फुटोदिते ।
महासेनो बाहुलेये महासेनापतावपि ॥५११॥
मेखला खड्गबन्धे स्यात् काञ्ची-भूभृन्नितम्बयोः ।
मेचको विदितः कृष्णे बर्हिणां बर्हिचन्द्रके ॥५१२॥

महिषी कृताभिषेकराजस्त्री-महिषस्त्रियोः ।
महाकालः स्यात् किम्पाके शङ्करे च मखान्तरे ॥५१३॥
मुखं मुख्ये च वक्त्रे स्यादादावुपाय एव च ।
मन्दारः पारिभद्रे स्याद्देवद्रुमार्कपर्णयोः ॥५१४॥
म्लिष्टं म्लानेऽप्यविस्पष्टे माःशब्दो मास-चन्द्रयोः ।
मिसिर्मांसी-शतपुष्प्योः सन्मरुद्वायु-दिवौकसोः ॥५१५॥
मर्यादा धारणा-सीम्नोर्मातङ्गः श्वपचे द्विपे ।
मैथुनं रतिसङ्गे च मन्दिरं नगरे गृहे ॥५१६॥
मलयः शैलेऽप्यारामे मूर्छितो मूढ-वृद्धयोः ।
मूल्यन्तु वेतने रम्ये मूर्त्तिः काठिन्य-काययोः ॥५१७॥
मृदुः स्यात् कोमलेऽतीक्ष्णे मृतं मृत्यौ च याचिते ।
मन्मथः कपित्थे कामे मार्गणो याचके शरे ॥५१८॥
मोचा शाल्मलि-कदल्योः मधुरं स्वादु-रम्ययोः ।
मण्डो रसाग्र एरण्डे मध्यं नाभ्यबलग्नयोः ॥५१९॥
महीस्तन्द्रयामविद्यायां मूढस्तु तन्द्रिते जडे ।
मतिरार्ये च शाके च मयूखः कर-कीलयोः ॥५२०॥
माल्यं पुष्पे पुष्पदाम्नि मुण्डो मूर्द्धनि मुण्डिते ।
मोदको हर्षके खाद्ये महद् राज्य-विशालयोः ॥५२१॥
मकराङ्कः स्मरे सिन्धावव्ययं स्यादतः परम् ।
मिथस्त्वन्योन्य-रहसोर्मुहुः स्याच्च क्षणे क्षणे ॥५२२॥

[ य ]

युतकं यौतुके युक्ते चलनाग्रे च संशये ।
स्त्रीणां वस्त्रान्तरे चैव युगले वसनाञ्चले ॥५२३॥
योगो ध्याने जये लाभे युक्तौ विश्रब्धघातिनि ।
सङ्गे समुच्चये चापि युक्ते चैव गुरौ तथा ॥५२४॥

योजनगन्धा तु वैदेही-कस्तूरी-व्यासमातृषु ।
यातयामपदं जीर्णे परिभुक्तोज्झिते तथा ॥५२५॥
युगं युग्मे च सत्यादौ चतुर्हस्त-रथाङ्गयोः ।
यमो नित्यशरीरार्थकृते यमज-कालयोः ॥५२६॥
यष्टिः शस्त्रे मधूयष्ट्यां योनिराकर-गुह्ययोः ।
यादःपतिः पाशिन्यब्धौ युक्तं युक्ते तथा पृथक् ॥५२७॥
याजनं वर्त्तने क्षेपे यन्ता हस्तिप-सूतयोः ।
यागार्हे याजनीये च ययुरश्व-मखाश्वयोः ॥५२८॥
यतिः करे तापसे च यक्षः श्रीदे च गुह्यके ।
योगाभ्यासे योगोऽवं यात्रा याचने च वर्त्तने ॥५२९॥
यथाशब्दोऽव्ययं तुल्ये कथ्यते च निदर्शने ।
यावन्माने च साकल्ये सीमायां चावधारणे ॥५३०॥

[र]

रूपं श्लोके ग्रन्थावृत्तौ नाटकादि-स्वभावयोः ।
चक्षुर्ग्राह्ये पशौ शब्दे बालके सुन्दराकृतौ ॥५३१॥
रामो दाशरथौ चारौ जामदग्न्ये हलायुधे ।
पशुभेदे सिते श्यामे रामा योषिति दृश्यते ॥५३२॥
रसो वीर्ये द्रवे रागे शृङ्गारादौ च पारदे ।
तिक्तादौ देहधातौ च विषे स्वादे रसा भुवि ॥५३३॥
रथ्या पथि प्रतोल्याञ्च रथानामपि संहतौ ।
रथ्यमंशे रथस्यैव रथ्यो रथस्य वोढरि ॥५३४॥
रैवटः शूकरे वेणौ वातूल-विषवैद्ययोः ।
रैवटं दक्षिणावर्त्तशङ्खेऽपि परिकीर्त्तितम् ॥५३५॥
रजतं धवले रूप्ये शोणिते हृद-हारयोः ।
रोहितो लोहिते मत्स्यभेद-व्यक्तेन्द्रचापयोः ॥५३६॥

रम्भा कदल्यप्सरसोः रणः संग्राम-शब्दयोः ।
रहस्तु मैथुने गुह्ये रती राग-स्मरस्त्रियोः ॥५४६॥
रैशब्दो विभवे हेम्नि रोदनं क्रन्दनाश्रुणोः ।
रोहिणी स्वरभानृत्ते राष्ट्रमुत्पत्ति-देशयोः ॥५५०॥
रदो दन्ते विलेखे च रभसो वेग-हर्षयोः ।
रोकं रन्ध्रे वोके भासि रुक्षोऽस्निग्धे निष्ठुङ्कु (?) ॥५५१॥
कुंकुमे चारुणे रक्तं रन्ध्रं दूषण-गर्त्तयोः ।

[ ल ]

ललाम[च] ललामञ्च भूषाबालधिराजिषु ॥५५२॥
चिह्नप्रभावयुक्तेषु प्रधाने ध्वज-शृङ्गयोः ।
लोचको मांसपिण्डे स्यान्नीलीरक्तांशुके तथा ॥५५३॥
भ्रुवोश्चर्मणि निर्बुद्धौ लोलः काङ्क्षिणि चञ्चले ।
लिङ्गं शेफसि चिह्ने च सांख्योक्तप्रकृतावपि ॥४५४॥
लघु देव्यां लघ्वसारे ह्रस्वमगुरु-शीघ्रयोः ।
लालाटिकः क्रियालस्ये प्रभुभालनिदर्शिनि ॥५५५॥
लक्षशब्दश्च नि लक्षञ्च संख्याभेद-शरव्ययोः ।
लेखः स्याद्देवते लेख्ये लेखा स्याद्राजि-रेखयोः ॥५५६॥
लता वल्लर्यां शाखा-कल्योः पूपिण्या माधवीषु च ।
लेपः स्यात्लेपने जग्धौ लङ्का पूर्भेद-शाखयोः ॥५५७॥
लोहित्यो व्रीहिनदयोर्लुब्धो व्याध-सतृष्णयोः ।
लीला विलास-क्रीडयो लक्ष्मीपुत्रोहयाच्ययो ॥५५८॥
लभ्यं युक्ते च लब्धव्ये लक्ष्म चिह्न-प्रधानयोः ।
लक्षणं नाम्नि चिह्ने च लालाकं भूखरेऽपि च ॥५५९॥
लोको जने पिष्टपे च लवश्छेदन-लेशयोः ।
लग्नं राश्युदये युक्ते लक्ष्मीपतिर्हरौ नृपे ॥५६०॥

संस्कृतसाहित्यपरिषत्

| | | |
|---|---|---|
| March, | १८५७-शकीये फाल्गुने | Vol. XVIII |
| 1936. | १८श-वर्षस्य ११श-संख्या | No. 11 |


# रामायणीयमध्यात्मतत्त्वम्

[ निबन्धकः—वरदराजशर्मा ]

हेतुवादावष्टम्भेन विस्रब्धमुच्छृङ्खलं च प्रवर्तमानं भारतीयानामस्माकं विज्ञानशास्त्रविवेचकंमन्यानां प्रज्ञाचक्षुः, वेदान्, पुराणानि, धर्मशास्त्राणि, चान्यादृश्यैव रीत्याऽवेक्षितुमारभतेति महदिदमामोदस्थानमथवा विषादस्थानम्। एतान्येव शास्त्राणि भारतीयानां सर्वेषां धर्माचारव्यवस्थां सामयिकाचारान् सांव्यवहारिकधर्मकलापांश्च विविधाः कलाश्चानाकुलमाकलयन्ति कालमनल्पमराजन्ततमाम्। अथचासदृशचेष्टाव्यवहारैः पाश्चात्त्यैरजनि सुदृढः सम्पर्कः तदीयव्यवस्थाभिर्व्यतिकरश्चान्वजायत। ऐहिकमभ्युदयमेव परमं पुरुषार्थं मन्यमानानां प्रभविष्णूनां पाश्चात्त्यानां धर्मव्यवस्थासम्भेदे, अलौकिके निःश्रेयसे प्रवृत्तानां भारतीयानां समुदाचारो दृढं प्रतिहत इव प्रतीपं परावर्तत।

सत्यमियं लोकोक्तिः भवितव्यता बलवतीति। यत्कोऽपि सुदृढः सुप्रतिष्ठितो निर्दोषश्च क्षीयते न तत्र परप्रकर्षो गुणवत्ता च निमित्तम्, किन्तर्हि विचित्रा अचिन्त्यप्रभावा दैवी गतिः। एकपद एव पूर्वाचार्यकृता व्यवस्था तेषामेव चाऽऽचाराः किं बहुना सर्वमेव प्रत्नं रत्नजातं मृतकल्पमशोभनमज्ञचेष्टित-

मनर्थावहं राज्यममुन्ननिपरिपन्थीनि च मिथ्याप्रत्ययो बहूनामस्माकं मनांस्याक्रन्दयति। नैके चोपद्रवाः भवन्ति अदृष्टपूर्वस्याश्रुतचरस्यापि सामयिकाचारस्य सांव्यवहारिकधर्मसन्ततेश्च। इदमेव सा दुःखकथाऽस्माकम् अतीतेषु विंशत्यां शतकेषु यामाद्याश्च भारतपुण्यपुञ्जायमानाः श्रुतिस्मृति-कल्पलतिकानिकुञ्जायमानाश्चानेके सुजनाः क्लिश्यन्तितमाम्।

कियत्स्वेव धार्मिकपरिगृहीतेषु महान्तमुद्वेगसन्दोहमनभिष्वङ्गं चोपजनयन्ती अभ्युदयलिप्सा स्वातन्त्र्यलोभश्च नितरां नश्चित्तमुत्तेजयति। अभ्युदयभावना सत्यपि चेतोरागरूपिता भावुकोदयपिशुना कथं कथं नोपच्छन्दयति। परन्तु विरुद्धस्यासम्यग् ज्ञानस्य वैदेशिकाचरणस्य कौशानंकारं (?) कियन्तमपि कालं भारतीयानामनुकृतिः परिहास्यतां प्राप्तकालं कर्तव्ये कर्मण्यालस्यमपाटवं चोपानैषीत्।

बुभुक्षितो हि भोक्तुं गवेषयतीति, आभाणकमनुसृत्य पुरातन-विद्यास्थानपेटिकासम्पुटितानां क्लिष्टकान्तीनां रत्नविशेषाणां परीक्षणे संस्करणे तत्प्रयोजनविचिकित्सायां विनष्टकल्पायाः पूर्वाचार्यव्यवस्थायाः पुनरुज्जीवनोपायेषु च साम्प्रतं प्रावर्तत। अचिरप्रवृत्तो ह्येष गवेषणाक्रमः, तदवश्यमेव प्रत्नानां विद्याराशीनां यथावदवबोधे भवन्त्येव विभिन्नानि प्रस्थानानि। अस्यां च गवेषणायां पुरातनविद्यास्थानेष्वन्यतमं भारतं तथा रामायणमपि गोचरीभवतः। केचन मुनिरूपितवस्तूत्पन्नं सुश्लिष्टं कथाजालमिति, अन्येऽप्यायतं जीवनचरित्रमिति, अपरे धर्मा-धर्मफलप्रतिपादनेन धर्माधर्मयोर्लब्धवबोधकमिति, इतरे तादात्विक-भूसंस्थानप्रतिपादकमिति चान्यथान्यथोल्लिखन्ति। न तादृशोऽपि जना विरला ये नाम कस्यापि वश्यवाचो रसिकस्योत्प्रेक्षकस्य प्रज्ञाविलसितमिति दूरतः परिहरन्ति, अश्रद्धेयत्वं चैतयोर्वदन्ति।

नच न सन्ति तेषां युक्त्याभासाः। कीनाशा भल्लुकाश्च विवेचयन्ति। काल्पनिकं निरयं विहाय क्व वा दशाननस्तदनुयायिवर्गश्च निपात्यताम्। उच्चावचमुच्छलद्वीचिमालिनि सलिलराशौ निबद्धायाः सेतोरवशेषा क्व वा

प्रक्षिप्ता कुत्र च विभीषणादयश्चिरजीविनोऽवस्थिताः। साहसिकानां सुनिपुणदृशामाधुनिकानाम् अक्षिपथमतीत्य लङ्का वा कुत्र निलीयताम्। एवं भारतस्यापि रचयिता कः। स किमेकोऽथवाऽनेके। अष्टादशपुराणानां महाभारतस्य च प्रणेता व्यास एक इति तु न सुधीमधुरम्। नह्येको व्यासः, कर्ता भवितुमर्हति। सम्पादको वा स्यात्। अधुनोपलभ्यमानानि सर्वाण्यप्याख्यानकानि किं प्रथममेव भारते पदमलभन्त। आहो तदा तदा तेन तेनोपक्षिप्तानि, एताश्चान्याश्चाप्रत्ययधूलिक्षेपनालीकयन्त्रायमाणा अनल्पाः कल्पना निरर्गलं निर्गलन्ति।

यथा तथा भवतु, नहि भवति वचनमात्रेण वस्तुनोऽन्यथाभावः। स्फुरत्येव कोऽप्यर्थविशेषः सूक्ष्मया दृशा पुराणगणपारावारमाकलयतां अगाधस्तिमितह्रदनिमग्नो रत्नराशिरिव रत्नाकरस्य।

नितरामनुशोचनीयाश्च ते ये पुराणानां प्रामाण्यसिद्ध्यर्थं कर्तृकालादि-निर्णये प्रयतन्ते। ये चान्ये चरित्रनिबन्धकाः परीक्षकेक्षिकया प्रवर्तन्ते न तेषां ततो निवारणमपि युक्तम्। यतस्तेऽपि महनीयमतयः किमपि जानन्ति। एतेषां तु पुराणानां प्रामाण्यमनबोधकत्वादबाधितबोधकत्वाच्च स्वयं सिध्यति। नह्यग्निरुष्ण इति वाक्यमकर्तृकमज्ञातकर्तृकमपि प्रामाण्यात्प्रच्यवते। न बोधकत्वाद्भ्रश्यते। न वाऽज्ञातार्थावगमयितृत्वं नास्ति।

सत्यमिदमुच्यते महत्त्वाद्भारवत्त्वाच्च महाभारतमुच्यते, यत इदं शत-सहस्रवृतिवनराजिराजितं नीतिवल्लरीविकटवेष्टनप्रतिष्टम्भिताज्ञजनप्रचारम् आख्यायिकावल्मीकनिलीनदार्शनिकतत्त्वकाद्रवेयकुलाकुलम् कविजनकरि-वराक्रान्तम् आक्रान्तदर्शिपरिहृतप्रान्तं राजधर्ममृगेन्द्रजुष्टम् अकृतधिषण-हरिणगणजुष्टम् मोक्षधर्मप्रस्रवणपवित्रिताभ्यन्तरम् प्राज्ञप्रदर्शितवर्तनीसमुत्सेधं च महारण्यमिव सुकुमारधियां स्पृहणीयपदवीं नाधिरोहति महाभारतम्। रामायणं तु सहृदयमधुकरजुष्टम् उपमास्वभावोक्त्यादिविविधललितलता-वितानमञ्जुलम् नवरसप्रसवभासुरम् अध्यात्मतत्त्वपरिमलोद्गारि चोपवन-

भिवातिरमणीयम्। अध्यात्मरामायणप्रतिपादितानां वाल्मीकिरामायण-संसूचितानां केषामपि अध्यात्मतत्त्वानामाविष्करणमेवास्य परं लक्ष्यम्।

## रामायणम्

इयं हि कथा आध्यात्मिकाधिभौतिकसुखदुःखजयपराजयादिविविध-वेदनाविशकलितस्य जीवात्मनो ब्रह्मभावापत्तिपरा। भास्वतो विवस्वतोऽभिजनेऽभिजातेन अहंपदवाच्यस्थानीयेन दशरथेनोपक्रम्यते। अन्तःकरणस्य तैजसत्वमौपनिषदम्। अन्यैरपि दार्शनिकैरुपदिष्टम्। "तैजसमन्तःकरणं चक्षुर्द्वारा निर्गत्य विषयदेशं गत्वा तदाकारेण परिणमते" इत्यादि। आत्मनोऽपि अहंपदवाच्यत्वमस्यैव सम्बन्ध आपादयति। मन एव मनुष्याणां कारणं बन्धमोक्षयोः। अस्मिन्नेव चानाद्यन्तरहितमिदं संसारचक्रमतास्यदश्राम्यच्च परिभ्रमति। वैवस्वतो वंशश्चासौ, यां विना जगत उत्पत्ति-विनाशौ न स्तः, यामाश्रित्य अन्तःकरणस्याप्यात्मलाभोऽजनि, सैषा प्रकृतिरिति मायेति अज्ञानमिति च व्यवह्रियते। दशरथोऽपि, रथस्थानीयस्य कर्मेन्द्रिय-ज्ञानेन्द्रियात्मकैर्दशभिर्वाजिभिरुह्यमानस्य स्वामी, पञ्चकोशात्मकस्य अयोध्यानगरस्य पालको राजा। 'नवद्वारे पुरे देही,' 'पुरमेकादशद्वारं,' 'आत्मानं रथिनं विद्धि,' 'इन्द्रियाणि हयानाहुः,' इत्याद्यौपनिषदवाक्येषु शरीरस्य रथत्वेनाऽऽत्मनो रथित्वेन च रूपणं बहुलमुपलभ्यते। परागन्तःकरणानुधावित्वाच्चास्य भवतीव तदनुविधायी द्वन्द्वानुभवोऽपि। अस्य च राज्ञस्तिस्रो नायिकाः कौसल्या-कैकेयी-सुमित्राख्याः निवृत्ति-प्रवृत्ति-भक्ति-स्थानीयाः। आम्नायप्रत्यादेशो वसिष्ठोऽस्य गुरुर्विधारको नियन्ता च। प्रभुकल्पो धर्माधर्मवर्णाश्रमादिविधारको हि वेदः। अनृतज्ञान्तःकरणानुधाविनः तद्धर्मानात्मीयान्मन्यमानस्य जीवस्योपदेष्टा ज्ञानमूर्तिर्वेद एवेत्येतन्निर्विवादम्। अनपत्योऽसौ राजा पुत्रानैच्छत्। किं करोतु तपस्वी। संसार-सागरपतितस्य प्रेयस्साधनं पुण्यकर्मैवेति राजाऽसौ गुरोर्वसिष्ठस्य निदेशेन पुत्रीयामिष्टिमन्वतिष्ठत। चत्वारः पुत्रानविन्दत। ज्ञान-विवेक-वैराग्य-विचारस्थानीयास्ते यथाक्रमं राम-लक्ष्मण-भरत-शत्रुघ्नाख्या अभूवन्।

राजाऽपि मन्देतरमानन्दमवाप। पुत्रानेवानारतमादध्यौ। वीथीषु विचरतः उपश्लिष्टबल्लचापलानेतान् प्रत्यहं गुणैर्विद्यया रामणीयकतया गाम्भीर्येण च समेधमानान् प्रेमगर्भया दृशा प्रमोदजडेन वपुषा च दृढं परिष्वज्याऽऽत्मानं कृतार्थममन्यत।

अन्तःकरणं हि बुद्धिसहकृतं नित्यादनित्यं सुखाद् दुःखं सत्यादनृतं च साधु विविच्य वैराग्यानुगृहीतम् अनित्यादशुभादनृताच्च प्रतीपं निवर्त्य नित्ये शुभे सत्ये चाविरतं निदिध्यासनयोगसम्पादनेन विवेकोदये विजातीयवृत्त्यनन्तरितां प्रज्ञानधारामासादयति। "तं विद्याद्दुःखसंयोग-वियोगं योगलक्षणं यं लब्ध्वा चापरं लाभं मन्यते नाधिकन्ततः। यस्मिन् स्थितो न दुःखेन गुरुणाऽपि विचाल्यते।" इत्यादि चात्राऽऽकल-नीयम्। तेषु चतुर्षु लक्ष्मणो रामानुयायी शत्रुघ्नो भरताविनाभावी चाभूत्। विवेको हि भवति विज्ञानवान्। विचारेण वैराग्यमपि दृढमापाद्यते। अथ कदाचिदेभिश्चतुर्भिरपि पुत्रैः सभामध्यमध्यासीनं दशरथं श्रद्धाविवेश। योऽसौ विज्ञानार्थी विश्वामित्र इति कविनोपवर्णितः। अयमृषिर्दशरथ-माससाद।

विपरिणमितम्॥

अवशिष्टमुपरिष्टात्।

---

# दत्ता

## तृतीयः परिच्छेदः

मासद्वयं वर्त्तत उपरतस्य वनमालिनः। तस्य कलिकातावर्त्तिनि तत्तादृशे महति भवने सम्प्रत्येकैव विजया। तस्य देशस्थाया भूसम्पदो रक्षणावेक्षणे रासविहार्यैव निर्वर्त्तयन्नासीत्। तेन च सूत्रेण स तस्याः कथञ्चित् प्रभुरेव भवन्नवसत्। परं स्वयं ग्रामे वर्त्तत इति तनये विलासविहारिण्येव विन्यासि विजयायाः सर्वोऽपि तत्त्वावधानभारः। स एव तस्या वस्तुतः प्रभुरभवत्।

तदानीं प्रतिग्राह्यपरिवारं 'सत्यं' 'सुनीतिः' 'सुरुचिः' इत्येते शब्दा बाढमुच्चैरशिक्ष्यन्त। तस्य हेतुश्च—पाठार्थं विदेशमागता हिन्दूयुवानो यदा पित्रोर्देवानां प्रतिष्ठितस्य समाजस्य च प्रतिपक्षीभूय विद्रोहमन्वतिष्ठन् तदा खल्वेत एव शब्दा अवलम्बीभवन्तस्तेषामपरिणतं मस्तकं मा नामावनम्य भज्येतेत्यधिशिरोधरमृजुतया न्यदधुः। त एवमजल्पन्—यत् सत्यमित्यवधारयिष्यसि, तदेव विधास्यसि। मातुर्वाष्पो वा पितुर्दीर्घश्वासो वा किमपि न दर्शनीयमाकर्णनीयं वा। सेयं दुर्बलता सर्वथा परिहर्त्तव्या, नो चेदालोकस्य सन्धानं नैव लप्स्यसे। वाक्यान्यमूनि विजययाऽप्यशिक्ष्यन्त।

अद्य विलासमहोदयो मत्तस्य प्रवयसो जगदीशस्य मृत्युवार्त्तामादाय ग्रामादुपागतः। कामं स पितृबन्धुरेव विजयायाः, परं यदा विलासमहोदयो वक्तुं प्राक्रमत—कथं कृत्वा जगदीशो मद्यं पीत्वा मत्तः सन् छदेरुपरिष्टात् पतन् व्यपद्यत—तदा ब्रह्मधर्मस्य सुनीतिं स्मरन्ती विजया दुर्भाग्यस्यास्य पितृसखस्य विरुन्धाना जुगुप्सया ओष्ठं विकर्त्तुं लेशतोऽपि न द्वैधीभावममन्यत। विलासो वदति—जगदीशमुखोपाध्यायो ममापि पितुर्बाल्यबन्धुरासीत्। किन्तु तत्रभवांस्तस्य मुखमपि नापश्यत्। ऋणार्थं वारद्वयमुपागमत सः, परं तातो भृत्यद्वारा तं गोपुराद्बहिरकरोत्। स सर्वदैवा-

वादीन्—एतेभ्यो दुर्नयपरेभ्यो जनसमाजेभ्यो दयमानैर्मङ्गलमयस्य भगवतश्चरणयोरपराधः कृतः स्यात्।

अभ्युपगम्य विजययोक्तम्, सुतरामेव सत्यं वचः।

लब्धोत्साहो विलासो वक्रभङ्ग्या वचनं प्रावर्त्तयत्—बन्धुरेवास्तु अथ यो वाऽस्तु, दौर्बल्यवशेन ब्राह्मसमाजस्य चरम आदर्शो न चूर्णयितव्यः। —जगदीशस्य सर्वाः सम्पद इदानीं न्यायतोऽस्माकमेव। तस्य सुतः पितुर्ऋणं शोद्धुमर्हति चेत् सम्यक्, अथ न शक्नुयात्, राजशासनानुसारेणेदानीमेव सर्वं हस्ते कर्त्तव्यम्। वस्तुतः, परित्यक्तुं नास्ति नः कोऽप्यधिकारः। यतो वयमेभिर्द्रव्यैरनेकं सत् कर्म कर्त्तुमर्हेम। समाजस्य कमपि बालमांगलभूमावपि प्रेरयितुमर्हेम। धर्मप्रचारार्थं व्ययीकर्त्तुमर्हेम कति कर्त्तुमर्हेम्—ब्रवीतु भवती कथं तन्न कुर्याम। अन्यच्च—जगदीशमहोदयस्तत्पुत्रो वा नास्मत्समाजस्यान्तर्निविशते, येन तत्र कापि दया आवश्यकी। लब्धमात्रायामेव भवत्याः सम्मतौ पितृदेवः सर्वं सुसमञ्जसं विधास्यतीति कृत्वाऽद्य मां भवत्याः समीपे प्रैषयत्।

विजया मृतस्य पितुः शेषवचनानि स्मरन्ती चिन्तयितुं प्रावर्त्तत—सद्यः प्रत्युत्तरं कर्त्तुं नाशक्नोत्। तां विचिकित्सन्तीमभिवीक्ष्य विलासः सदलं दृढेन कण्ठेन प्रावदत्—नहि नहि, नाहं भवतीं कथमपीतस्ततः कर्त्तुम् अनुमंस्ये। पापं नाम द्वंधं दुर्बलता च। केवलं पापमिति न, महापापम्। मया मनसि सङ्कल्पः कृतः, तस्य भवने भवत्या नाम्ना—यत् कुत्रापि नास्ति, कुत्रापि नाभूत्—अहं तदेव करिष्यामि—पल्लयां ब्राह्ममन्दिरं प्रतिष्ठाप्य देशवासिनो हतभागधेयान् मूर्खान् धर्मं शिक्षयिष्यामि। चिन्तयतु तावद् भवती वारमेकम्, एषां मूर्खतयैव विरज्यमानो भवत्याः स्वर्गीयः पितृदेवो देशमजहान्न वा? किं नोचितं तत्कन्यकया भवन्त्या भवत्या इमाम् उदात्तां वैरशुद्धिं गृह्णत्या तेषामेवायं चरम उपकारः कर्त्तुम्? उच्यताम्, भवत्यैवास्योत्तरं दीयताम्।

विजयया चलच्चित्तयाऽभूयत। विलासो दृप्तस्वरेणावोचत: सर्वस्मिन्

देशमध्ये कियदेकं विस्तृतं नाम, कियदेकं महदान्दोलनमुत्थास्यतीति चिन्तयतु भवतो। हैन्दवैः स्वीकर्त्तव्यमेव—तद्वारो मयि—यद् ब्राह्मसमाजे मानवोऽस्ति हृदयमस्ति स्वार्थत्यागोऽस्ति। यं ते निपीडयन्तो देशाद्वय-सर्जयन्, तस्यैव महात्मनो महीयस्या कन्यकया तेषामेव मङ्गलार्थं विपुलोऽयं स्वार्थत्यागः कृतः। ब्रवीतु तावद्भवती साधुरयं दृष्टान्तः समग्रं भारतमभिव्याप्य कीदृशं नाम शुभोदर्कं फलं प्रसुवीत। उक्त्वेयद्विलासविहारी सम्मुखवर्त्तिन्यामासन्दिकायां प्रचण्डं तलप्रहारमकरोत्। शृण्वती विजया मुग्धा जाता। वस्तुतोऽशक्य एवाष्टादशवर्षीयया कन्यकया तथाविधस्य यशसो लोभः संवरीतुम्। तया परिपूर्णां सम्मतिं प्रदायोक्तम्, तस्य पुत्रस्य नाम नरेन्द्रमश्रौषम्। इदानीं स क्वास्ते, अपि जानाति भवान् ?

ज्ञायते। हतभाग्यस्य पितुर्मरणात् परं स गृहमागत्य पितुः श्राद्धं विधायेदानीं देश एवास्ते।

मन्ये भवता सार्कं परिचयोऽस्ति।

परिचय इति ? शान्तं पापम्। उच्यताम्, भवत्याऽहं क इव मन्ये। इत्युक्त्वा विलासमहोदयो विजयामेकान्ततोऽप्रतिभां विधाय किञ्चित् स्मित्वाऽवदत्, मया तु चिन्तयितुमपि न शक्यते यद् जगदीश-मुखोपाध्यायस्य पुत्रेण साकमालपामि। परं तस्मिन्नहनि पथि हठात् कञ्चनोन्मत्तकल्पं नवीनं जनमालोक्य चित्रीये स्म। श्रुतं स एव नरेन्द्र-मुखोपाध्याय इति।

विजयया कुतूहलिन्या कथितम्, कथम् उन्मत्तकल्पः ? श्रूयते भिषक् किलायम्।

विलासमहोदयो जुगुप्सया सर्वाण्यङ्गानि संकोचयन् अवोचत्, सर्वथोन्मत्तकल्पः। भिषगिति ? नाहं विश्वसिमि। शिरसि आयतः केशः—यथा दीर्घकायस्तथा रुग्णः ( कृशः )। वक्षसः प्रतिपञ्जरं दूरादेव गणेयमिति मन्ये। इयं नामाऽऽकृतिः। तालदलमयो योद्धा ! धिक् !

वस्तुत आकृतिमधिकृत्य गर्वितुं विलासोऽधिकारी। यतः स खर्वः स्थूलः सुतरां शक्तिमांश्च। तस्य वक्षसः पञ्जराणि आग्नेयास्त्र (बोमा) प्रहारेणाप्यनिर्देश्यानि। स भूयोऽपि किमपि वक्तुं प्रक्रमन् विजयया प्रतिषिध्य पृष्टः—अस्तु, विलासमहोदय, जगदीशमहोदयस्य भवनं यदि सत्यमेव वयं स्वायत्तीकुर्याम, किं ग्रामान्तः कश्चित् कटुर्जनापवादो नोत्तिष्ठेत् ?

विलासः सबलमुदैरयत्, एकान्ततो नैव। पञ्चसप्तानां ग्रामाणामन्तरेवमेकोऽपि मानवो भवत्या नाप्स्यते यस्यामुष्य मत्तस्योपरि बिन्दुमात्रापि समानुभूतिरासीत्। 'हा' शब्दं कुर्यादेवं जनस्तस्यां पल्ल्यां नास्ति। किञ्चिद् हसित्वाऽवदत, तदपि नाम यदि न स्यात्—तथापि जीवति मयि सा चिन्ता भवत्या मनसि न विधेया। परमहं ब्रवीमि, अन्ततः कियतेचिद्दिवसाय भवत्या सकृद् देशं प्रति गन्तव्यम्।

चित्रीयमाणया विजयया पृष्टम्, कथम् ? अस्माभिः कदापि न तत्र गम्यते ? विलासः प्रदीप्तकण्ठमवोचत, तत एव ब्रवीमि, भवत्या गमनं काम्यत एव ! प्रजास्तासां महाराज्ञीः सकृद् दर्शयतु भवती, मया तु ध्रुवं मन्यते अस्मात् सौभाग्यात्तासां वञ्चना महापापम्।

लज्जया विजयायाः सर्वं वदनमण्डलमालोहितं जातम्। साऽवनतेन वदनेन किमपि वक्तुमुपक्रमन्त्येव विलासेन प्रतिबध्योक्ता, नात्र इतस्ततः कर्त्तुं किमप्यस्ति। सकृत् चिन्तयतु तावत्, कियन्ति नाम कर्माणि तत्र भवत्याः कर्त्तव्यत्वेन वर्तन्ते। इयं नाम कथाऽद्य भवत्याः सम्मुखमेव मया वक्तुं शक्यते, यद् भवत्यास्तातपादाः सर्वस्य देशस्य प्रभवोऽपि यत् केषाञ्चन क्षिप्तानां शुनां त्रासेन भूयः कदापि न ग्रामे प्रत्यावर्तन्त तत् किं तैः सम्यग् आचरितम्। किमयमस्माकं ब्राह्मसमाजस्याऽऽदर्शः ? नायं कस्यापि समाजस्याऽऽदर्श इति कोऽत्र भ्रमः।

विजया क्षणं तूष्णींभूयावोचत, श्रुतन्तु पितुर्मुखात् अस्मदीयं देशस्य भवनं न वासोपयोगीति।

विलासेनोक्तम्, आदिशतु भवती, सकृद् वदतु तत्र गमिष्यति,— अहमवाग् दशाहान् तद् वासोपयोगि विधास्यामि। मयि भारो न्यस्यताम्, यथा तद् भवनं भवत्या मर्यादां वोढुं शक्नुयात्, मया प्राणानपि पणीकृत्य तस्य व्यवस्था विधास्यते। पश्यतु, अहो! कालात् काचित् कथा मे मनसि समुदेति—भवतीं केवलं सम्मुखीनां विधायाहं यत् कर्त्तुमर्हामि, तस्य मन्ये सीमा नास्ति।

प्रातिष्ठत विलासो विजयाम् अनुमतां विधाय। सा तत्रैव तूष्णीमवसत्। यो हि तस्या देशस्तत्र सा कामं जन्मनः प्रभृति कदापि न गता, किन्तु अन्तरान्तरा पितुर्मुखात् तस्य कियतीं वा वर्णनां नाश्रृणोत्। देशस्य पुरावृत्तं कथयतस्तस्योत्साहश्चानन्दश्च न मितः स्म। परं तदानीं सा कथा तस्याः मनः किञ्चन्मात्रमप्याक्रष्टुं नाशक्नोत्। यथैवाश्रृणोत् तथैव प्रास्मरत्। परमद्य कुतः पुनरकस्मात् प्रत्यावृत्तं तदखिलं प्रस्मृतं विवरणम् एकपदे मूर्त्तिं परिगृह्य तस्या नयनयोरुपरि प्रत्यभात्। आसीच्च तस्या मनसि, कामं तासां ग्रामस्थं भवनं कलिकातास्थमिदं भवनमिव न सुबृहच्चाकचिक्यमयञ्च, परं तदेव तस्याः साप्तपौरुषिकी वास्तुभूमिः। तत्र पितामहपितामह्यो प्रपितामहप्रपितामह्यौ तासामपि जनकजनन्यः, एवमेव कियतां पुरुषाणां सुखदुःखाभ्याम् उत्सवव्यासनाभ्याञ्च यदि दिनान्यत्यक्रामन् तदा तस्या अपि किं नातिक्रमेयुः।

क्षुद्ररथ्याया अग्रतो 'हाजरा' वंशीयानां त्रितलस्य भवनस्यान्तराले सूर्योऽदृश्यतां गतः। विषयमिममधिकृत्य पित्रा सह तस्याः कति दिनानि कियती कथा संवृत्ता। तस्या मनस्यभूत्। कतिपु सन्ध्यासु साऽमुष्या-मासन्दिकायामुपविश्य दीर्घश्वासं निःसारयन्नवोचत्, विजये, मम देशस्थे भवने कदापीत्थं दुःखं नानुभूतम्। तत्र कस्यापि 'हाजरा' वंशस्य त्रितलच्छदिरस्तं गच्छतः सूर्यस्य शेषं रश्मिजालमेवं कृत्वा मत्तो व्यवधाय नोदतिष्ठत्। मातस्त्वं तु न जानीषे, परं मम चक्षुर्द्वितयम् एतद्वक्षोमध्याद्-सकलया दृष्ट्या निरीक्षमाणमास्ते। तत् स्पष्टं पश्यति, "अस्माकं

पुष्पोद्यानसमीपस्था क्षुद्रा तटिनी अस्यां वेलायां सौवर्णसलिलेन टलटलायमाना वर्तते। अथ तस्यास्तीरे यावद्दूरं दृष्टिः प्रसरति ; क्षेत्रात् परं क्षेत्रं तत्सीमान्ते इदानीमपि सूर्यो देवो यियासुरपि ग्रामस्य मायामतीत्य गन्तुं नाशक्नोत्। अदः पश्यसि मातः क्षुद्ररथ्यायाः प्रान्ते, दैनिकं कर्म निष्पाद्य गृहाभिमुखं जनस्रोतः प्रवहति, परममुं दशद्वादशहस्तां भूमिमन्तरेण तैः सह गन्तुं पुनर्नित्यदवीयानपि पन्थाः। एवं कृत्वा अस्यामेव सायंसन्ध्यायां तत्रापि प्रतीपगामि जनस्रोतो भवनाभिमुखं प्रवहद् दृष्टम्। किन्तु मातः, तस्य प्रत्येकं गवां वत्सानां गोष्ठानाञ्च परिचयमजानाम्। उक्त्वाऽतिगभीरं श्वासमेकं हृदयाद्विमोच्य नीरवतामगृह्णात् सः। यं ग्राममेकदा स परित्यज्यागतवान्, इयतां सुखैश्वर्याणामन्तरालेऽपि तस्यैव कृते तस्यान्तरिन्द्रियं यद्रुदासीत्, तदिदं यदा तदैव विजययाऽनुभूतम्। तथापि दिनमेकमपि सैतस्य कारणं नालोचितवती, परमद्य विलासमहोदये तस्यां दिशि तस्या दृष्टिमाकृष्य प्रस्थिते परेतस्य पितुर्वाक्यपरम्पराः स्मरन्त्यास्तस्या मनसि पितुः प्रच्छन्नस्य दुःखस्य हेतुरकस्मादेकदैव प्रोद्भासित आसीत्। महत्यस्मिन् कलिकाताया जनारण्येऽपि तत्रभवान् कथम्भूतमसहायं जीवनमयापयत्, अद्य सा उपनेत्रं तदवलोक्य एकपदे भीतासीत्। आश्चर्यञ्चैतत्, येन ग्रामेण—यया वास्तुभूम्या साकं तस्या जन्मनः प्रभृति परिचयो नास्ति तावेवाद्य तां दुर्निवारया शक्त्या समाकर्षन्तावास्ताम्।

---

# अभिनन्दनायोजनम्

मान्या महानुभावाः !

वैदिकवाङ्मयस्य सर्वाग्रगण्यविदुषाम्, समर्थसमीक्षकाणाम्, मार्मिकगवेषकाणां च जयपुरराजसभाप्रधानपण्डित-विद्यावाचस्पति-श्रीमधुसूदनशर्ममहाभागानां शुभमभिधानं नास्त्यविदितं संस्कृतविदुषाम्। महाभागैरेभिरासन्नचत्वारिंशैर्वर्षैरनवरतं परिश्राम्यद्भिर्वैदिकविज्ञानस्य तत्तासां ग्रन्थीनां शिथिलीकाराय फलेग्रहिः प्रयत्नः समनुष्ठितः। येषां वैदिकविषयाणां संगतिप्रदर्शनमपि महामहतां विदुषामपि कठिनतममासीत्, तेषां गूढतमं मर्म पण्डितमहोदयैः प्राकाश्यमुपनीतम्। अनेकाभ्यः शताब्दीभ्यो विलुप्तस्यास्य विज्ञानस्य प्रकाशने विवेचने चैभिस्तथा पराक्रान्तम्, यथा कार्यमिदमागामिन्याः सन्ततेः पथिप्रदर्शकतामुपैष्यति, विश्वस्याः शताब्द्याः ख्याततमेषु जगन्मान्येषु वैज्ञानिकविद्वत्सु च शिरो भारतीयानामुन्नमयिष्यतीत्यत्रैतदीयकार्यपरिपाटीपरिचितानां नोदेति संशयलेशोऽपि। शताधिका ग्रन्थाः संस्कृतवाङ्मये महाभागैरेभिर्ग्रथिताः, ये न केवलमेषाम्, अपि तु शताब्द्या अस्या गौरवं चिराय प्रतिष्ठापयिष्यन्ति।

सौभाग्यमिदमस्माकं संस्कृतवाङ्मयसेवाजुषाम्, यदिदानीं श्रीमन्त इमे स्वजन्मनः सप्ततितमे वत्सरे कृतपदाः। हिन्दीसाहित्यसेवकानां बहूनां विशिष्टविदुषामेतावद्वयःप्राप्तावभिनन्दनायोजनं महता समारोहेण यथा हिन्दीसाहित्यसेवकैः समनुष्ठितम्, तथा संस्कृतसाहित्यसेविषु प्रथमगणनीयानामेषां महानुभावानामभिनन्दनायोजनं संस्कृतसाहित्यसंमेलनेनोपक्रान्तम्। अस्मिन्नेव चैत्रमासे जयपुर एवाभिनन्दनं संपाद्येत, तदर्थमत्र बहोः कालात् संघटिता श्रीमधुसूदनाभिनन्दनसमितिः। एष च कार्यक्रमः समित्या निर्धारितः—

(१) जयपुरात्प्रकाश्यमानस्य संस्कृतसाहित्यसंमेलनमुखपत्रस्य "संस्कृत-

रत्नाकरस्य विशेषाङ्कः "वेदाङ्क"नाम्ना तस्मिन्नवसरे प्रकाश्य महाभागेभ्य एभ्यः समर्पणीयः। अस्मिन् महाविदुषां वैदिकसम्प्रदायाचार्याणाम्, ख्याततमानां च भारतीयविद्वत्प्रवराणां निबन्धाः प्रकाशयिष्यन्ते; श्रीमधुसूदनझामहाभागानां जीवनेतिवृत्तम्, कृतिपरिचयश्चापि विदुषां परिचयाय तत्र प्रकाश्येत।

(२) वैदिके, दार्शनिके, सामान्ये च विषये स्पर्धारूपेण सर्वप्रान्तीयविद्वद्भिर्निबन्धा लेखयिष्यन्ते, ते चाभिनन्दनसंमेलनावसरे पाठयिष्यन्ते। भारते ख्यातनामानो विद्वत्प्रवरा अत्र निर्णायकाः स्युः। तन्निर्णयानुसारं येषां निबन्धाः प्राथम्यं भजेयुस्ते सदसि संमानपत्रेण, समुचितदक्षिणासहितेन महार्घ्यवस्त्रेणोपायनेन च सत्क्रियेरन्। निबन्धलेखनार्थमिमे विषयाः समित्या निर्धारिताः।

(क) वैदिको विषयः—वैदिक्यो देवताः

(ख) दार्शनिको विषयः—ईश्वरवादः

(ग) सामान्यो विषयः—साम्प्रतं वैदिकपद्धतिप्रचारोपायाः।

एषु विषयेषु यथेच्छं कस्मिंश्चिद् विषये भाषया विषयेण च प्रौढं संस्कृतभाषामयं निबन्धं विलिख्य चैत्र-शुक्ल-पञ्चमीं यावद् विद्वांसोऽभिनन्दनसमितिमन्त्रिसविधे प्रापयिष्यन्ति, नियते च संमेलनावसरे (चैत्रशुक्ले ११, १२, १३ तिथिषु) जयपुरे स्वयमुपस्थाय स्वीयं निबन्धं श्रावयिष्यन्ति, तेषामेव निबन्धाः प्रतियोगितापरीक्षायां गृहीताः स्युः।

(३) "सुरभारती" इतिविषयमधिकृत्य दशभ्योऽन्यूनानि विंशतेश्चानधिकानि सरल-प्रौढानि पद्यानि विरचय्य ये चैत्रकृष्णामापर्यन्तमभिनन्दनसमितिमन्त्रिसविधे प्रापयिष्यन्ति, तेषामपि प्रतियोगितापरीक्षायां सन्निवेशः स्यात्। अत्र च येषां काव्यं प्रथमगणनीयं निर्णायकैर्निर्धार्येत, ते सुवर्णपदकसंमानेन सत्क्रियेरन्

(४) प्रतियोगितापरीक्षायां ये न प्रवेष्टुमिच्छन्ति, तेषां महतां विदुषां

स्वानन्त्र्येण संस्कृतभाषामयी, हिन्दीभाषामयी, इङ्गलिशभाषामयी वा वक्तृता, निबन्धपाठः, कविसंमेलनं चापि कार्यक्रमे निर्धारितानि। निबन्धार्थं वक्तृतार्थं च "वैदिकवाङ्मये वैशिष्ट्यम्" "भारतीयानां पाश्चात्त्यानां च वैदिकतत्त्वगवेषणा" "भारतीयेषु शास्त्रेषु विज्ञानम्" "भारतीयानां दर्शनानि" "दर्शनेषु सिद्धान्तभेदस्तदैक्यं वा" इति विषया निर्धारिताः सन्ति। एवंजातीयक एतेभ्योऽतिरिक्तेऽपि विषये शक्यं विद्वद्भिर्व्याख्यातुम्। कविसंमेलनार्थं च निम्ननिर्दिष्टा समस्या नियता—

'सन्ति सन्तः कियन्तः'

पद्यत्रितयादधिकं चैकस्य कविमहाभागस्य न ग्रहीष्यते। निबन्ध-वक्तृता-कवित्वाद्यर्थं भारते ख्यातनामानः पण्डिताः प्रार्थ्यन्ते।

(५) प्राक्तनीं परिपाटीं परिष्कृतामवलम्ब्य प्रौढानां छात्राणां व्याकरण-नव्यन्याय-धर्मशास्त्र-दर्शन-विषयेषु जल्पकथा अपि भविष्यन्ति। तत्र विशेषेण स्वीयां प्रौढिं प्रकटितवन्तश्च छात्राः समुचितेन पारितोषिकेण प्रोत्साह्येरन्। अत्र प्रवेशमभिलष्यद्भिरपि स्वीयं नाम फाल्गुन्याः पूर्णिमातः प्रागेव मन्त्रिणे सूचनीयम्। स्वीयं छात्रत्वं तत्तत्पाठशालाध्यक्षपत्रेण, स्वनगरविशिष्टविद्वत्पत्रेण वा प्रमाणीकरणीयम्, कस्मिन् शास्त्रे जल्पं विधातुमभिवाञ्छतीत्यपि च निवेद्यम्। प्राप्ते नामनि तत्तच्छास्त्रीयो वाद-विषयस्तस्मै पूर्वमेव पत्रद्वारेण प्रबोध्येत।

किञ्चास्मिन्नवसरे समवेता विद्वांसो महाभागाः श्रीमधुसूदनझामहाभागैरुपक्रान्तमिदं वैदिकतत्त्वान्वेषणकार्यं कथं स्थैर्यमासादयेदित्यपि विचारयिष्यन्ति। तदिदं सादरं निवेद्यते—यत् कालेऽस्मिन्संस्कृतोन्नतिकामुकैः, संस्कृतविद्वत्सु कालोपयुक्तानि जीवनचिह्नानि प्रदर्शयितुमभिवाञ्छद्भिश्च विद्वन्महाभागैः कार्येऽस्मिन् सहयोगः सर्वात्मना विधेयः। प्रचुरविदुषां सहयोगेनैव कार्यसाफल्यं संभाव्यते।

तत्तत्पाठशालाकालेजाद्यध्यक्षमहाभागैश्च पत्रमिदं स्वीयपाठशालाध्याप-

केषु प्रौढच्छात्रेषु चावश्यं कृपया प्रचारणीयम् । सर्वैरेव च विद्वद्भिः स्वेष्ट-सुहृदो वृत्तेनानेन परिचिताः कार्याः, येन ते समये प्रतियोगित्वाय निबन्धकवितादिकं प्रेषयितुं प्रभवेयुरिति ।

निवेदकौ—

म. म. गिरिधरशर्मा चतुर्वेदः
(मन्त्री)

संस्कृतकालेज जयपुर सिटी
( राजपूताना )

# शोकगीतिः (Elegy)

[ निबन्धकः—श्रीहरिदास-काव्यस्मृतितीर्थः ]

The curfew tolls the knell of parting day,
The lowing herd winds slowly o'er the lea,
The ploughman homeward plods his weary way,
And leaves the world to darkness and to me.

सान्ध्यो घण्टाध्वनिरनिभृतो मन्दिरादागतः सन्
गोधूल्याख्यः समय इतवाञ् ज्ञापयत्यादरेण ।
धेनूर्मन्दं चलति समुना क्षेत्रतः स्वीयगोष्ठं
क्षिप्त्वा चैतं तमसि कृषको मामहो याति गेहम् ॥

Now fades the glimmering landscape on the sight,
And all the air a solemn stillness holds,
Save where the beetle wheels his droning flight,
And drowsy tinklings lull the distant folds:

क्षीणालोके प्रसरति न वै दृष्टिरेषा मदीया
लीनाः सर्वे प्रकृतिविषया नीरवा निद्रिताश्च ।
झिल्लीरावः श्रुतिपरिगतो नापि घण्टाध्वनिर्वा
निद्राणस्य प्रभवति पशोः सुप्तिविद्रावणाय ॥

———

# संस्कृतसाहित्यपरिषत्

| April, 1936. | १८५७-शकीये चैत्रे<br>१८श-वर्षस्य १२श-संख्या | Vol. XVIII<br>No. 12 |
|---|---|---|


## विज्ञानविज्ञप्तिः

[ निबन्धकः—म० म० श्रीदुर्गाप्रसादद्विवेदः ]

ऊहापोहविवेचनासु चतुरो न्यायोऽयमास्तामरे
तत्प्रौढा निजसूत्रशातनकृतो जाता अजाता इव ।
अन्याय्यं पुनरेतदीयमपरं लक्ष्येषु लक्ष्येत यद्
वेदा व्याकरणं तथोपनिषदो मूलाश्रयात्पातिताः ॥१॥

[ इति तार्किकभूलाख्यानम् ]

एषां कीर्तिकलङ्कलेन्दुसुषमा दिङ्मूलकूलङ्कषा-
स्ते गङ्गेश-गदाधरप्रभृतयो नास्तिक्यवादान्तकाः ।
एषां सूक्तय एव दृश्यविधया रूपान्तरं प्रापिता
नूनं नूतननास्तिकाशय-नगच्छेदेषु दम्भोलयः ॥२॥

[ इति तर्कपरिष्क्रिया ]

आसीद् व्याकरणं पुरा श्रुतिरुजां बाधासु धन्वन्तरि-
स्तत्संप्रत्यपि जाग्रदेव न पुनस्तत्पातसिन्धौ तरिः ।
सैतत् स्नेहवशादुपेत्य जननीकल्पा वराकी सती
स्मारं स्मारमुदारसारमधुना क्लिश्यत्स्वरं क्रोशति ॥३॥

[ इति व्याकरणगजनिमीलिका ]

मीमांसाविधिगर्हणेन वलते वेदोऽन्यथा मीयते
गृह्यं गर्ह्यदशामुपैति मुक्तमी शब्दोऽपशब्दायते ।
हे वैयाकरणाः ! प्रयोगशरणाः !! किं नैवमुन्नीयते
यद् वः संक्रमिनुं मुखानि कुटिलो नीलो घटः सर्पति ॥४॥

न्यायस्तर्कमयोऽप्रतिष्ठिततया वाग्ज्यतामुत्कं-
रङ्क ! व्याकरण !! त्वया स्थिरतया वेदः कथं कल्प्यताम् ।
यद् वाणीवलभीभवन स तु कृतीदानीं हि चित्रीयते
किं कुड्येऽसति चित्रसंगतिरियं व्योमारविन्दायते ॥५॥

[ इति व्याकरणप्रतिष्ठानम् ]

मन्त्रब्राह्मणवर्त्मणी मुनिवरैर्वेदाख्यया ख्यापिते
प्रायस्तत्र पुराणलक्षणतनूः संक्षेपतः सङ्गता ।
यो भूयानिह वंशविस्तरमहःप्रक्षेपयोगावहः
सोऽप्येषोऽन्यपुराणसङ्गतिधिया संवादनोऽन्वीयते ॥६॥

हे हे तात ! पुराणखण्ड !! भवतः संख्याप्रमेयाकृती-
र्व्यस्ताश्चोपलभामहे प्रतिकृतीः शुद्धा न वीक्षामहे ।
भक्ताः स्वार्थमुपासते क्षितिभृतो योष्माकसेवाकृते
विद्वयो नो वितरन्ति किंचिदधुना कांस्कान् क्रिमाचक्ष्महे ॥७॥

[ इति पुराणचर्चा ]

आम्नायार्थविजृम्भितस्य परिवद्रामायणस्याऽऽसवः
प्रेक्षावेश्म बृहत्कथाप्रतिभुवः संसारसारायिताः ।
यश्चाऽऽस्ते कविकर्मकौतुककलाकल्याणकल्पद्रुम-
स्तस्मै भारतभारतीप्रणयिने शश्वन्नमस्याञ्जलिः ॥८॥

वेदो विद्यत एव सोऽङ्गविसरैः स्वस्थो वरीवृत्यते
किं त्वेष प्रथमाननास्तिकबलात् संवृत्य कूर्मायते ।

ब्रह्मक्षत्रमहो मही न कलयत्युद्विग्नमाचेष्टते
कष्टं धर्मकथैव दर्शनधिया कन्थावृता लीयते ॥९॥
[ इति समयाख्यानम् ]

गोद्रीन्द्वद्रिकृताङ्कदस्रनगगोचन्द्रेऽब्दके वा शके
[ १९७२९४७१७९ + वर्तमानः शकः ]
वेदास्तत्प्रतिपाद्यधर्मविषया वैषम्यमीयुः कियत् ।
इत्युत्प्रेक्ष्य मुहुर्मुहुस्तरतमक्षोदांश्च कृत्वा भृशं
तत्त्वं बुध्यत एव दुर्मदकथागाथाविवादोत्थितम् ॥१०॥
[ इत्यालोचनाख्यानम् ]

खेटानां परकीयवेधगणितान्यादाय वादान्तरात्
प्राशस्त्यं घटयन्ति नात्मकलया ज्योतिर्विधास्वासते ।
ये धर्मोत्थविचारणासु जनता विन्ध्यस्य पार्श्वद्वये
व्यामोहं प्रणयन्ति तेषु निपतत्पाणिग्रहं सत्क्रिया ॥११॥
देशो भ्रश्यति धर्म एष हतको काञ्चित्प्रथां प्राप्यते
वेदव्याकृतिवाग्बलेन जनता सौभाग्यमारोप्यते ।
यज्जातं विषयान्तरे तदखिलं वेदात् समुत्थाप्यते
दौर्भाग्येन न वीक्षते परहितं कस्मै किमावेद्यताम् ॥१२॥
[ इति पार्श्वप्रेक्षिका ]

---

## *जीवनवृत्तान्तः

[ निबन्धकः—श्रीकालीपदशास्त्री ]

विदितमेव सर्ववर्णाश्रमसमाजान्तर्वर्त्तिभिर्जनवर्गैर्विशेषतश्च विबुधपदसमलङ्कृतैर्भूमिदेवैरस्मिन् वङ्गाख्ये प्रदेशे नवद्वीप-कृष्णनगर-भट्टपल्ली-विक्रमपुरेत्यादिवत् हाओडामण्डलान्तःपातिनो झिखिराभिधाना पल्ली। इयञ्च तावद् बहुकालतो विशुद्धपण्डितानामाकरीभूता सम्मानाविराजिता, विशुद्धपण्डितानामावासगौरवेण गौरवान्विता पवित्रा झिखिराख्या पल्ली भूतपूर्वभारतराजधानीकलिकातायाः पश्चिमतो न्यूनाधिकं विंशतेः क्रोशेभ्यो दूरे आमतामण्डलान्तर्गताया भूतपूर्वसंस्कृतकलेजाध्यक्षस्य स्वर्गीयमहेशचन्द्रन्यायरत्नमहोदयस्याऽऽवासभूमेर्नारीटेत्याख्यपल्ल्या उत्तरांशे वर्त्तते।

अस्यां वङ्गेषु तत्प्रथमागतानां ब्राह्मणानामन्यतमस्य भट्टनारायणस्य वंशसम्भूताः केचन राढीयब्राह्मणपरिवाराः प्रतिवसन्ति। वङ्गदेशीयस्वधर्मनिष्ठपवित्रब्राह्मणवंशानामन्यतमोऽयं गुरुत्वाभिमानी। प्राचीनविद्वत्समाजेषु शीर्षस्थानीयोऽयं वंशोऽसामान्यधीशक्तिसम्पन्नैर्नैयायिक-स्मार्त्तादिपण्डितानां जननैः कृत इति ज्ञायते। वंशेऽस्मिन् तदानीन्तननृपतिचयैरभिवन्दितचरणयुगलोऽसामान्यन्यायशास्त्रानुशीलनेन परिमार्जितधीशक्तिसम्पन्नो नैयायिकस्मार्तपण्डितैकगुरुः सर्वशास्त्रविशारद आसीत् कश्चिद् राजेन्द्रनाथसार्वभौमनामाऽसाधारणप्रतिभोद्भासितो धर्मप्राणः पण्डितप्रवरः।

श्रूयते कदाचिद्दिल्लीनगर्यां स्वीयपरिषदि कौतूहलाक्रान्तेनाऽऽकबरबाद्साहेनाऽऽहूतास्तावद्भारतीयपण्डितप्रवरास्तेषां विचारचातुर्येण पाण्डित्योत्कर्षेण च प्राधान्यं निर्णेतुम्। सार्वभौममहोदयोऽपि तस्यामाहूतः सन् स्वीयप्रतिभाबलेन भारतीयपण्डितप्रवराणां शीर्षस्थानमध्यकरोत्।

---

* स्वर्गतानां सुप्रसिद्धनामधेयानां पण्डितप्रकाण्डानां कलिकातापण्डितसभासम्पादकानां दक्षिणाचरणस्मृतितीर्थमहोदयानाम्।

तद् दृष्ट्वा गुणग्राही बादसाहमहोदयः सानन्दं जयिनं सार्वभौममहोदयमभिवाद्य तस्मै स्वाक्षरान्वितं दशसहस्र'विघा'परिमितभूमेः सनन्दपत्रमदात्। एतदवलोक्य सार्वभौममहोदयः क्रन्दितुमारेभे। बादसाहमहोदयेन किन्तावत् क्रन्दनकारणम् इति पृष्टः सार्वभौममहोदयः कथितवान्, भो! महोदय! भवता यत् कृतं तेन ममान्वयेऽतः परं न कोऽपि पण्डितो भविष्यति, यतो भवत्प्रदत्तभूमेर्भागधेयभोगाभिलाषेणैव तेषां ज्ञानपिपासा तिरोहिता भविष्यति। एतच्छ्रुत्वा बादसाहमहोदयस्तस्य सन्तुष्टिविधानाय स्वयमुपायनरूपेण प्रदत्तं तत् सनन्दपत्रं प्रत्याहृत्य तस्य त्यागशीलताया भूयसीं प्रशंसामकरोत्।

अयन्तावत् सार्वभौममहोदयः पुरुषगणनया भट्टनारायणतो विंशस्थानीयः। अस्य च त्रयः पुत्रा आसन्। एषां ज्येष्ठो हुगलीजेलान्तःपातिनि रामनगरेत्याख्ये ग्रामे, मध्यमो हाओडामण्डलान्तःपातिनि नारीटेत्याख्ये ग्रामे, कनिष्ठो भिखिरेत्याख्ये च ग्रामे वासं स्वीचक्रुः। एते सर्व एवासामान्यपाण्डित्यगुणगरिम्णा तदानीन्तनसमाजेष्वाधिपत्यमधिकुर्वतां पण्डितानां शिरोमणिभूता आसन्। ज्येष्ठो रामनगरग्रामं यवनैराक्रान्ततया परित्यज्य कृष्णनगरेति नाम्ना विख्यातस्य समाजस्याधिपतिरूपेणाधिष्ठाय दिगन्तविस्तृतपाण्डित्यप्रतिभाबलेन विचारबलेन च विक्रमपुर-नवद्वीपस्थ-पण्डितान् विजित्य महामहोपाध्यायस्मार्त्तरघुनन्दनभट्टाचार्यमहोदयानां भूयसां विदुषाञ्चाभिमतामपि व्यवस्थां प्रतिभया शास्त्रव्याख्यानैपुण्येन चान्यथा प्रतिपादयामास, इदानीमपि तस्य मनीषिणो व्यवस्थासिद्धान्तस्तत्रान्यत्र च प्रतिष्ठामावहति।

मध्यमपुत्रान्वयसम्भूतोऽस्माकम् अध्यापकवर-संस्कृतकालेजाध्यक्ष-स्वर्गीय-स्वनामधन्य-महामहोपाध्याय-महेशचन्द्रन्यायरत्नः सि, आइ, इ, महोदयोऽस्मिन् वङ्गाख्ये प्रदेशे संस्कृतोपाधिपरीक्षाप्रवर्त्तनादिगीर्वाणवाण्यनुप्राणितशास्त्रोन्नतिविधायककार्यावलीविधानेन जगत्यविनश्वरकीर्त्तिमर्जयित्वाऽमरलोकमगान्।

कनिष्ठपुत्रस्यान्वयसम्भूतोऽयमस्माकं स्मार्त्तशिरोमणिः स्मृतितीर्थमहोदयो भट्टनारायणतः षड्विंशपर्यायान्तर्गतः। तस्य च पुत्रो वीरेश्वरस्तत्पुत्रो नन्दकिशोरस्तत्पुत्रः कामदेवस्तत्पुत्रो रामशम्भुस्तत्पुत्रो दुर्गाप्रसादचूडामणिः। अयन्तु तावद् ऋषिकल्पः स्वनामधन्यः सर्वशास्त्रवित् स्वधर्मनिष्ठः पण्डितप्रवरश्चासीत्। चूडामणिमहोदयस्तु चतुष्पाठीं संस्थाप्य सर्वथा पञ्चाशतं छात्रान् वासस्थानाहारादिना परिपोष्य काव्यव्याकरणस्मृतिन्यायादिशास्त्राण्यध्यापयामास। अयन्तु तावन्मृत्युकालतः षड्भ्यो मासेभ्यः पूर्वं स्वीयपुत्रानाहूयावोचत्, मम तावज्जीवनकालस्य षडेव मासा अवशिष्यन्ते, शृणुत यूयम्, नास्ति मे गङ्गामृत्युयोगः। पूर्णे षण्मासे दिवा द्विप्रहरान्तसमयो ममान्तिमः काल इति मया ज्ञातम्। दण्डद्वयात् पूर्वं विष्णुमन्दिरस्य पुरतो मां नीत्वा युष्माभिर्भगवद्दामोदरशिलामुरसि मे निधाय मदीये श्रवणयुगले तारकब्रह्मनामोच्चारणीयम्। मम मृत्युकालतो मुहूर्त्तद्वयात् पूर्वं मत्सङ्केतमवधार्य दामोदरशिला केनापि भिन्नगोत्रीयेण ब्राह्मणेन मम पुरतो दण्डद्वयं यावत् संरक्ष्य ममावसानात् परं मन्दिरं प्रवेशयितव्या। श्रुतं तावदस्माभिः स्मृतितीर्थमहाभागेभ्यो यद् यथोदितेन प्रयाणेनैव तद्वचनमवितथमिति प्रमाणीकृतम्।

महाभागस्यास्य त्रयः पुत्रा आसन्। प्रथमो वरदाचरणो द्वितीयश्चन्द्रशेखरस्तृतीयस्तु स्मार्त्तशिरोमणिर्दक्षिणाचरणः। एकसप्तत्यधिकसप्तदशशताब्दीयाषाढमासस्य सप्तदशदिवसे पातिव्रत्यपरायणयाऽशेषगुणसमन्वितया छात्रवत्सलयाऽन्नदाननिरतया साक्षादन्नपूर्णयेवान्नपूर्णानामधेयया जनन्या प्रसूतोऽयं स्मृतितीर्थमहोदयः। अयन्तु तावद्बाल्यकालतोऽसाधारणधीशक्तिसम्पन्नः स्वभावतश्चञ्चलमतिश्चाऽऽसीत्।

विद्यारम्भकालतः पितुः सकाशे संक्षिप्तसारव्याकरणं पठितुमारेभे। पितुर्मृत्युकालादर्वाक् तत्सकाशे कृताध्ययनः स्मृतितीर्थमहोदयो हुगलीजेलान्तःपातिनीं गौरहाटीत्याख्यपल्लीं गत्वा तत्रत्यवैयाकरणकेशरिणां श्रीधरतर्कालङ्कारमहोदयानां समीपे टिप्पन्यादिसहितं संक्षिप्तसारव्याकरणं

सम्यगधीत्य प्रसिद्धां कृष्णनगराख्यपल्लीं गत्वा तत्रस्थद्वितीयस्मार्त्तप्रवरेभ्यो मधुसूदनतर्कालङ्कारपादेभ्यः स्मृतिशास्त्रमध्येतुमारभत। कृष्णनगरस्य परिचयस्तु प्रागेव प्रदत्तः। अस्यात्र पठनसमये स्मृतिन्यायादिदर्शन-शास्त्राध्यापिकाः पञ्चाशच्चतुष्पाठ्यो विराजमाना आसन्। तदा तत्र-स्थाध्यापकाः स्मृतितीर्थमहोदयस्य व्याकरणशास्त्रविषयिणीं प्रतिभामुप-लभ्य व्याकरणशास्त्रीयामेकां चतुष्पाठीं प्रतिष्ठाप्याध्यापनार्थं पण्डितमहोदयं नियोजयामासुः। महाभागस्त्वयमध्यापनाचातुर्येण तत्रस्थान् पण्डितान् सन्तोष्याशेषकीर्त्तिपटं वितताान। कियतश्चिद् वत्सरान् यावत् स्मृतिशास्त्र-मधीत्यालोकसामान्यं ज्ञानमुपलभ्य न्यायशास्त्राध्ययनाय भारतविश्रुत-पण्डितप्रवराणां महामहोपाध्यायश्रीयुक्तकामाख्यानाथतर्कवागीशमहोदयानां समीपे न्यायादिदर्शनशास्त्राणि पपाठ। तस्मिन्नेव समये राजकीयसंस्कृत-कालेजाभिधविद्यालये महामहोपाध्याय-पण्डित-मधुसूदनस्मृतिरत्नचरणेभ्यः प्राचीननव्यस्मृतिशास्त्रीयवादग्रन्थजातं विशेषेणाधीत्योपाधिपरीक्षाम्रष्टः प्रथमाब्द एव धर्मशास्त्रस्योपाधिपरीक्षायां प्रथमस्थानमधिकृत्य स्मृतितीर्थो-पाधिमलभत।

स्मृतितीर्थमहोदयस्तदानीन्तनस्मृतिशास्त्राध्यापकानामन्यतमत्वमधिकृत्य मृत्युकालं यावत् कलिकातानगर्यां स्मृतिशास्त्रीयचतुष्पाठीं संस्थाप्याहार-वासस्थानदानेन बहूंश्छात्रान् अध्यापयामास। अपि चायं महोदयो बहून् वत्सरान् संक्षिप्तसारव्याकरणस्मृतिशास्त्रीयोपाधिपरीक्षायां परीक्षकत्वेन निर्दिष्ट आसीत्। अधुनैवं तावद् बहवः स्मार्त्ता अस्मद्देशे विराजन्ते ये तावत् स्मृतितीर्थमहोदयेभ्योऽधीत्य स्मृतिशास्त्रमुपलभ्य स्मृतितीर्थोपाधिं संस्थाप्य च चतुष्पाठीं स्मृतिशास्त्रमध्यापयन्ति।

स्मार्त्तप्रवरोऽयं स्वकीयस्मृतिशास्त्रीयाभ्रान्तविद्यावत्ताप्रभावेण वङ्गीय-प्रधानविचारालये ( High Court ) बहुशस्तावदामन्त्रितः सन् विचार-पतीनां दायभागसम्बन्धीयसंशयं शास्त्रप्रमाणेन युक्त्या च विचार्यापनुद्य च, सुसिद्धान्तानवास्थापयत्। ते तावत् सिद्धान्ताश्चिराय विधिरूपेण विराजन्ते।

स्वधर्मनिष्ठः शास्त्रानुरागवानयं महोदयः कालक्रमेण जनान् धर्मशास्त्रे संस्कृतभाषायाञ्च वीतस्पृहानवलोक्य शास्त्ररक्षणाय महता प्रयत्नेन स्वर्गीय-महानुभव-महामहोपाध्याय-महेशचन्द्र-न्यायरत्नस्य राय-बाहादुरराजेन्द्र-नाथशास्त्रिणः पूज्यपादकेशवानन्दसरस्वतीमहोदयस्य महानुभवनवीनचन्द्र-दत्तस्य स्वधर्मनिष्ठविनयकृष्णदेवबाहादुरस्य महाराज-यतीन्द्रमोहनठाकुर-प्रभृतीनाञ्च धर्मप्राणदेशहितैषिसंस्कृतानुरागिमहोदयानां साहाय्येन स्वप्रतिष्ठितकलिकातापण्डितसभातः संस्कृतप्रथमद्वितीयपरीक्षे प्रावर्त्तयत्। संस्कृत-परीक्षायाः सुपरिचालनार्थं राजानुमोदितसंस्कृतपरीक्षाकेन्द्रसमितेः कलिकातापण्डितसभायाः प्रथमद्वितीयपरीक्षयोश्चिराय रक्षणार्थं महाराज-यतीन्द्रमोहनठाकुरमहोदयाननुरुध्य गृहीत्वा च तेभ्यः १६००० ) षोडशसहस्र-मुद्राः सरकारबाहादुरसविधे निधाय तत्कुलोद्भवो "हरकुमारठाकुर" इति नामाध्यापकवृत्तिं विधाय च भारतेऽमरकीर्त्तिं रक्षितवान्। महोदयोऽयं परीक्षासभायाश्चतुश्चत्वारिंशद्वत्सरान् क्रमेण कार्य्याणि परिचालयामास। लोकान्तरितमपि महोदयं परीक्षेयममरं करिष्यतीत्याशां पोषयामो वयम्।

धर्मैकनिष्ठमतिर्महोदयोऽयं मातुः पारलौकिकानन्दविधानाय श्रीमद्भागवत-रामायण-काशीखण्डादिकं पाठयित्वा तुलादानाभिधं महादानञ्च कारयित्वा स्वार्जितान् बहूनर्थानुत्ससर्ज। प्रथमकन्यायाः साक्षाद्भारतीप्रतिमाया इव भारत्या उद्वाहसम्पादनाय च बहूनर्थान् व्ययितवान्। विशेषतः परमकारुणिकस्मृतितीर्थमहोदयानां दरिद्रविधवानां तथा निरवलम्बनानाञ्च भरणायाऽऽसीच्च गुप्तदानादिकम्।

महोदयस्तावदन्तिमसमये संरक्ष्यातिक्रान्तपञ्चाशद्वर्षं पत्नीद्वयम्, विश्वविद्यालयतः ससुवर्णपदकम् एम, ए, इत्युपाधिं प्राप्तमेकत्रिंशद्वर्षीयं पुत्रमेकम्, दुहितरमेकाम्, जामातरमेकम्, प्रान-विचारालये विधि ( आइन ) व्यवसायिनमेकं चिकित्साव्यवसायिनमेकं स्थापत्यविद्याविभूषितञ्चैकं दौहित्रत्रयमपरमप्राप्तवयस्कदौहित्रत्रयम्, दौहित्रीत्रयञ्च, समादिश्य सर्वानात्मीयांस्तारकब्रह्मनामकीर्त्तनाय पिबन् जाह्नवीतोयं निरीक्ष्य हृदयकन्दरे स्वेष्टदेवता-

कृतिं जपन् स्वेष्टमन्त्रं परित्यज्य च दुःखाकरं भवसंसारं स्वार्जितार्थव्ययेन निर्मिते विश्वकोपवर्त्मस्थे पञ्चसंख्याङ्कितवासभवने न्यूनाधिकषडशीतिपरिमितवर्षे चिरंशान्तये शान्तिमयलोकं समाश्रयत ।

इति शम् ।

---

सम्पादकविरचितटीकासनाथः

## द्वितीयपुलिकेशिनः शिलालेखः

जयति भगवाञ्जिनेन्द्रो वीतजरामरणजन्मनो यस्य ।
ज्ञानसमुद्रान्तर्गतमखिलं जगदन्तरीपमिव ॥१॥

भगवान षडैश्वर्यशाली जिनेन्द्रो जयति सर्वोत्कर्षेण वर्तते । यद्वा, जयतीत्यत्र तुपः स्थाने तिप् तेन सर्वोत्कर्षेण वर्तताभित्यर्थः । यस्य भगवतो जिनेन्द्रस्य वीतजरामरणजन्मनः वीतानि जरामरणजन्मानि यस्य तस्य अजस्याजरस्यामरस्य च ज्ञानसमुद्रान्तर्गतं ज्ञानलक्षणाम्बुमध्यावस्थितम् अखिलं समग्रं जगत् अन्तरीपमिव द्वीपमिव । अस्योत्तरवाक्यगतत्वाद् यच्छब्दस्तच्छब्दोपादानं नापेक्षते । करतलामलकीकृताशेषभुवनो जन्मजरामरणविवर्जितो जिनेन्द्रः सर्वोत्कर्षेण वर्तताम् । एतेन स्वाभाविकः सूच्यते । किरातार्जुनीये [५।२२] "वीतजन्मजरसाम्" इति पदमुपलभ्यते, अमरकोषस्य च प्रारम्भे 'यस्य ज्ञानदयासिन्धो'रिति ॥१॥

तदनु चिरमपरिमेयश्चलुक्यकुलविपुलजलनिधिर्जयति ।
पृथिवीमौलिललाम्नो यः प्रभवः पुरुषरत्नानाम् ॥२॥

जिनस्य सर्वोत्कर्षेण वर्तनादनन्तरम् अपरिमेयः महासत्त्ववा-

मौलिललाम्नां नगनगराशिरोरक्षायमाणानां पुरुषरत्नानां नरश्रेष्ठानां प्रभव उत्पत्तिस्थानम् । अत्राप्युत्तरवाक्यगतत्वेन यच्छब्दस्य तच्छब्दनिराकाङ्क्षत्वम् । वाक्यान्तरत्वाच्च न समाप्तपुनरात्तताख्यदोषापत्तिः । रूपकमलङ्कारः । तेन च चुलुक्यवंशस्य बहुविस्तृतत्वमत्यद्भुतप्रभावश्च सूच्येते ॥२॥

शूरे विदुषि च विभजन् दानं मानं च युगपदेकत्र ।
अविहितयथासंख्यो जयति च सत्याश्रयः सुचिरम् ॥३॥

सत्याश्रयस्तदाख्यश्चलुक्यनरपतिः शूरे वीरे विदुषि विपश्चिति युगपत् एकत्र दानं मानं च विभजन् प्रतिपादयन् वीरं विद्वांसमुभयमपि दानमानाभ्यां सम्भवायन् अविहितयथासंख्यः 'यथासंख्यमनुदेशः समानानाम्' [पा० १।३।१०] इति न्यायेन शूरे दानं विदुषि च मानम् इति क्रममनादृत्य वर्तमानः सत्याश्रयस्त-दाख्यो नृपवरः सुचिरं जयति। अनुरूपोक्तिः किरातार्जुनीये [१।१२ ]

निरत्ययं साम न दानवर्जितं
न भूरि दानं विरहय्य सत्क्रियाम् ॥ इति

सत्याश्रयस्य पुलिकेश्यपरनामधेयस्य तदानीन्तननरपतित्वात् तस्य सुचिरं जयमा-शास्ते कविः ॥४॥

पृथिवीवल्लभशब्दो येषामन्वर्थतां चिरं यातः ।
तद्वंशेषु जिगीषुषु तेषु बहुष्वप्यतीतेषु ॥४॥
नानाहेतिशताभिघातपतितभ्रान्ताश्वपत्तिद्विपे
नृत्यद्भीमकबन्धखड्गकिरणज्वालासहस्रे रणे ।
लक्ष्मीर्भावितचापलापि च कृता शौर्येण येनाऽऽत्मसाद्
राजासीज्जयसिंहवल्लभ इति ख्यातश्चलुक्यान्वयः ॥५॥

येषां नृपतीनां पृथिवीवल्लभशब्दो धरापतिशब्दः चिरं दीर्घं कालं व्याप्य अन्वर्थतां सार्थकत्वं यातः प्राप्तः । पृथिवीवल्लभशब्दो हि नृपतिशब्द-पर्यायः । अत एव रूढिर्योगमपहरतीति न्यायेन यः कोऽपि नृपतिर्भवति स लीलया धरां पालयतु वा महता वायासेन विरक्तां धरां कथञ्चिद्बिभ्रान्

वत्सरान् स्वायत्तां विदधातु पृथिवीवल्लभशब्देनैव परिगीयते। अत्र तु पृथिवी-वल्लभशब्दस्य यौगिकार्थोऽपि सम्यक् लगति। तद्वंशेषु लक्षणाया तद्वंश्येषु इत्यर्थः तेषु असिद्धेषु बहुषु अपि जिगीषुषु अतीतेषु पुरन्दरपुरातिथिभूतेषु जयसिंहवल्लभ इति ख्यातः चलुक्यान्वयः चलुक्यवंशसमुद्भूतो राजा आसीद् इत्यन्वयः। किम्भूतोऽसावित्याह—येन भावितचापलापि प्रथित-चाञ्चल्यापि लक्ष्मीः श्री रणे युद्धे शौर्येण पराक्रमेण आत्मसात् चक्रे स्ववशमानिन्ये। किम्भूते रणे ? नानाहेतिशताभिघातपतितभ्रान्ताश्वपत्तिद्विपे उच्चावचशस्त्रास्त्रजालप्रहारेण निपतिताश्च भ्रान्ताश्च अश्वाश्च पत्तयश्च द्विपाश्च यस्मिन् तथाभूते। पुनः किम्भूते ? नृत्यद्भीमकबन्धखड्गकिरणज्वालासहस्रे नृत्यन्तो भीमाः कबन्धाः अपमूर्धकलेवराः खड्गकिरणज्वालाश्च असितेजः-शिखाश्च तासां सहस्राणि यत्र तस्मिन्।

अयं भावः। एतेषां हि राज्ञां पृथिवीवल्लभ इति बिरुदं चिरं सार्थकमासीत्। एषां च प्रथिततमेऽन्ववाये बहवो वीराः समुत्पन्ना विनष्टाश्च। ततश्च जय-सिंहवल्लभसमाख्यः कश्चन शूरो भुवनभीषणायोधने शत्रून् विजित्य राजलक्ष्मीं स्ववशमानिन्ये। यद्यपि लक्ष्मीः स्वभावलोलेति जागर्ति प्रवादस्तथापि तस्या-स्तदयशः संश्रयदोषरूढमिति मत्वा तत् परिमार्ष्टुकामेनानेनैवं विहितम् ॥४।५॥

तदात्मजोऽभूद्रणरागनामा दिव्यानुभावो जगदेकनाथः।
अमानुषत्वं किल यस्य लोकः सुप्तस्य जानाति वपुःप्रकर्षात् ॥६॥

तस्य जयसिंहवल्लभस्य दिव्यानुभावः दिव्यप्रभावः जगदेकनाथः एकातपत्रं जगतः प्रभुत्वमनुभवन् रणरागनामा रणराग इति ख्यात आत्मजस्तनयः अभूद्-बभूव। सुप्तस्य यस्य निद्रितस्यापि यस्य अमानुषत्वं देवभावं लोको जनः वपुःप्रकर्षात् शरीरसौभाग्यविशेषात् जानाति ऊहते। यद्यपि देवा न निमिषन्ति अयं तु यथाकालं स्वपित्येव तथापि एतस्यामनुजसाधारणं शरीर-सौष्ठवमस्यामर्त्यभावं प्रत्याययति स्म ॥६॥

तस्याभवत्तनूजः पोलेकेशी यः श्रितेन्दुकान्तिरपि।
श्रीवल्लभोऽप्ययासीद् वातापिपुरीवधूवरताम् ॥७॥

तस्य रणरागस्य पोळोकेशीति पोलोकेशिसमाख्यस्तनूजस्तनयः अभवत् । यः श्रितेन्दुकान्तिरपि सुधाकरकरवन्मनोज्ञोऽपि इन्दुकान्तिपरिग्रहोऽपीति ध्वनिः, श्रीवल्लभोऽपि राजलक्ष्मीवाल्लभ्यमधिगतोऽपि परिग्रहद्वयराङ्गाऽपीत्यर्थः, वातापिपुरीवध्वरताम् वातापिनगरीलक्षणाया वध्वा वरतामयासीत्, वातापिनगर्यधीशत्वं प्रापेत्यर्थः । अत्र विरोधाभासः ॥७॥

( क्रमशः )

---

# नलिनीवसन्तम्

[ निबन्धकः—श्रीशिवशङ्कर-शास्त्री ]

अज्ञातस्वभारतीप्रकाशविषया नलिनी तद्रजनीजनिताभिनवमन्मथा प्रणयिनमाजुहाव नामग्राहम्—"वसन्त ! वसन्त ! कथं त्वं वसन्ताभिधानोऽसि ? मदर्थं प्रत्याख्याहि ते वंशसंस्तवं स्वनामधेयञ्च । न चेदिच्छसि कर्तुमेतत्तर्हि शपथं कृत्वा भव मे प्रणयस्थानमिति ।

निशम्यैतामुद्यमशंसिनीं वाचं वसन्तः सानन्दं प्रतिवचनं दातुमुद्यतोऽभवत् परन्तु श्रोतुकामोऽधिकं न किञ्चिदभणत् । नलिनी तु यथापूर्वं चिन्तयितुं प्रावर्त्तत । सा तु वसन्तं तस्य घृणितान्वयस्य तथाऽभिधेयस्य च त्यागायाऽऽदिशत् । "अन्वयं नामधेयञ्च शक्यते चेत् परित्यक्तुं तर्हि त्वयाऽहं सर्वथा लभ्ये"ति । एतत्प्रणयगर्भवचनानि शुश्रुवान् वसन्तो नातः परं स्थातुमशक्नोत्तस्या अदत्त्वा प्रतिवचनम् । वसन्तो नलिनीलपितानि प्रत्यक्षमिव तथा काल्पनिकञ्च मन्यमानः 'प्रणय' इति नाम्ना पराभिमतनाम्ना वाह्वानायाऽऽदिदेश । वसन्ताभिधानं तुभ्यं न रोचते चेत्तर्हि त्यक्तवसन्ताभिधानोऽस्म्यहमतः परमिति । अभ्युद्यानं स्वरं निशम्य कस्यचिन्नरस्य सा विविग्ना सञ्जाता ।

सहसा ज्ञाततत्प्रणयविपयोऽन्धकारपिहितविग्रहजनो हि को नाम भवेदिति बभूवालं सा प्रथममेव नावधारयितुम्। इत्थं कथयत्येव तस्मिन्नश्रुतवसन्तशतवाक्यापि नलिनी स्वरेणाञ्जसा प्रणयिन्याः श्रवणशक्तेः प्रखरत्वात्तं 'वसन्त' इत्यज्ञासीत्।

फलवाटिकोल्लङ्घनजातव्यसनेन तमनुयुक्तवती। यतो दृश्यते चेत् स्वेन केनचित्तर्हि विक्रमसेनतनयत्वात्तस्य जीवितसंशयो भविष्यति। "हन्त! तवाकरुणदृष्टेर्नाधिकभीतिर्जायते मे तेपामवस्कन्दनात्। प्रसन्ननयनयोर्नयसि चेद् गोचरत्वं मां तर्हि तृणाय मन्येऽहं तेपामाक्रमणम्। तेषां वैराचरणेन जीवितावशेषो वरम्, न पुनस्त्वत्प्रणयविनाकृतख्यातगर्हणजोवितधारणम्" इति प्रत्युवाच वसन्तः।

"कस्यानुशासनेन त्वमित आयात" इति नलिन्युवाच। "प्रेम्णा चालितोऽहम्। त्वच्चेत् पारेमहोदध्यस्थास्यस्तर्हि त्वत्प्रतीकाशपण्यद्रव्यहरणायाहं पारावारतरणमकरिष्यमि"ति प्रत्यभापत वसन्तः। एतच्छृण्वती व्रीडारुणमुखश्रीः सञ्जाता नलिनी वसन्तानुपलक्षिता। "साऽनिच्छया प्रथितानुरागा जातेति मनसि चिन्तयाञ्चकार। सा चेत् प्रत्याहरित्तुं स्वभणितानि शक्ताऽभविष्यत्, दृष्टा तर्ह्यभविष्यत्। परन्तु तदसम्भवम्। नूनं सा प्रमना अभविष्यत् प्रणयिनश्चेद् गृहीतकृत्रिमगम्भीराकृतिर्दूरे विन्यवेशयिष्यदुताहो बुद्धिमन्नारीणां रीत्या भ्रूभङ्गं व्यधास्यदाहोस्वित् काक्षेणानादरेणैक्षिष्यत।

इतरा नार्यः प्रथमं प्रणयिनस्तासां कर्कशगिरा प्रत्यादिशन्ति। येषु गच्छन्त्यतिभूमिं तासामनुरागस्तेभ्य आत्मानं प्रतिष्ठापयन्ति। शालीनतयाऽनादरमिषेण वा प्रणयिनीप्रणयलाभो हि दुरापमिति प्रणयिनो बोधयति। कस्यचिद्वस्तुनो ह्यागमक्लेशस्तद्वस्तुनो महार्घत्वं सूचयति। नाविद्यत तस्यास्तु नलिन्याः प्रणयापह्नवोपायः कश्चित्। मनसाऽप्यधृष्यवसन्तो नलिनीमुखनिःसृतप्रणयगर्भवचनानि अश्रौषीत्। अतोऽभिनवावस्थापन्ननलिनी सकपटं प्रागुक्तगिरां समर्थनमकार्षीत्। "कान्त वसन्त" इति नाम्ना साजुहाव। मधुरायते खलु नामधेयमतर्पणमपि प्रेम्णा।

"प्रकटितप्रणयत्वाद् मां लघुचेतसं तथा विगुणां मास्म मंस्था" इति वसन्तमनुरुद्धवती नलिनी। "प्रणयप्रकटनं दोषायैव सम्पद्यते चेत्तर्हि तद्यामिन्या आकस्मिकवृत्तस्य दोषो हि यस्यां तस्या मनसो भावः साश्चर्यं प्रकाशतां गतः।

मदाचरणं त्वां प्रत्यबला ज्ञातिरीत्यानतिविचाराधीनमपि पिशुनमतिभ्यो वनिताभ्यः कूटत्रपावतीभ्यश्चाहं विश्रब्धतमेति प्रतिपादयिष्यामि नलिनीत्याददे। नलिनीसङ्काशप्रतीक्ष्यवरवर्णिनीमधिकृत्यासम्मार्हभावेन मनसि मे केनचित् पदं न लब्धमिति दिवा शपथं शप्स्यमानं निवर्त्य शपथस्याकरणायान्वरौत्सीत्। वसन्तं प्राप्य प्रमुदितचित्ताप्यतिदुःसाहसिके निरतिशयोपदेशहीने तथातर्कितोपपन्ने चाङ्गीकारे नाविन्दत तस्याः कश्चिद्दर्पस्तद्रजन्याम्। अन्योऽन्यप्रणयशपथविनिमयाय तामनुनिनाय वसन्तः। करिष्यतेऽनुरोधं वसन्ताय दृढहृदया संवृत्तेति प्रतिवचनं प्रत्यपद्यत नलिनी। [श्रुतानि वसन्तेन नलिनीहृदयभाषितानीत्यर्थः]। पुनः प्रणयसुखानुभवाय सा प्रागुक्तानि प्रत्याहार्य प्रणयदित्सायाः प्रेम्णाश्चाऽसीमत्वाच्च जलनिधिवद्भूयः प्रणयस्याङ्गीकारमैच्छत्।

ईदृशे च परस्परानुव्यापारे सा पार्श्वशयधात्र्याहूतोदचलत्। सा धात्री नलिनीशयनकालोऽयमित्यमंस्त। यतः परिणतकल्पा हि शर्वरी सञ्जाता। नलिनी तु प्रत्यावृत्यावलम्बितं वसन्तं त्रिचतुराणि वचांसि व्याजहार। अयमेव तस्या वाचां निष्कर्ष आसीत् "तस्य प्रणयश्चेत् सम्मान्यो भवेत्, परिणयश्चेदस्य प्रणयस्य लक्ष्यो भवेत्तर्हि कश्चिद्दूतः प्रेषणीयः।" परिणयसमये सा तस्याः सर्वस्वं वसन्ताय दाता, स्वामिनश्च सर्वत्र जगतः सध्रीची भवितेति। इत्येवं स्थिरीकृतवत्यां नलिन्यां धात्र्या जोहूयमाना सा निशान्तं जगाम प्रत्यावरीवृत्यत च। यथा काचिद्बालिका तस्याः पक्षिणं सकृन्मुञ्चति, पुनस्तं क्षौमसूत्रेणाकर्षति तथा नलिन्या वसन्तत्यागे द्विधाभूतमासीन्मानसम्। वसन्तोऽपि तस्या अन्तिकादुच्चलितुं नाभिलाषी जातः। यतो रात्रौ सुसङ्गीतायतेऽन्योन्यवाक्छ्रवणं हि प्रण-

यिनोः। परन्तु परिशेषतः प्रभातकल्पायां यामवत्यां तौ सुखशिशयिष आरिरंसू च मिथ आपृच्छेताम्।

वसन्तस्ततप्रणयिनीगतचिन्ताशतैर्बध्यमानहृदयः सञ्जातः। स ईदृक् सुखसमागमचिन्तायां न्यमाङ्क्षीद् यत् स्वगृहे गन्तव्येऽनन्तव्रतेन नाम केनचित्तापसेनाभ्यर्णाश्रमनिवासिना सार्धं साक्षात्कारं कर्त्तुमयासीत्। असौ धार्मिकस्तपोधनः प्रागेव विमुक्तशयन उपासनायां दत्तमना आसीत्। ईदृश्येत्र महति प्रत्यूषसि बहिर्वसन्तमालोक्य "विनिद्रेनानेन गमिता विगतत्रियामे"त्येवं तस्य विकल्प आसीत्।

यौवनसुलभप्रणयातिशयो हि तमजागारयदिति तस्य विकल्पो नाम। स्थाने नाभूत्तस्य विकल्पः प्रणयिनीमन्तरेण। यतः काञ्चनप्रभायाः कृते तस्य रात्रा अपि निकामं शयितव्यं नासीदिति सोऽवालुलोचे। यदा तु वसन्तस्तदन्तिकं नलिनीगततदभिनवप्रणयविषयं प्रकाशीकृतवान्, तस्मिन्नेवाह्नि च तयोर्विवाहकार्यसम्पादनाय तमनुरुरोध तदासौ धार्मिकस्तापसो वसन्तप्रणयस्येदमाकस्मिकं परिवर्त्तनं निर्वर्ण्य केनचिदसंस्तुतविस्मयेन हस्तनयनं समुदनीनमत्। यतो विदित आसीत्तापसेन खलु काञ्चनप्रभागतप्रणयो वसन्तस्य। वसन्तेन तदन्तिकं काञ्चनप्रभाया अवधीरणान्निपयस्यानुयोगः कृतः।

"यूनः प्रेम हि चेतसो न जायते परन्तु चक्षुर्भ्यामुत्पद्यत" इति सोऽव्रोचत्।

"मयि काञ्चनप्रभा नानुरक्ताऽपि तस्यां बद्धानुरागत्वाद् बहुशोऽहं त्वया न्यक्कृतोऽभूवमिति प्रत्यभाषत वसन्तः। 'नलिन्यहञ्च द्वावेव मिथोऽनुरक्ता'वित्यपि वसन्तेनोचे तापसः। तच्छ्रुत्वाऽनन्तव्रतः कथञ्चित्तमन्वमोदिष्ट।

# धर्ममीमांसा

[ निबन्धकः—श्रीगोपालकृष्ण-वेदान्ततीर्थः ]

ॐ नमः परमदेवतायै

चण्डीचरणजातेन गोपालकृष्णशर्मणा ।
यच्चण्डीचरणात् प्राप्तं तच्चण्डीचरणेऽर्पितम् ॥

तत्राऽऽदौ धर्ममीमांसायां विवेकाख्यायां प्रथमं धर्मशब्दार्थो व्याख्यायते । पदार्थानाम् इतरव्यवच्छेदकत्वापादको धर्मः । स च परस्परविभागेण विधायकत्वस्वरूपः । तदितरावृत्तित्वे सति तद्वृत्तित्वरूपो वा । यथाऽग्नेरौष्ण्यमपां शैत्यमित्यादि । धर्मश्च द्विविधः साधारणधर्मो विशिष्टधर्मश्चेति । तद् यथा गोः पुच्छशृङ्गादिमत्त्वं साधारणधर्मः मेषादावपि तत्सत्त्वात् । गलकम्बलवत्त्वञ्च विशिष्टधर्मः तदनन्यसाधारणत्वात् । मानवानाञ्च मानवत्वं विशिष्टो धर्मः । स च विलक्षणो विवेक इति प्रतिभाति । विलक्षणत्वञ्चात्र स्थूलशरीरोपाधिकजीवाश्रितत्वम् तेन गन्धर्वदेवतादौ नातिव्याप्तिः । तद्दृश्यविवेकस्यैव मानवानां विभाजकत्वात् मानवत्वे विधारकत्वाच्च । तथाहि "धृ"धातोः करणे "मनिच्" प्रत्यये धर्मशब्दस्य साधुत्वम् । भारतेऽपि "धारणाद्धर्ममित्याहुरि"त्यादिवाक्यात् करणे विहित एव धर्मशब्द इति प्रतिपादितम् । तथाच धारयत्यात्मानं येन स धर्मः इति धर्मशब्दार्थः । यद्यपि मानवानां विवेक एव विशिष्टो धर्मस्तथापि विवेकोत्पन्नमहिंसासत्यादिकमेव लक्षणया धर्मशब्देन व्यवहरन्ति प्रज्ञावन्तः ।

यद्यपि ब्राह्मणादीनां वर्णानां ब्रह्मचर्याद्याश्रमाणाञ्च धर्मवैशिष्ट्यं वर्त्तते तथापि सर्वेषामेव वर्णानाम् आश्रमिणाञ्च साधारणो धर्मोऽस्ति यः साधारणविवेकोत्पन्नः सर्वै रेवानुष्ठेयः । तेन वर्णधर्माणामाश्रमधर्माणाञ्च निर्देशात् प्राङ् मानवो धर्म ऋषिभिः प्रतिपादित उच्यते । अत्र मनुः—अहिंसा सत्यमस्तेयं

शौचमिन्द्रियनिग्रहः। एतत् सामासिकं धर्मं चातुर्वर्ण्येऽब्रवीन्मनुः ॥"

अहिंसा च हिंसात्यागः। "अथ मत्स्यघातो निषादानाम्" इत्यादिवाक्यात् येषां हिंसैव जीविकाहेतुत्वेनोपदिष्टा तेषामहिंसा कथं सम्भवति इति चेन्मैवम् तेषां हिंसाया जीविकात्वेऽपि तस्या न्यूनाधिकतया पापं जायत एव, सर्वथैव हिंसाया दोषजनकत्वात्। सति सम्भवे हिंसाविरहितं शास्त्राविरुद्धक्रत्वन्तरग्रहणं तेषां धर्मायैव भवति। सर्वमेतद् वैधहिंसाप्रकरणे स्फुटीभविष्यति। सामासिकमिति संक्षिपतः सर्ववर्णसर्वाश्रमसाधारणम्। विष्णुरपि—

क्षमा सत्यं दमः शौचं दानमिन्द्रियसंयमः।
अहिंसा गुरुशुश्रूषा तीर्थानुसरणं दया।
आर्जवं लोभशून्यत्वं देवब्राह्मणपूजनम्।
अनभ्यसूया च तथा सामान्यधर्म उच्यते।

इति। आर्जवं सरलता, गुणेषु दोषाविष्करणमभ्यसूया तदभावोऽनभ्यसूया, ननु अहिंसादीनां धर्मजनकत्वं सर्वैरेव साम्प्रदायिकैरङ्गीकृतम्। न चास्त्यत्र कश्चिद्विरोधो विवेकवतां देशभेदे कालभेदे वा। तत् कथं तदर्थं मीमांसाग्रन्थप्रणयने प्रचेष्टा भवतामिति। सत्यम्, अस्त्यत्रान्यत् प्रयोजनं मीमांसाग्रन्थप्रणयनस्य। यतो ये नाम मानवानां हिंसादयः साधारणधर्मा उक्तास्तत्र विरोधाभावेऽपि वर्णाश्रमलक्षणे विशिष्टधर्मे विभिन्नप्रवृत्तीनां तीर्थकराणामस्ति सहस्रशो विरोधः। तथाहि

न मांसभक्षणे दोषो न मद्ये न च मैथुने

इत्यादिमनुवाक्यात् मद्यपानस्य दोषाभावत्वकथनेऽपि

ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः

इत्यादिवाक्येन मद्यपानस्य महापातकत्वमुक्तम्। अहिंसा सत्यमस्तेयमित्यादि वाक्ये अहिंसायाः साधारणमानवधर्मत्वेऽपि "मत्स्यघातो निषादानाम्" इत्यादिवाक्येन निषादानां मत्स्यघातस्य जीविकात्वात् तेन तेषां पापं जायते न वेति सन्देहः। तथा वैधहिंसयापि पापमुत्पद्यते इति कैश्चित्

सिद्धान्तितम्। नैव जायते तस्या विधिबोधितत्वादिति केषाञ्चिन्मतम्। ततश्च सन्देहविरोधादिनिराकरणाय धर्मशास्त्रस्य मीमांसा कर्त्तव्येति नैषा व्यर्थप्रचेष्टेति।

---

# दत्ता

## चतुर्थः परिच्छेदः

चिरोज्झितं भूस्वामिनो भवनं विलासस्य तत्त्वावधायकतया संस्कारमनुभवदासीत्। कलिकातातोऽदृष्टपूर्वाणि प्रसाधनद्रव्याणि गोयानैः पूर्यमाणानि नित्यमागन्तुमुपाक्रामन। भूस्वामिन एकैव दुहिता स्वदेशं वस्तुमागमिष्यतीति प्रचरन्त्यामेव प्रवृत्तौ न केवलं कृष्णपुरे राधापुर-व्रजपुर-दीघडाप्रभृतीनामुभयतः पार्श्ववर्त्तिनां पञ्चसप्तानां ग्रामाणां मध्येऽपि महान् कोलाहलः पदमकरोत्। स्वत एव गृहपार्श्वे भूस्वामिनो वासश्चिरमेव जनानामप्रियस्ततश्च भूस्वामिनस्तत्रानवस्थानमेव प्रजानां परिचितमासीत्, अतो नवीना तस्य निवासवासना सर्वेषामेव समीपे कश्चिदनायाददनपेत उत्पात इव प्रत्यभात्। कर्मनिष्पादकस्य रासविहारिणः प्रबलेन शासनेन नासीत्तासां दुःखानां विरतिः, भूयश्च स भूस्वामिदुहितुः शुभागमनमुपलक्ष्य कान् नाम नवीनानुपद्रवान् स्रक्ष्यतीति तदिदं हट्टे क्षेत्रे घट्टे सर्वत्रैव एकस्या अमङ्गल्याया आलोचनाया विषयः समभवत्। परलोकवासी वृद्धो भूस्वामी वनमाली यावन्ति दिनानि जीवन्नवर्त्तते, तदा दुःखेष्वप्ययं सुखलव आसीत्—येन केनचित् प्रकारेण कलिकातायामुपेत्य तत्सकाशमुपसेदुषो नासीत् कस्यापि निष्फला प्रत्यावृत्तिरिति। परं भूस्वामिकन्यकाया नवीनं वय उष्णञ्च मस्तकम्, रासविहारिणः सुतेन समं 'विवाहस्य

जनश्रुतिरपि नासीद् ग्राममध्ये निगूढा। सा आङ्ग्लरमणीव म्लेच्छाचारा, अतोऽदूरभविष्यति काले रासविहारिणो दौरात्म्यं कल्पयतः कस्यापि मनसि क्रियदपि सुखं नासीत्,—यज्ञोपवीतं बिभ्रतो ब्राह्मणस्यापि न, तद्विहीनस्य शूद्रस्यापि न। एवं भयेन भावनया च प्रावृड् व्यतीता। शरदुद्गम एव कस्मिंश्चिन्मधुमये प्रभाते उच्चैस्तरेण 'ओयेलार'युगलेन वाहितं निरावरणं यानमधिरुह्य तरुणी भूस्वामिदुहिता शतशो नराणां सभयकौतूहलाया दृष्टेर्मध्यत इव हुगल्या बाष्पीयशकटावतरणस्थानात् पितृपितामहानां पुरातनं वासभवनमुपासीदत्।

वङ्गीयस्य कन्यका,—अष्टादशोनविंशानि वयांस्यतीतानि, तथापि विवाहो नासीत्,—सा सप्रकाशम् उपानहं पादत्राणञ्च परिधत्ते, खाद्याखाद्ये न विचारयति—इत्याद्याः कुत्सा ग्रामीणा गूढं प्रावर्त्तयन्, अथ च भूस्वामिनो दर्शनीयमुपादाय एकशो द्विशश्च समेत्य नानाविधानानन्दान् मङ्गलाभिलाषांश्च विज्ञापयन्तः प्रस्थिताः। इत्थमतिक्रामत्सु पञ्चषेषु दिनेष्वेकदा प्रातर्विजया 'चा'पानानन्तरं निम्नतलस्थे उपवेशनगृहे विलासमहोदयेन साकं वैषयिकीः कथाः कुर्वती स्थिता, भृत्यः समुपेत्य व्यज्ञापयत् —कोऽपि भद्रो जनः साक्षात्कारमिच्छति। विजयया प्रोक्तम्—अत्रानीयताम्।

एतानि कियन्तिचिद्दिनानि तस्या भद्राभद्राः प्रजा उपायनान्युपादाय यदा-तदा साक्षात् कर्त्तुमुपतिष्ठन्ते अतः सा प्रथमतः किञ्चन विशेषं नामन्यत किन्तु क्षणात् परं यो भद्रो जनो भृत्यस्य पश्चाद् गृहं प्राविशत् तं प्रति दृष्टिपातमात्रत एव विजया विस्मिता संवृत्ता। तस्य वयो मन्ये चतुर्विंशतिः पञ्चविंशतिर्वा भवेद्वर्षाणाम्। दीर्घकायः स न तु तदनुपाततो हृष्टपुष्टः, परं क्षीणकायः। उज्ज्वलगौरो वर्णः, श्मश्रु गुम्फश्च संस्कृते। पादयोश्चर्मोपानहौ, देहे अङ्गरक्षणी नास्ति, केवलं कस्यचित् स्थूलस्य प्रावरणस्यान्तरालाच्छुभ्रस्य यज्ञोपवीतस्य गुच्छो दृश्यते। स क्षुद्रमेकं नमस्कारं विधाय काञ्चनाऽऽसन्दिकामाकृष्योपाविशत्। इतः पूर्वं यः कोऽपि

भद्रो जनः साक्षात् कर्त्तुमागतवान्, स न केवलं दर्शनीं मुद्रामेव पाणौकृत्य प्राविशत् परं कुण्ठितकुण्ठित इव प्राविशत्। अस्य जनस्याऽऽचरणे तु कुण्ठाया लेशोऽपि नासीत्। तस्याऽऽगमनेन न केवलं विजयैव विस्मिता, विलासोऽपि नाल्पं व्यस्मयत। यद्यपि विलासस्य निवासो ग्रामान्तरमेव, तथापि एतद्दिश्याम् सर्वानेव भद्रजनानजानात् सः ; परमयं युवा तस्य सर्वथाऽपरिज्ञातः। आगन्तुर्भद्रजन एव प्रथमतो वाचं प्रावर्त्तयत्, तेनोक्तम्—मम मातुलः पूणगाङ्गुलिमहोदयो भवत्याः प्रतिवासी, पार्श्वतो भवनमेव तस्य। श्रुत्वाऽहं निर्वचनः सम्पन्नो यद् भवद्मा किल नास्य पितृपैतामहं दुर्गार्चनमस्मिन् संवत्सरे निरोद्धुमिष्यते। अस्य कोऽर्थः। उक्त्वा स विजयाया मुखं प्रति दृष्टिं न्यबध्नात्। प्रश्नेन, तस्य जिज्ञासाभङ्ग्या च विजया विस्मिता मनसि विरक्ता चाभूत्, परं न प्रत्युत्तरमकरोत्।

विलासस्तस्योत्तरमदात्। स रूक्षेण स्वरेणावदत्, भवान् किल तत एव मातुलगृह्यः सन् कलिं कर्त्तुमुपागतवान् ? परं केन साकमालप्यत इति न विस्मर्त्तव्यं भवता।

आगन्तुर्विहस्य दशनेन रसनां निरुध्याब्रूत, नाहं तत् प्रास्मरम् न च कलिं कर्त्तुं प्राप्तवान्, प्रत्युत वचस्यस्मिन् विश्वासो मे नाभवदिति सम्यग् ज्ञातुमुपागच्छम्।

विलासः परिहासभङ्ग्याऽकथयत्, कथं विश्वासो नाभवत् ?

आगन्तुरवदत्, उच्यतां कथं भविष्यति ? मुधैवात्मनः प्रतिवासिनो धर्मविश्वासे प्रहरिष्यतीत्यत्राविश्वास एव स्वाभाविकः।

धर्ममतमधिकृत्य तर्कवितर्कौ शैशवादेव विलासस्यात्युपादेयौ। स उत्साहात् प्रदीप्तः सन् गूढोपहासतरलेन कण्ठेनावदत्, भवता निरर्थकत्वे ज्ञात एव यदन्यस्य कस्यापि सविधे तस्यार्थो न भविष्यति, अथवा भवता धर्म इत्युक्त एव सर्वे तं शिरोधार्यं मंस्यन्ते इत्यस्य नास्ति कोऽप्यर्थः। पुत्तल्यर्चना नास्माकं धर्मस्तस्याः प्रतिषेधश्च न वयमन्याय्यं मन्यामहे।

भवतो मातुलः, तत्रापि न कापि विप्रतिपत्तिः, केवलं कानिचन पटहमृदङ्गकाः स्यात्यहोरात्रमस्याः कर्णसन्निधौ प्रक्रमायास्वास्थ्योत्पादनायामेवास्माकं विप्रतिपत्तिः।

आगन्तुः स्मित्वा प्रावदत्, न तावदहोरात्रं वाद्यते।' परं त्वस्मिन्नेवोत्सवे कश्चन कलकलो भवतीत्युक्त्वा विशिष्य विजयामुद्दिश्य प्रावोचत्, अथ भवेच्चेत् किञ्चन दौःस्थ्यं, भवतु नाम। मातृजातीया भवत्यः, एषामानन्दस्योपद्रवो भवत्या चेन्न सह्यते केन तर्हि सोढव्यः ?

विजया तथैव निरुत्तरा व्यराजत। विलासः सोत्प्रासं शुष्कहासं हसित्वाऽवदत्, भवता तु स्वकर्म छलेन साधयितुं पुत्रकन्ये उपमीकृते, श्रोतुमपि नारमणीयमभूत् परं पृच्छ्यते, भवान् स्वयमेव यदि माहम्मदीयो भूत्वा मातुलस्य कर्णाभ्यर्णे 'महर्रमं' प्रारप्स्यत अपि नाम तत्तेन शोभनममंस्यत। तन्नाम तद् भवतु, वादप्रतिवादयोर्नास्त्यस्माकमवसरः, यो हि नामाऽऽदेशस्तातपादैः प्रदत्तः स एवाव्याहतस्तिष्ठति। कलिकातातः स्वदेशमानीय व्यर्थं राशीभूतानां पटहमृदङ्गकास्यानां वादनेनास्याः कर्णयोर्मस्तकभक्षणं न वयमनुमोदिष्यामहे। कथमपि न।

तस्य असभ्यजनोचितेन नर्मभाषितेन उष्मणा आतिशय्येन चाऽऽगन्तुकस्य नेत्रयोर्दृष्टिः प्रखरा संवृत्ता। स विलासस्य मुखं प्रति नेत्रे निपात्याभिहितवान्, को हि नाम भवतः पिता कथंकारं च सोऽधिक्रियते प्रतिषेध इति न ममास्ति विदितम्, परं येयं भवता विचित्रा महर्रमस्योपमा समुपस्थापिता—तत्र श्रूयतामस्माभिर्यदीदं हिन्दूनां 'रसुनचौकी'त्वमनासादयदेव माहम्मदानां तस्यैव महर्रमस्य पटहवाद्यं समभविष्यत्तदा तेन भवता किमकरिष्यत ? तदिदं निरीहं स्वजातीयं प्रत्युपद्रवादन्यन्न किमपि।

सहसा विलास आसन्दिकामपास्य सोत्कम्पमुदतिष्ठत्। शोणनेत्रो भीषणेन कण्ठेनोच्चैरवोचत्, मम पितुर्विषये त्वया सावधानेन सताऽभिधातव्यम् इति त्वां ब्रवीमि, नोचेदधुनैवोपायान्तरेण शिक्षयिष्यामि कः सः, को वा तस्याधिकार इति।

चित्रीयमाणेनागन्तुकेन विलासस्य मुखं प्रति नेत्रे प्रणिहिते, परं भयस्य चिह्नमपि तस्य मुखे नालक्ष्यत, अलक्ष्यत च विजयाया मुखे। तस्या गृहमध्यमध्यासीनं तस्या एव कञ्चनातिथिं प्रत्येवंविधेनैकान्ततोऽशिष्टोचितेना-चरितेन तस्या मुखमण्डलं कोपलज्जाभ्यामारक्तमभूत्। आगन्तुर्मुहूर्त्तमात्रं विलासस्य मुखं प्रति दृष्टिं क्षिपन्नास्त, समनन्तरमेवैकान्ततस्तमुपेक्ष्य विजयां प्रति नेत्रे परावर्त्त्यावदत्, मम मातुलो न धनवान् जनः, तस्य देवार्चनायाः समारम्भोऽपि स्वल्प एव। तथापि भवत्या दरिद्रासु प्रजास्वयमेक एव सार्ववात्सरिक आनन्दोत्सवः। भवेदपि नाम भवत्याः किमप्यसौकर्यम्। परं तासामनुरोधेन किमियन्मात्रं भवत्या सोढुं न शक्ष्यते।

क्रोधेनोन्मत्तो विलासः सम्मुखस्थायां त्रिपद्यां प्रचण्डं मुष्ट्याघातं विधाय चीत्कारमारचयत्, नहि, न शक्ष्यते, शतकृत्वो [ब्रवीमि] नैव शक्ष्यते। कृपाञ्चन मूर्खकर्षकाणामुन्मत्ततां सोढुं न केऽपि भूम्यधिकारितां परिचाल-यति। तव वक्तव्यान्तरं न वर्त्तेत चेत्त्वमपसर,—मा नामास्माकं समय-मपार्थमपचिनु। उक्त्वा स हस्तेन द्वारमुपादिशत्। तस्यात्यन्तमुद्रिक्तया समुत्तप्ततया समागतो भद्रमुखः क्षणं मूढधीरिवासीत्। परं पितुः सका-शाद् विजया न निष्फलां शिक्षामध्यकरोत्। सा शान्तमचञ्चलञ्च विलासस्य मुखमालोक्यावदत्, भवतस्तातपादा मयि दुहितरीव स्निह्यन्तीति कृत्वा एतेषां देवार्चनां न्यषेधत्, परं मयोच्यते, भवतु नाम त्रिचतुराणि दिनानि कश्चन कोलाहलः—

वाक्यशेषमाक्षिप्यैव विलासस्तथैवोच्चस्वरेण प्रत्यवदत्—असहनीयः स कोलाहलः! भवत्या न ज्ञायते इत्येव—

विजया सहासवदनेनावोचत, कामं भवतु कोलाहलः,—न तु दिनत्रयं विना। अपि च भवता ममासौकर्यं चिन्त्यते परमुच्यताम् कलिकाता चेदभविष्यत्तदा किमकरिष्यद् भवान्? तत्राष्टौ प्रहरान् कर्णयोः समीपे केनापि खधूपे मुक्तेऽपि निःशब्दं सोढव्यमासीत्। उक्त्वा समागतं युवानं प्रत्यालोक्य हसन्ती प्राह स्म, भवतो मातुलो ज्ञाप्यताम्, तत्रभवान् प्रत्यब्द-

मिवास्मिन्नपि वर्षे पूजां विदधातु, मम बिन्दुमात्रापि विप्रतिपत्तिर्नास्ति।

समागतौ विलासक्षोभौ विस्मयवीतवाचौ विजयाया मुखमालोकयन्तावासाताम्।

आपृच्छे तावद्भवन्तमित्युक्त्वा विजया क्षुद्रमेकं नमस्कारमारचयत्। अपरिचितो भद्रलोकोऽप्यात्मानं पर्यवस्थापयन्नुदतिष्ठन् धन्यवादं प्रतिनमस्कारञ्च विधाय विलासायापि नमस्कारमेकं विज्ञाप्य शनैर्निरगात्। बाढं क्रुद्धो विलासो दिगन्तरे चक्षुषी परावर्त्य तमवाधीरयत्; परं द्वयोरेकोऽपि नाज्ञासीद् यदयमपरिचितो युवैव तेषां प्रधानतमस्याभियुक्तस्य पुत्रो नरेन्द्रनाथः।

# श्रीरामरहस्यम्

—:०:—

[ निबन्धकः—श्रीशरत्कमल-न्याय-स्मृतितीर्थः ]

( १ )

अथात्र श्रूयते—

"रमन्ते योगिनोऽनन्ते नित्यानन्दे चिदात्मनि।
इति रामपदेनासौ परं ब्रह्माभिधीयते॥"

श्रीरामपूर्वतापिन्युपनिषत्।६।

"योगिन"-श्चित्तवृत्तिनिरोधकारिणः, "अनन्ते" (१) "नित्ये" (२) "आनन्दे" (३) "चित्"स्वरूपे (४) "आत्मनि" (५) "रमन्ते" स्वरूपेण अवतिष्ठन्ते यत इति हेतो रामपदेन "परं ब्रह्म" एव "अभिधीयत" इत्यर्थः। एवञ्च श्रीरामः "अनन्तः" (१) "नित्यः" (२) "आनन्दः" (३) "चित्-स्वरूपः" (४) "आत्मा" (५) "परञ्च ब्रह्म (६) इति तत्त्वं पर्यवसितम्।

( २ )

अनन्तत्वमृचा व्याख्यातं यथा—

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्।
स भूमिं विश्वतो वृत्वाऽत्यतिष्ठद्दशाङ्गुलम्॥*

ऋग्वेदीयपुरुषसूक्तप्रथममन्त्रः।

अत्र सहस्रशब्दः अनन्तत्वोपलक्षकः, तथाच पुरुषस्य शिरआदीनि सर्वाणि अनन्तानि वेदितव्यानि। एतेन पुरुषस्य नामरूपमहिमादीनि

---

* "सर्वतः स्पृष्ट्वा" (१) "सर्वतः स्पृक्त्वा" (२) इत्यादिपाठान्तरं निपुणैः प्रणिधातव्यम्, वेदभेदेन मन्त्राणां पाठान्तरकारणमपि समाधानीयम्।

अनन्तानि भावनीयानि इत्युपदिष्टं भवति ; तादृशभावनया साधकस्य तत्-स्वरूपप्राप्तिर्भवत्येव,

"स यो ह वै तत् परमं ब्रह्म वेद ब्रह्मैव भवति"

अथर्ववेदीयमुण्डकोपनिषत् ।३।२।९।

इत्यादिश्रुतेः । "पुरुष" शब्देनापि—"अनन्तत्वं" व्याख्यातं वेदितव्यम्

"स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयः,

नैनेन किञ्चनानावृतं नैनेन किञ्चनासंवृतम्"

शुक्लयजुर्वेदीयबृहदारण्यकोपनिषत् ।२।५ १८

इत्यादिश्रुतेः । तथाच सान्तस्य सर्वासु पूर्षु अवस्थानासम्भवादनन्तत्वं सुव्यक्तमेव । "विश्वतो वृत्वा" इत्यनेनाप्यनन्तत्वं व्याख्यातम्, सान्तस्य विश्व-वरणासम्भवादिति प्रणिधातव्यम् । "सर्वतः स्पृत्वा" इत्येतस्मिन् पाठेऽप्यनन्तत्वम्, सान्तस्य सर्वस्पर्शाभावात् ।

उपनिषद्भिश्च—अनन्तत्वमेवं व्याख्यातम् , यथा—

(१) "इदं महद्भूतमनन्तमपारम्"—इत्यादि ।

(२) "सत्यं ज्ञानमनन्तं ब्रह्म"—इत्यादि ।

(३) "सर्वकामः सर्वरसः सर्वगन्धः सर्वकर्मा"—इत्यादि ।

छान्दोग्योपनिषत्

अत्र सर्वशब्देन अनन्तत्वं व्याख्यातमिति प्रणिधातव्यम् । अपि च श्रूयते—

(४) यथा सुदीप्तात् पावकाद् विस्फुलिङ्गाः
सहस्रशः प्रभवन्ते सरूपाः ।
तथाऽक्षराद् विविधाः सौम्य ! भावाः
प्रजायन्ते तत्र चैवापियन्ति ॥ इत्यादि

अथर्ववेदीयमुण्डकोपनिषत् ।२।१।१।

अत्र कार्याणां भावानामनन्तत्वात् कारणस्याक्षरस्यानन्तत्वमनुमेयम् । विविधत्वं नानाप्रकारत्वमनन्तत्वमिति फलितार्थः । तथा च एतत् सर्वं

श्रीराम एवेति प्रकृते विभावनीयम्। तदेवं मन्त्रब्राह्मणयोरैक्येन श्रीराम-स्यानेन्तत्वं व्याख्यातमित्यवधेयम् ॥*

"नित्ये—उत्पत्तिध्वंसरहिते त्रिकालाबाधिते, षड्भावविकारातीत इत्यर्थः। भावविकारानाह महर्षिर्वार्ष्यायणिर्यथा "जायते" (१) "अस्ति" (२) "वर्द्धते" (३) "विपरिणमते" (४) "अपक्षीयते" (५) "नश्यति" (६) इति।

---

* अत्रेदमवधातव्यम्—"न क्षरती"ति व्युत्पादनादक्षरशब्देन ब्रह्मैवोच्यते, तच्च प्रणववाच्यम्; तथाच श्रूयते—

(१) "सर्वे वेदा यत्पदमामनन्ति
तपांसि सर्वाणि च यद् वदन्ति।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति
तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत् ।।"

कृष्णयजुर्वेदीयकठोपनिषत् ।१।२।१५।

(२) "तस्मै स होवाच—एतद् वै सत्यकाम! परञ्चापरञ्च ब्रह्म यदोङ्कारः"—

अथर्ववेदीयप्रश्नोपनिषत् ।५।२।

(३) "एतद्ध्येवाक्षरं ब्रह्म एतदेवाक्षरं परम्।
एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥"

कठोपनिषत् ।१।२।१६।

स्मर्यते च

(१) "ॐ तत् सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः"

श्रीमद्भगवद्गीता ।१७।२३।

(२) "तस्य वाचकः प्रणवः"।

पातञ्जलदर्शने समाधिपादे २८ सूत्रम्

प्रकृते तु एतदक्षरं श्रीराम एवेति विभावनीयम् ॥

निरुक्ते उपोद्घातप्रकरणे भावविकारनिरूपणं द्रष्टव्यम् ।

तथाच श्रूयते—

"न जायते म्रियते वा विपश्चि-
न्नायं कुतश्चिन्न बभूव कश्चित ।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे ॥" इत्यादि

कृष्णयजुर्वेदीयकठोपनिषत् ।१।२।१८।

स्मर्यते च

"न जायते म्रियते वा कदाचि-
न्नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे ॥"

श्रीमद्भगवद्गीता ।२।२०।

तथाच कालातीते इति फलितम् । तदेतत् कालातीतं नित्यं वस्तु स्मरति महर्षिः पतञ्जलिः—

"स पूर्वेषामपि गुरुः कालेनानवच्छेदात् ।"

योगदर्शनम्, समाधिपादे—२७ सूत्रम् ।

"स" नित्यं वस्तु परमेश्वरः, "पूर्वेषा"मपि गुरूणां ब्रह्मादीनामपि गुरुः वेदशास्त्राद्युपदेष्टा इत्यर्थः । अत्रेयं श्रुतिर्मूलम्—

"यो ब्रह्माणं विदधाति पूर्वम्
यो वै वेदांश्च प्रहिणोति तस्मै"—इत्यादि

श्वेताश्वतरोपनिषत् ।६।१८।

ऋचाऽप्युक्तञ्चैतत्—

"यं यं कामये तं तमुग्रं कृणोमि
तं ब्रह्माणं तमृषिं तं सुमेधाम्"—इति

ऋग्वेदीयदेवीसूक्तपञ्चममन्त्रः । ऋग्वेदसंहिता—८।७।११।१

स्मरति च महर्षिर्व्यासः—

"तेने ब्रह्म हृदा य आदिकवये"—इत्यादि ।

श्रीमद्भागवते प्रथमश्लोकांशः

तथाच--

"क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वर" एव नित्यं वस्तु, "तत्र निरतिशयं सर्वज्ञत्वबीजम्" इत्यादि * सर्वं श्रीराम एव विभावनीयमिति प्रकृतम् ।

आनन्दे इति—"आनन्दं ब्रह्मेति व्यजाना"दिति श्रुतिः । तथाच "बृहत्त्वाद् बृंहणत्वाद् वा ब्रह्मैव आत्मा इत्यभिधीयते" इति ब्रह्मशब्दस्य व्युत्पादितत्वाद् ब्रह्मपदार्थो बृहन्—परममहान् सर्वगतो देहादीनां परिणमयिता आत्मस्वरूपश्च फलितः, तथाच आनन्दस्यापि ब्रह्मत्वाद् आत्मस्वरूपश्चेति विभावनीयम्, स एव श्रीराम इति प्रकृतम् । तथाच श्रीरामस्याऽऽनन्दस्वरूपत्वाच् श्रीरामोऽपि बृहन् परममहान् सर्वगतो देहादीनां परिणमयिता आत्मस्वरूपश्च इति रहस्यमुपासनीयम् ।

अपि च श्रूयते "आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन"—इत्यादि ।†। तथाहि "ब्रह्मण आनन्द" मिति "राहोः शिरः"(१) "सवितुर्भर्गः" (२) इत्यादिवदभेदे षष्ठी, एवञ्च ब्रह्माभिन्नमानन्दम्, आनन्दाभिन्नं वा ब्रह्म, "विद्वान्" जानन् "कुतश्चन" अपि कारणान्न "बिभेति"

---

* योगदर्शने समाधिपादे ईश्वरलक्षणसूत्राणि द्रष्टव्यानि । गीतोपनिषदोः पाठान्तरकारणमपि भावनीयम् ।

† तैत्तिरीयके ब्रह्मानन्दवल्ली (१) वेदान्तदर्शने आनन्दमयाधिकरणम् (२) बृहदारण्यकोपनिषदि ४।३।३२—३३ मन्त्रसन्दर्भौ (३) इत्येतानि सर्वाणि द्रष्टव्यानि ; तत्तच्छास्त्रदर्शनेन हि ब्रह्मण आनन्दरूपत्वं सुव्यक्तीभविष्यति । अपि चात्र "ब्रह्म नानन्दरूपम्, किन्तु आनन्दवत्"—इत्यादि द्वैतवादिनामनुभववैशिष्ट्यं प्रणिधातव्यम् ।

इत्यर्थः। एतेन आनन्दरूपस्य ब्रह्मणोऽभयत्वं व्याख्यातम्—"अभयं वै जनक! प्राप्तोऽसि" (क) "ब्रह्माभयं वै, ब्रह्माभयं वै" (ख) इत्यादि श्रुतेः। व्याख्यातञ्च आनन्द-स्वरूपेण पुरुषेण स्वयमेव –

"सकृदेव प्रपन्नाय तवास्मीति च याचते।
अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम॥"

वाल्मीकिरामायणे लङ्काकाण्डे—१८।३३।

अध्यात्मरामायणे लङ्काकाण्डे—३।१२।

"अभयं मे स्वरूपं शरणागतभक्तेभ्यः प्रकाशयामि" इत्यभिप्रायः।

'आनन्दं ब्रह्मणो विद्वान न बिभेति "कदाचन" ' इति पाठान्तरं श्रूयते, तथाच एतस्मिन पाठे "तादृशब्रह्मविदः कस्मिन्नपि काले भयं न भवति, तस्याभयाभिन्नब्रह्मस्वरूपत्वात्।"

अपि च श्रूयते –

(१) 'एषाऽस्य परम आनन्द एतस्यैवाऽऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति।" इत्यादि –

बृहदारण्यकोपनिषत्। ४।३।३२

(२) "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते:
आनन्देन जीवन्ति, आनन्दमभिसंविशन्ति" इत्यादि।

सूत्रितञ्चैतत्—शारीरके भगवता बादरायणेन
"आनन्दमयोऽभ्यासात्"—इत्यादिभिः।

वेदान्तदर्शनम्। १।१।१२-१९ सूत्राणि द्रष्टव्यानि।

तदेतत् सर्वं तैत्तिरीयके ब्रह्मानन्दवल्ल्या व्याख्यातमवगन्तव्यम्, पर्यवसितञ्च सर्वं श्रीराम इति प्रकृते विभावनीयम्।

"चित्स्वरूपे"—इत्यादि। तदेतच्चिद् वस्तु मातृरूपेण स्मृत्वा प्रणमन्ति

(२) "चितिरूपेण या कृत्स्नमेतद् व्याप्य स्थिता जगत्।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः॥ श्रीचण्डी ७८, ७९

इत्यादिमन्त्रोऽत्र द्रष्टव्यः।

(१) "या देवी सर्वभूतेषु चेतनेत्यभिधीयते ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥"

श्रीचण्डी ५।१७-१८-१९

अपि च एतदेव चिद्वस्तु श्रुतिभिः पुरुषत्वेन (१) विश्वव्यापित्वेन (२) अन्तर्यामित्वेन (३) आत्मत्वेन (४) अमृतत्वेन च (५) व्याख्यातम्। तथाच श्रुतिः—

(१) "स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयः
नैनेन किञ्चनानावृतं नैनेन किञ्चनासंवृतम्। इत्यादि

बृहदारण्यकोपनिषत् ।२।५।१८

अत्र पुरुषत्वं विश्वव्यापित्वं सुव्यक्तमेव। अपि च श्रूयते—

(२) यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरः, पृथिवी यं न वेद, पृथिवी यस्य शरीरम्, यः पृथिवीमन्तरो यमयति, एष त आत्मा अन्तर्याम्यमृतः।

(३) योऽप्सु तिष्ठन् अद्भ्योऽन्तरः, आपो यं न विदुः, आपो यस्य शरीरं, योऽपोऽन्तरो यमयति, एष त आत्मा अन्तर्याम्यमृतः।

(४) योऽग्नौ तिष्ठन् अग्नेरन्तरः, अग्निर्यं न वेद, अग्निर्यस्य शरीरम्, योऽग्निमन्तरो यमयति, एष त आत्मा अन्तर्याम्यमृतः।

(५) यो वायौ तिष्ठन् वायोरन्तरः, वायुर्यं न वेद, वायुर्यस्य शरीरम्, यो वायुमन्तरो यमयति एष त आत्मा अन्तर्याम्यमृतः।

(६) योऽन्तरिक्षे तिष्ठन् अन्तरिक्षादन्तरो यमन्तरिक्षं न वेद, यस्य अन्तरिक्षं शरीरम्, योऽन्तरिक्षमन्तरो यमयति, एष त आत्मा अन्तर्याम्यमृतः।

(७) यो दिवि तिष्ठन् दिवोऽन्तरः, यं द्यौर्न वेद, यस्य द्यौः शरीरम्, यो दिवमन्तरो यमयति एष त आत्मा अन्तर्याम्यमृतः।

(८) य आदित्ये तिष्ठन् आदित्यादन्तरः, यमादित्यो न वेद, यस्यादित्यः शरीरम्, य आदित्यमन्तरो यमयति एष त आत्मा अन्तर्याम्यमृतः।

(९) यो दिक्षु तिष्ठन् दिग्भ्योऽन्तरः, यं दिशो न विदुर्यस्य दिशः शरीरम्, यो दिशोऽन्तरो यमयति एष त आत्मा अन्तर्याम्यमृतः।

(१०) यश्चन्द्रतारके तिष्ठन् चन्द्रतारकादन्तरः, यं चन्द्रतारकं न वेद, यस्य चन्द्रतारकं शरीरम्, यश्चन्द्रतारकमन्तरो यमयति एष त आत्मा अन्तर्याम्यमृतः।

(११) य आकाशे तिष्ठन् आकाशादन्तरः, यमाकाशो न वेद, यस्याऽऽकाशः शरीरम्, य आकाशमन्तरो यमयति एष त आत्मा अन्तर्याम्यमृतः।

(१२) यस्तमसि तिष्ठन् तमसोऽन्तरः, यं तमो न वेद, यस्य तमः शरीरम्, यस्तमोऽन्तरो यमयति, एष त आत्मा अन्तर्याम्यमृतः।

(१३) यस्तेजसि तिष्ठन् तेजसोऽन्तरः, यं तेजो न वेद, यस्य तेजः शरीरम्, यस्तेजोऽन्तरो यमयति, एष त आत्मा अन्तर्याम्यमृतः।

इत्यधिदैवतम्। बृहदारण्यकोपनिषत् । ३।७।३—१४।

तथाच एतदेव चिद्वस्तु श्रीरामः सर्वासु देवतास्वन्तर्यामित्वेन विद्यते यतस्तत एव ताः सर्वा देवताः स्वाधिकारेषु चेष्टन्ते इति प्रकृते भावनीयम्। अतश्च "आत्मजन्मानः" (१) "कर्मजन्मानः" (२) इत्यादि महर्षि-यास्कदृष्ट-देवतालक्षणमत्र सुसङ्गतमिति प्रणिधातव्यम् ॥* (क्रमशः)

* यथा, अथ किमर्थमाश्वराः सन्तो देवता जायन्ते ? ७।८ "कर्म-जन्मानः" कर्मफलसिद्धये, लोकस्य अग्निवायुसूर्या जायन्ते, न हि एतेभ्य ऋते लोकस्य कर्मफलसिद्धिः स्यात्—विद्यमानमप्यैश्वर्यमैश्वर्यवति न प्रख्याति-मियादीशितव्यमर्थमप्रतीत्य, तस्मादैश्वर्यख्यापनाय जायन्ते।"

"कर्म्मफलसिद्धेय लोकमनुजिघृक्षन्तः कुतः पुनर्जायन्ते ? "आत्मजन्मानः" योऽसावेक आत्मा बहुधा स्तूयत इति—उपात्तसर्वमूर्त्तिः स्थितौ, उपरतसर्व-मूर्त्तिः प्रलये, भावाख्यः सन्मात्रः सर्गकाले षोढात्मानं विभज्य जगद्भावं बिभर्त्ति—तस्माज्जायन्ते इति "आत्मजन्मानः।"

वेदनिरुक्ते दैवतकाण्डे उद्धृतदेवतालक्षणभाष्यव्याख्यानं द्रष्टव्यम्

# कलिकाता ओरियेण्टाल सिरिज

१। युक्तिकल्पतरुः—महाराजश्रीभोजविरचितः। पण्डितश्रीईश्वरचन्द्रशास्त्रिसांख्य-वेदान्त-न्याय-दर्शनतीर्थेन संशोधितः। अत्र राजनीतिः, नगर-दुर्ग-नगरादिनिर्माणम्, छत्र-ध्वजचामरालङ्कारादिनिर्णयः, मणिरत्नायुधादिपरीक्षा, यान-नौका-यानादिलक्षणानि च सविशेषं निरूपितानीति तत्तद्विषयमनुसन्धित्सूनां महोपयोगीऽयं ग्रन्थः—२॥०

२। चाणक्यराजनीतिशास्त्रम्—विद्वर-जोहान फान् म्यानेन-कृताङ्गलभूमिका-समेतम्—॥।८०

३। मुक्ताफलम्—वोपदेवविरचितम् हेमाद्रिकृतटीकासहितम् वैष्णवानामत्युपादेयतया परिगृहीतं भागवततत्त्वरत्नमिदं डाः श्रीनरेन्द्रनाथ लाहा, पि-एच. डि., लिखितवङ्गदाङ्गल-भूमिकया समलङ्कृतम् खण्डद्वयात्मकम्—६

४। चाणक्यकथा—रविनर्तकविरचिता। विशाखदत्तकृत-मुद्राराक्षसवर्णितादिनीव कथा सुललितपद्यमयी (द्वितीयाङ्कमात्रमस्ति)—१

५। वक्रोक्तिजीवितम्—श्रीराजानककुन्तकविरचितं स्वोपज्ञवृत्तिसमेतमतिप्रमाणभूत-मलङ्कारशास्त्रम्, डाः श्रीसुशीलकुमार दे, डि. लिट्. महोदयेन संशोधितम्—३॥०

६। पद्मपुराणम्—स्वर्गखण्डस्य पञ्चाध्यायात्मकः शकुन्तलोपाख्यानम् पातालखण्डस्यैका-दशाध्यायात्मक-रघुवंशवर्णनञ्चात्र वङ्गदेशीयप्राचीनहस्तलिखितमादर्शमाश्रित्य संशोधितमध्यापक-श्रीहरदत्तशर्मणा सुदृढाङ्गलभाषामयभूमिकायां प्रमाणीकृतञ्च कालिदासीयशकुन्तला-रघुवंशयोर्बीजभूतत्वं पद्मपुराणस्य—२

७। जयमङ्गला—श्रीशङ्कराचार्यविरचिता। ईश्वरकृष्णकृतसांख्यसप्ततिग्रन्थस्य टीकेयं श्रीहरदत्तशर्मणा संशोधिता—२

८। योगचिन्तामणिः—श्रीशिवानन्दसरस्वतीकृतिरतिप्राचीनो ग्रन्थोऽयं योगशास्त्र-स्याधिरिति शक्यते वक्तुम्—३

৯। ব্রহ্মসূত্রম্—শ্রীমদ্ভাগবতভাষ্যসমেতম্। "অর্থোঽয়ং ব্রহ্মসূত্রাণাং শ্রীমদ্ভাগবতাভিধঃ" ইতি গারুড়বচনস্য যাথার্থ্যং প্রদিদর্শয়িষতা পণ্ডিত-শ্রীহরিদাসবিদ্যাবাগীশেনাত্র শ্রীমদ্ভাগবতগ্রন্থাদ্ধৃতা গ্রন্থাংশব্রহ্মসূত্রভাষ্যতয়া নিরূপিতাঃ, ব্রহ্মসূত্রাণি চ বঙ্গভাষয়া বিশেষেণ ব্যাখ্যাতানি—২॥০

प्राप्तिस्थानम्—

कलिकाता ओरियेण्टाल बुक एजेन्सी

९ पञ्चानन घोष लेन, कलिकाता।